## वास्तु-शास्त्राचार्याः

(i) पौराणिकाः भृगुरत्रिर्वशिष्ठश्च विश्वकर्मा मयस्तथा।
नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः॥
म० पु० ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च।
अ० २५२ वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती॥
अष्टादशैते विख्याताः शिल्पशास्त्रोपदेशकाः॥

(ii) तान्त्रिकाश्च

आगमापरनामानि तन्त्राणि शैव-शाक्त-वैष्णव-भेदानि त्रेधा भिद्यन्ते। शैवागमाः कापाल-कालमुख-पाशुपत-शैव-भेदेन चतुर्धा भवन्ति। तत्रापि चरमे काश्मीरशैवसिद्धान्तभेदेन द्विधा भिद्यन्ते।

शाक्तागमाः दक्षिणाचार-वामाचार-भेदेन द्विविधा भवन्ति। दक्षिणाचारः प्रायो वैदिक-मार्गानुसारी। वामाचारस्तु वैदिकमार्गपरिभ्रष्ट इति वदन्ति।

वैष्णवागमाश्च वैखानस-पञ्चरात्रभेदेन द्विविधा भवन्ति। उभयेऽपीमे विष्णुपारम्यं विष्णुपूजादिकं च प्राधान्येन प्रतिपादयन्ति।

वैखानस-पञ्चरात्रयोस्तारतम्यम् वैखानसप्रक्रियायां वैखानस-सूत्रिणां द्विजानामेवाधि-कारः। भगवान् वैखानसो हि आपस्तम्ब-बोधायनादिवत् यजुः-शाखानुसारी श्रौत-गृह्य-धर्म-सूत्राणां रचयिता। तदीयसूत्रेषु भगवतो नारायणस्य पूजां संग्रहेण प्रतिपादितामवलम्ब्य भृगुमरीच्यादयो महर्षयो विस्तरेण भगवत्पूजां प्रतिपादयिषवो विविधनामग्रन्थानरचयन् ते च भृगुसंहिता, मरीचिपटलः, आनन्दसंहितेत्यादिनाम्ना प्रथन्ते।

पाञ्चरात्रप्रक्रियायान्तु स्वार्थे गृहार्चायजने सर्वेषामधिकारः। परार्थे देवालययजने तु ये किल प्रसिद्धेषु देवालयेषु वंशपरम्परया दीक्षाविशेषपुरःसरं समाराधनेऽधिकृताः, तद्वंशजानामेव मुख्योऽधिकारः, अन्येषां तु गौणोऽधिकार इति संप्रदायः।

पाञ्चरात्रसंहितासंख्यापरिगणनम् एतच्छास्त्रसंबन्धिनः संहिताभेदाश्च पाद्ममार्कण्डेयकपि-ञ्जलभारद्वाजहयशीर्षसंहिताविष्णुतन्त्रादिषु बहुधा नामतो निर्दिश्यन्ते। ततः संगृह्य तन्नामानि तत्रभवता पण्डित श्री कृष्णमाचार्येण लक्ष्मीतन्त्रोपोद्घाते प्रस्तुतानि तत्रैव विभाव्यानीति दिक्।

## वास्तुशास्त्रस्य विस्तारः विषयाश्च

(अ) विस्तारः— भारतीय-वास्तुशास्त्र-नामके लेखकस्य हिन्दी-ग्रन्थे अवलकोनीयः—

अ—स्वातन्त्रिकः ब—सार्वभौमिकः दार्शनिको वा स—भौगोलिकः
य—खगोलीयः र—भौगर्भिकश्च पत्रांक—२३४-२४२

(ब) विषयाः

(i) विज्ञानात्मकाः

१. स० सू० अथ तेषु जयो नाम वाक्यं तद् विश्वकर्मणः।
३. १-६० श्रुत्वा कृताञ्जलिः प्राह स्निग्धगम्भीरया गिरा॥

ज्ञानैकनिधिरप्यस्मान् यद् सहायतया किल।
वृणोषि तेन न वयमात्मानं बहु मन्महे॥
तदिदानीं हितार्थे नः प्रजानामपि च प्रभो!
अप्रमेयप्रभावस्त्वं सर्वमाख्यातुमर्हसि॥
पूर्वमेकार्णवे जाते जगति प्रलयं गते।
महाभूतामरपुरीज्योतिषां कथमुद्भवः?
किमाकारा किमाधारा किंप्रमाणा च मेदिनी?
विस्तृतिः परिधिश्चास्या बाहुल्यमपि कीदृशम्?
उच्छ्रायव्यासदीर्घत्वैः कैः केऽस्यां कुलभूभृतः।
कति ख्यातानि वर्षाणि द्वीपा नद्योऽब्धयस्तथा॥
काः सूर्येन्दुग्रहर्क्षादिगतयश्च पृथक् पृथक्।
भूमेरुपरि किं चैषामन्योन्यं प्रोक्तमन्तरम्?
किमाधारं दिवि ज्योतिश्चक्रं भ्रमयते च कः?
लोके कथं महाभूतान्यूर्ध्वाधो बिभ्रति स्थितिम्?
युगधर्मव्यवस्थाभिः काश्चादौ लोकवृत्तयः?
कश्चादिमस्ततो राज्ञां प्रहाणां वर्णिनां कथम्?
कति देशाः कति भुवः पृथक्त्वेन निरूपिताः?
कार्यः क्व च कथं सन्निवेशो जनपदाश्रयः॥
व्यक्तचिह्नैः स्वनस्पर्शगन्धवर्णरसादिभिः?
काः शस्ता निन्दिताः काश्च पुराणामपि भूमयः?
कार्यं केन विधानेन भूभृत्पुरनिवेशनम्।
किं फलं सुनिविष्टेऽस्मिन् दुर्निविष्टे च किं पुनः?
कति प्रकारं दुर्गं च दुर्गकर्मक्रमश्च कः?
किमग्रपुरसंस्थानमनिन्द्यं किं च निन्दितम्।
कश्चात्रानुक्रमविधिः प्रमाणैरुपपादितः?
प्राकारगोपुराट्टालपरिखावप्रकर्म च
तमङ्गनिर्गमद्वारप्रतोल्यट्टालकादिभिः।
कीदृशः प्रविभागश्च रथ्याचत्वरवर्त्मभिः॥
भूमिप्रमाणसंस्थानं सीमा च क्षेत्रदिक्पथैः।
नगरग्रामखेटानां निवेशाः स्युः पृथक् पृथक्?
पुरस्याभ्यन्तरे पूर्वं कैर्द्रव्यावयवक्रमैः।
कस्मिन् स्थाने कथं कार्यं शक्रध्वजनिवेशनम्?
प्रतिसंवत्सरं तस्य नियुक्तस्य कथं पुनः।
हिताय नृपलोकानां विधातव्यो महोत्सवः?
गृहेषु केषु केष्वत्र कासु कासु ककुप्सु च।

भागैर्बाह्यान्तरैः कैः कैः कार्याः काः काश्च देवताः ?
कैः कैर्यानपरीवारवर्णरूपविभूषणैः।
कार्याः कैः कैः सुरा वस्त्रवयोवेषायुधध्वजैः॥
प्रमाणमितिसंस्थानसंख्यानोच्छ्रयलक्ष्मभिः।
प्रासादाः कस्य के वा स्युः सुरराजद्विजातिषु ?
प्राकारपरिखागुप्तं पुरे स्याद् गोपुरं क्व च।
युग्ममध्याम्बुवेश्मानि क्व च स्युः क्व महानसम् ?
कोषागारायुधस्थानभाण्डागारनिवेशनैः।
व्यायामनृत्तसंगीतस्नानधारागृहादिभिः॥
शय्यावासगृहप्रेक्षावेश्मादर्शगृहैः पृथक्।
क्रीडादोलालयारिष्टगृहान्तःपुरवेश्मभिः॥
विटङ्कभ्रमनिर्यूहकक्षासंयमनादिभिः।
अशोकवनिकाभिश्च लतामण्डपवेश्मभिः॥
वापीभिर्दारुगिरिभिश्चित्राभिः पुष्पवीथिभिः।
एतैर्विशेषैरन्यैश्च विचित्रैर्विपिनाश्रयैः॥
मानोन्मानक्रियायामद्रव्याकृतिविनिर्मितः।
निकेतननिवेशः स्याद् राज्ञां भागाश्रितः कथम् ?
पुरोधःसैन्यभूश्रेष्ठदैवचिन्तकमन्त्रिणाम्।
कं कं च भागं प्राप्य स्युर्निवेशा नृपवेश्मनः ?
पुरे स्युर्दिक्षु भागेषु पदभागेषु केषु च।
विप्रराजन्यविट्शूद्रास्तज्जैरन्तरजैः समम् ?
तथा कृषितुलाशिल्पकलापण्योपजीविनः।
हिंसाश्रिताश्च पुरुषा निवेश्याः स्युः कथं क्व च ?
निवेशाः कीदृशाश्चैषां कियन्तो वा भवन्ति ते ?
शस्यन्ते केन वा केषां कैः प्रवेशजलभ्रमैः ?
धिष्ण्यमाद्यं कतिविधं द्रव्याण्याद्यानि कानि वा ?
हेतुरेषां च सर्वेषां स्याच्च कीदृगनुक्रमः ?
भजन्ते योगमन्योन्यं कानि द्रव्याणि कैः सह ?
कानि योगं न गच्छन्ति कैर्वा कः क्व वसेत् पुमान् ?
इष्टिकाकर्म किं चेष्टं कीर्तिता कतिधा च भूः ?
परिकर्मक्रमस्तासां वह्न्यम्बुपवनैश्च कः ?
गुरुवर्णिध्वजोर्वीशतद्भृत्यप्रतिमा (:?) पुराम्।
वृक्षाः के के प्रशस्ताः स्युर्गृहार्थे के च गर्हिताः ?
तच्छेदस्रावसंभूतं शब्ददिक्पातगर्भजम्।
विज्ञायते कथं कर्तृकारकादिशुभाशुभम् ?

प्रमाणं तक्षणच्छेदैः शोधितानां कथं भवेत्?
आहृत्य स्थापनं पूर्वं दारूणां स्थानके क्व च?
सामान्यतोऽखिलानां काः काश्च जातेर्विशेषतः।
प्रशस्तैर्लक्षणैर्युक्ता भूमयः परिकीर्तिताः?
शल्योद्धारविधिः कीदृक् कीदृशं भूमिकर्म च।
दिग्ग्रहः सूत्रणं चाधिवासनं च कथं भवेत्?
प्रमाणं मूलपादस्य शिलान्यासे च को विधिः।
विभज्यते कथं वेश्म शालालिन्दविभाजनैः?
मानानि कानि भित्तीनां पीठानामुच्छ्रयाश्च के।
कथं तानि विकल्प्यानि वर्णानां मेखलादिभिः?
समस्तकानां स्तम्भानां द्वारस्तम्भासनैः सह।
नागवीथ्युपधानानां समं कण्ठविनिर्गमैः॥
जयन्तीसङ्ग्रहतुलाकार्याणां वास्तुनोऽपि च।
कीदृशं फलकानां च प्रमाणं परिकीर्तितम्॥
स्वमानात् सर्ववर्णानां तलोच्छ्रायास्तु कीदृशाः।
का गवाक्षकपोतालिवेदिकाजालकक्रियाः ?
स्थूणा निसृष्टिकोत्सूका मृगा (ल्योःल्यु) पतुलास्तथा।
सान्ताः प्राणिशिरोवंशाः किंप्रमाणाः प्रकीर्तिताः?
छाद्योदयाः कियन्तः स्युर्वृत्तच्छाद्यक्रमश्च कः।
व्यस्ताणां खण्डवृत्तानां लुपानां च क्रियाः कथम्?
सीमालिन्दशिर (स्वा?स्वा) सां कीदृशी चावलम्बना।
कतिप्रकाराः प्रासादशिरसां च विकल्पनाः?
यच्चान्यदेवमादि स्यात् प्रासादभवनादिषु।
द्रव्यकाष्ठकलासञ्ज्ञि प्रमाणं तस्य कीदृशम्?
शालालिन्दप्रमाणानि चतुःशालेषु धामसु।
ज्यायोमध्यकनीयस्सु भूपाभिः काष्ठकल्पना॥
एकद्वित्रिचतुःशालान्येषां संयोगतोपि च।
कथं कति च वेश्मानि कल्प्यन्ते प्रविभागशः?
कथं च षोडशचतुःषष्ट्येकाशीतयः शतम्।
संविभागाः पदानां स्युः कथमत्रामरस्थितिः?
आद्यो नवपदो वास्तुरन्त्यः साहस्रिकः कथम्।
अङ्गप्रत्यङ्गभागेषु केषु केषु क्व तस्थुषः?
कथमेते सुराः सर्वे वास्तोरस्य व्यवस्थिताः।
एतद्वंशशिरश्चक्षुः कुक्षिहृन्मूर्धमर्मसु?
जायेत पीडा द्रव्येषु सन्निविष्टेषु कस्य का।

वास्त्वारम्भप्रवेशेषु, यात्रायां स्थापनेषु च ॥
दूतस्वप्ननिमित्ताद्यैः कथं ज्ञेयं शुभाशुभम् ?
दारुक्रियासु चित्रेषु तथा लेप्यक्रियासु च ?
योज्यं किं किमयोज्यं च किं भूपभवनादिषु ।
हस्तस्य लक्षणं मानसंज्ञा वै जायते कथम् ?
किं हव्येष्वग्निलक्ष्म स्यात् किं च निर्युक्तलक्षणम् ?
अनुक्रमेण वर्णानां वलिकर्म च कीदृशम् ?
विधेयं विधिना केन भवने च प्रवेशनम् ?
पतिते स्फुटिते जीर्णे प्लुष्टे वज्राशनिक्षते ॥
निमग्नभग्ननिर्भिन्नप्रशीर्णेषु च वास्तुषु ।
मधुवल्मीकसंभूतौ प्रविरूढे च दारुणि ॥
जायते किं फलं कुत्र प्रायश्चित्तेन को विधिः ?
इत्येवमादिकमनेकविधं विधानं वेश्मोपगं च पृथगाश्रयसंभृतं च ।
अस्मास्वनल्पकरुणार्द्रितचित्तवृत्तिर्व्याख्यातुमर्हसि समस्तमनुक्रमेण ।

२. अ० पु० २. १–३१

सृष्टिकौतूहलं देव उत्पत्तिर्भूतधातुभिः ।
ब्रह्माण्डं च कथं प्रोक्तं केन संख्याप्रमाणतः ?
कया युक्त्या समुत्पन्नं वर्द्धितं केन हेतुना ।
विकासः केन संजातः कैराधारैश्च धार्यते ?
धरायाः केचिदाधारा आकाशस्य कथं विदुः ।
के च मेर्वादयः शैलाः कैराधारैः कुलाचलाः ?
किं धरित्र्याः प्रमाणं च सप्तद्वीपा वसुन्धरा ?
समुद्राश्च कथं प्रोक्ता वनोपवनकाननम् ?
द्वीपद्वीपेषु क्षेत्राणां प्रमाणानि कथं विदुः ।
जम्बूद्वीपस्य मध्ये तु नव क्षेत्राणि कानि च ?
उत्तमं भारतं क्षेत्रं तत्प्रमाणं च ख्यातु मे ।
स्वेदाण्डोर्ध्वजरायुजो भूतग्रामः कथंचन ?
को धर्मः कुत्र क्षेत्रेषु रम्यकादौ वदेद्भवान् ?
ये देशा भारते क्षेत्रे आश्रमा ग्रामसंख्यया ॥
को धर्मः कुत्र देशे तु भरतक्षेत्रमध्यतः ।
कृतत्रेताद्वापरे तु चतुर्थे वा कलौ युगे ॥
युगान्ते च कथं धर्मो युगरूपानुदेवताः ।
धर्मः कृतयुगादीनां द्विजदेवयज्ञादयः ॥
कश्च धर्मः कथं कीर्तिर्द्विजदेवालयादितः ।
आलयः सर्वसत्त्वानां वेश्महर्म्यप्रसाधनम् ?
वास्तूत्पत्तिः कथं तात देवादेश्च निघण्टुकम् ।

एकपादादिकं वास्तु यावत्पदसहस्रकम् ॥
नर्मोपमर्मवंशाश्च रेखाषट्कसंध्यादिकम् ।
वज्रत्रिशूललाङ्गलं हस्तसूत्रादिपञ्चकम् ॥
बलिकर्मविधिं ब्रूहि वास्तुपादनिवासिनाम् ।
विद्यात् स्थानानि सर्वाणि प्रासादभवनादितः ॥
हस्तलक्षणमानं च देवतापादसंभवम् ।
मानोन्मानप्रमाणं च सर्वकर्मादिकारणम् ॥
सूत्रधारो हि जानीयाद्वर्णकं रुतमेव च ।
भूपरीक्षां शल्योद्धारं कीलिकारोपणादिकम् ॥
वर्णगन्धरसास्वादप्लवादिभूमिलक्षणम् ।
दीपवर्त्तिप्राग्विशुद्धिं दिशां च साधनादिकम् ॥
प्रस्तारक्रमसूत्रं च राजधान्याः पुरादिकम् ।
पुरग्रामनगराद्यं खेटं कूटं च कर्वटम् ॥
पुरप्राकारपरिखाप्रतोलीमार्गगोपुरम् ।
वेश्मानि राजवेश्मानि सभां शालां गजाश्वयोः ॥
सूत्रपातविधिं ज्ञात्वा द्रव्यादेश्चापि लक्षणम् ।
ज्योतिषे केवलं ज्ञानं स्त्रीपुरुषादिलक्षणम् ॥
प्रासादप्रतिमालिङ्गजगतीपीठमण्डपान् ।
प्रासादान् विविधाकारान् वैराज्यकुलसम्भवान् ॥
अष्टजातिक्रमच्छन्दो देशानुरूपसूत्रणे ।
रेखाश्च विविधास्तत्र प्रासादे शिखरे मताः ॥
घण्टाकलशध्वजानां प्रमाणं सृष्टिसम्भवम् ।
प्रतिष्ठा सप्तधा ख्याता कूर्माद्या च ध्वजान्तगा ॥
प्रासादे गर्भद्वारे च देवतानामनुक्रमः ।
द्वारदृष्टिपदस्थानं दिग्द्वारं च कथञ्चन ॥
द्वारलक्षणं प्रोक्तव्यं दारुकर्मण्यारुहे(त्मके) ।
सिंहकर्णकपोतालीनिर्यूहच्छाद्यकं लुमम् ॥
वितानानि विचित्राणि क्षिप्तान्युत्क्षिप्तकानि च ।
पद्मकं नाभिच्छन्दं च सभामार्गं मन्दारकम् ॥
प्रतिमालक्ष्मस्थानानि दृष्टिस्थानादिकं तथा ।
भृत्यचारप्रभेदाश्च स्वस्वयानादिकं तथा ॥
तालप्रस्तारगीताद्यं वादित्रैः स्याच्चतुर्विधम् ।
चित्रपट्टप्रभेदाश्च रेखाचित्रसमुद्भवाः ॥
वर्णरूपरसवृत्तिभावानुभावकोद्भवाः ।
शुद्धाशुद्धानि चित्राणि पत्राणि पत्र एव (?) च ॥

शालभञ्जी प्रतीचारी लास्यताण्डवकादिकम्।
भूषणानि विचित्राणि देवासुरनृणां किल॥
छत्रं सिंहासनं शय्यां यानानि चायुधानि च।
वेदिकानानलङ्कारं रत्नधातूद्भवं तथा॥
एतत्सर्वं प्रसादेन कथय स्वयमीश्वर!
भक्तवत्सल देव त्वं प्रसादं कुरु मे प्रभो॥

३. मा०
१. ३–१६

मानोपकरणं चादौ शिल्प(लिप)लक्षणपूर्वकम्।
अथ वास्तुप्रकरणं भूपरीक्षाविधिं तथा॥
भूसंग्रहस्ततः प्रोक्त शङ्कुस्थापनलक्षणम्।
देवादीनां स्थापनाय पदविन्यासलक्षणम्॥
बलिकर्मविधिं चैव ग्रामादीनां च लक्षणम्।
नगरीलक्षणं चैव भूमिलम्बविधानकम्॥
गर्भन्यासविधिं चैव चोपपीठस्य लक्षणम्।
अधिष्ठानविधिं चैव पादमानस्य लक्षणम्॥
प्रस्तरस्य विधिं चैव लक्षणं सन्धिकर्मणः।
विमानलक्षणं चैवमेकभूम्याश्च लक्षणम्॥
द्वितलस्य विधिं चैव त्रितलस्य विधानकम्।
चतुस्तलविधिं चैव पञ्चभूम्याश्च लक्षणम्॥
षट्सप्ततलकं चैवमष्टभूनवभूमिकम्।
दशभूमिविधानं च रुद्रभूमिविधानकम्॥
तलं द्वादशकं चैव प्राकाराणां च लक्षणम्।
परिखालक्षणं चैव गोपुराणां च लक्षणम्॥
मण्डपस्य विधानं च शालानां चैव लक्षणम्।
विन्यासश्च गृहस्याथ गृहप्रवेशलक्षणम्॥
द्वारस्थानविधिं चैव द्वारमानस्य लक्षणम्।
राजहर्म्यविधिं चैव राज्याङ्गस्य तु लक्षणम्॥
भूपतेर्लक्षणं चैव यानादेरथ लक्षणम्।
शयनस्य लक्षणं चैव सिंहासनलक्षणम्॥
? तोरणं(णस्य)मध्यरङ्गस्य कल्पवृक्षस्य लक्षणम्।
अभिषेकलक्षणं चव सर्वभूषणलक्षणम्॥
ब्रह्मादीनां त्रिमूर्तेश्च लक्षणं लिङ्गलक्षणम्।
पीठस्य लक्षणं चैव शक्तीनां लक्षणं तथा॥
बौद्धस्य जैनिकानां च लक्षणं मुनिलक्षणम्।
यक्षविद्याधरादीनां लक्षणं भक्तलक्षणम्।
ब्रह्मादीनां च देवानां तत्तद्वाहनलक्षणम्।

लक्षणं प्रतिमानां चोत्तमदशतालस्य च ।
स्त्रीमानाय मध्यमस्य दशतालस्य लक्षणम् ।
प्रलम्बलक्षणं चैव मधूच्छिष्टविधानकम् ॥
तथा च लक्ष्यते सर्वसङ्गदोषविधानकम् ।
नयनोन्मीलनं चैव लक्षणं वक्ष्यते क्रमात् ॥

४. मय०
१.२-११

तैतिलानां मनुष्याणां वस्त्वादीनां सुखोदयम् ।
प्राज्ञो मुनिर्मयः कर्ता सर्वेषां वस्तुलक्षणम् ॥
आदौ वस्तुप्रकारं च भूपरीक्षा परिग्रहम् ।
मानोपकरणं चैव शङ्कुस्थापनमार्गकम् ॥
सपदं स्वरविन्यासं बलिकर्मविधिं तथा ।
ग्रामादीनां च विन्यासं लक्षणं नगरादिषु ॥
भूलम्बस्य विधानं च गर्भविन्यासलक्षणम् ।
उपपीठविधिं चैवाधिष्ठानानां तु लक्षणम् ॥
स्तम्भानां लक्षणं चैव प्रस्तरस्य विधिक्रमम् ।
सन्धिकर्मविधानं च शिखराणां तु लक्षणम् ॥
एकभूमिविधानं च द्वितलस्य तु लक्षणम् ।
त्रितलस्य विधानं च चतुर्भूम्यादिलक्षणम् ॥
ससारं परिवाराणां गोपुराणां तु लक्षणम् ।
मण्डपादिविधिं चैव शालानां चैव लक्षणम् ॥
गृहविन्यासमार्गं च गृहवेशनमेव च ।
राजवेश्मविधानं च द्वारविन्यासलक्षणम् ॥
यानानां शयनानां च लक्षणं लिङ्गलक्षणम् ।
पीठस्य लक्षणं सम्यगनुकर्मविधिं तथा ॥
प्रतिमालक्षणं देवदेवीनां मानलक्षणम् ।
चक्षुरुन्मीलनं चैव संक्षिप्याह यथाक्रमम् ॥

५. शिल्प०
१.८-२८

आचार्यलक्षणं पूर्वं मानसाधनलक्षणम् ।
पश्चाद् (भूलक्षणं चैव) भूपरिग्रहमेव च ॥
ग्रामादीनां लक्षणं च पदविन्यासलक्षणम् ।
वास्तुपूजाक्रमं तत्र ग्रामादेर्द्वारलक्षणम् ॥
तत्र देवालयस्थान परं खातविधिक्रमम् ।
शङ्कुना दिक्परिज्ञानं गर्भन्यासस्ततः परम् ॥
वास्तु (कर्म) विधानं च साधनानां च लक्षणम् ।
हर्म्यादिलक्षणं पश्चाद् पश्चात् प्रासादलक्षणम् ॥
पादाधिष्ठाननियममुपपीठस्य लक्षणम् ।
प्रास्तरलक्षणं नाललक्षणं भित्तिलक्षणम् ॥

+ + + भित्तिभूषाः सर्वस्वलक्षणम् (?) ।
द्वाराणां लक्षणं पश्चात् तोरणानां च लक्षणम् ॥
जालस्य लक्षणं कूटगोष्ठादीनां च लक्षणम् ।
पञ्जराचरणं वृत्तस्फुटितस्य तु लक्षणम् ॥
पश्चात् कुम्भलताचारमुत्तराणां च लक्षणम् ।
प्रस्तरस्य गलस्यापि शिखरस्य च लक्षणम् ॥
लुपाया लक्षणं पश्चात्तत्र मूर्ध्नेष्टकाविधिम् ।
नासिकालक्षणं स्तूपिलक्षणं शान्तिकादिकम् ॥
वृत्ताष्टाश्रषडश्रादिप्रासादाकारलक्षणम् ।
मण्डपस्य विधिः पञ्चप्राकारं गोपुरं ततः ॥
परिवारविधिं पश्चान्महापीठस्य लक्षणम् ।
ध्वजस्य लक्षणं सन्धिलक्षणं चित्रलक्षणम् ॥
प्रत्येकं क्रमशः प्रोक्ताः पूर्वभागे भवन्त्विति ।
षट्चत्वारिंशदध्यायाः शिल्परत्नाख्यसंग्रहे ॥
अथातो बिम्बलिङ्गादि साधनस्वीकृतिक्रमः ।
लिङ्गस्य लक्षणं पश्चाल्लिङ्गलक्षणलक्षणम् ॥
बिम्बायामविधिः पश्चादुत्तमं दशतालकम् ।
मध्यमं दशतालं चाप्यधमं दशतालकम् ॥
उत्तमं नवतालं च मध्यमं नवतालकम् ।
अधमं नवतालं चात्यष्टतालस्य लक्षणम् ॥
सप्ततालं च षट्तालं पञ्चतालं तथैव च ।
चतुस्तालं ततः पश्चाद् भूषायुधविधिः पुनः ॥
शूलसंस्थापनं पश्चाद् रज्जुबन्धक्रमं पुनः ।
मृल्लेपनं तथा देवीलक्षणं वाहलक्षणम् ॥
(कि)ञ्च शैवप्रकरणं वैष्णवं शक्तिमार्गजम् ।
ध्यानं च बिम्बदोषं च पीठलक्षणमेव च ॥
प्रतिष्ठायाः क्रमं पश्चाज्जीर्णोद्धारः ततः परम् ।
लिङ्गप्रासादकरणं मानुषालयलक्षणम् ॥
कूपप्रश्नं ततः पश्चादासनादिपरिच्छदम् ।
कर्मकारजनस्यास्य वेलनाकल्पनक्रमम् ॥
छुरिकालक्षणं पञ्चत्रिंशदस्ताध्यायसमन्वितम् ।
भवेत् तदुत्तरं भागं सज्जनेभ्यो नमो नमः ॥

(ii) कलात्मका:—

तथाहि चतुर्विधं स्थापत्यम् (स्थपतिलक्षणमित्यर्थः)
अष्टाङ्गं स्थापत्यं च—

स्थपति-लक्षणम्—

१. स० सू० ४४. १–२२ (स्थपतिलक्षणम्)

स्थापत्यमुच्यतेऽस्माभिरिदानीं प्रक्रमागतम्।
ज्ञातेन येन ज्ञायन्ते स्थपतीनां गुणागुणाः॥
शास्त्रं कर्म तथा प्रज्ञा शीलं च क्रिययान्वितम्।
लक्ष्यलक्षणयुक्तार्थशास्त्रनिष्ठो नरो भवेत्॥
सामुद्रं गणितं चैव ज्यौतिषं छन्द एव च।
सिराज्ञानं तथा शिल्पं यन्त्रकर्मविधिस्तथा॥
एतान्यङ्गानि जानीयाद् वास्तुशास्त्रस्य बुद्धिमान्।
शास्त्रानुसारेणाभ्युद्य लक्षणानि च लक्षयेत्॥
प्रसिद्धशास्त्रदृष्टान्तैर्वास्तुज्ञानं प्रसाधयेत्।
वास्तुनः ससिरावंशैर्मर्मवेधैः सुनिश्चितैः॥
वास्तुद्वारक्षणान् भूयः सर्वान् जानाति शास्त्रतः।
यस्तु शास्त्रमविज्ञाय प्रयोक्ता स्थपतिर्भवेत्॥
हन्तव्यः स स्वयं राज्ञा मृत्युवद् राजहिंसकः।
मिथ्याज्ञानादहङ्कारी शास्त्रे चैवाकृतश्रमः॥
अकालमृत्युर्लोकस्य विचरेद् वसुधातले।
यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः॥
स मुह्यति क्रियाकाले दृष्ट्वा भीरुरिवाहवम्।
केवलं कर्म यो वेत्ति शास्त्रार्थं नाधिगच्छति॥
सोऽचक्षुरिव नीयेत विवशोऽन्येन वर्त्मसु।
कर्म वास्तुविधेः स्थानं मानमुन्मानमेव च॥
चैत्रजा(दि?नि)च कर्माणि लुमालेखा(च?श्च)तुर्दश।
च(त्वा?तु)रो गण्डिकाच्छेदान् वृत्तच्छेदेषु सप्तसु॥
सुश्लिष्टं सन्धिसन्धानैरधरोत्तरसंयुतम्।
बाह्यरेखान्वितं शुद्धं यो जानाति स कर्मवित्॥
शास्त्रकर्मसमर्थोऽपि स्थपतिः प्रज्ञया विना।
फलेयुः कर्मभिरन्याभिः (?) स्यान्निर्मद इव द्विपः॥
प्रत्युत्पन्नमतिर्यः स्याद् वाह (तः? कः) स्थपतिस्तथा।
कर्मकाले न मुह्येत स प्रज्ञानेनोपबृंहितः॥
अप्रज्ञेयं दुरालोकं गूढार्थं बहुविस्तरम्।
प्रज्ञापोतं समारुह्य प्राज्ञो वास्तुनिरं(धि)तरेत्॥
ज्ञानवांश्च तथा वाग्मी कर्मस्वपि च निष्ठितः।
एवं युक्तोपि न श्रेयान् यदि शीलविवर्जितः॥
रोषाद् द्वेषात् तथा लोभान्मोहाद् रागात् तथैव च।

अन्यचिन्त्यत्वमायाति दुःशीलानामविक्षयात्(?) ॥
शीलवान् पूजितो लोके शीलवान् साधुसम्मतः ।
शीलवान् सर्वकर्माहः शीलवान् प्रियदर्शनः ॥
शीलाधाने परं यत्नमा(धि?ति)ष्ठेत् स्थपतिः सदा ।
ततः कर्माणि सिध्यन्ति जनयन्ति शुभानि च ॥
तथाचाष्टविधं कर्म ज्ञेयं स्थपतिना सदा ।
आलेख्यं लेख्यजातं च दारुकर्मचयस्तथा ॥
पाषाणसिद्धहेम्नां च शिल्पं कर्म तथैव च ।
एभिर्गुणैः समायुक्तः स्थपतिर्याति पूज्यताम् ॥
स्थापत्यमङ्गैरिदमष्टभिर्यश्चतुर्विधं वेत्ति विशुद्धबुद्धिः ।
स शिल्पिनां संसदि लब्धपूजः परां प्रतिष्ठां लभते चिरायुः ॥

२. अ० पृ० ४०. १–२४ (सूत्रधारलक्षणम्)

शृणु वत्स! यथान्यायं सूत्रधारस्य लक्षणम् ।
शास्त्रज्ञः कुशलो दक्षो वास्तुविद्याविबोधकः ॥
सूत्रधारो महाप्राज्ञः षट्कर्मसु निरन्तरम् ।
यो नित्यं त्यमरत्त्वं सामुष्टोपि तदालयम् ? ॥
माधुर्यवांस्तथालापे वास्तुविद्यादिकौशलः ।
ज्ञानचक्षुः सुहृदयः प्रारम्भादिरुजापहः ॥
हस्तलाघवसम्पन्नो धाव्यचित्रादिकौशलः ।
चक्षुःप्रत्यक्षकृच्चैव ह्यदृष्टं ज्यौतिषो यथा ॥
ग्रन्थार्थगुणसम्पृक्तो वास्तुमर्मादिबोधकः ।
आत्ममत्युद्भवं रूपं ससूत्रं स च कर्मणा ॥
सूत्रधारोपचारोर्थं ? वास्तुशास्त्रादिबोधनम् ।
भुवनकोशविज्ञानं प्रमाणं सूत्रकर्मणि ॥
समुद्रोपकण्ठदेशमहाशैलाश्रमादिकम् ।
भूमिभागैरनेकैश्च परीक्षा सूत्रकर्मणाम् ॥
मर्मोपमर्मवेधाश्च वंशोपवंशकानि च ।
सन्धिरेखाषट्कशतं लाङ्गलं पञ्चकादिकम् ॥
षण्मर्मवेधा विज्ञेया वास्तुदेहसमुद्भवाः ।
निघण्टुं देवतानां च जानीयात् सूत्रकर्मणि ॥
नगरग्रामखेटाद्यं वास्तुवेदसमुद्भवम् ।
कूटकर्वटकूप्यादि ज्ञायते सूत्रकर्मणा ॥
पुरप्राकारपरिखाप्रतोलीमार्गगोपुरम् ।
गृहं च राजवेश्माद्यं ज्ञायते सूत्रकर्मणा ॥
प्रासादप्रतिमालिङ्गजगतीपीठमण्डपम् ।
वेदीकुण्डं स्रुचा चैव ज्ञायते सूत्रकर्मणा ॥

रेखानां विविधाकारा प्रासादशिखरोत्तमाः।
घण्टाकलशध्वजाद्यं ज्ञायते सूत्रकर्मणा॥
द्वारशाखाविधिं ज्ञात्वा मूलप्रासादच्छन्दजम् ?
द्वारपालविधिश्चैव ज्ञायते सूत्रकर्मणा॥
द्वारदृष्टिपदस्थानं तथाग्रे वाहनादिकम्।
दृष्टिस्थानं चान्तरं तु ज्ञायते सूत्रकर्मणा॥
लक्षणं च द्वारविधिं शिवलिङ्गेषु सर्वतः।
मानोन्मानप्रमाणं च ज्ञायते सूत्रकर्मणा॥
वितानानि विचित्राणि क्षिप्तान्युत्क्षिप्तकानि च।
मन्दारसभापद्मानि ज्ञायन्ते सूत्रकर्मणा॥
वितानानां संवरणा घण्टाकूटसमाकुलाः।
सिंहसङ्घटनाकीर्णा ज्ञायन्ते सूत्रकर्मणा॥
शुक्लाम्बरधरः सूत्रस्वस्थचित्तः समाहितः।
पूजापरिग्रहं दद्यादात्मचिन्तस्तु दैवते॥
तुष्टिदानं ततो दद्यात्सर्वकर्मसु वै तथा।
सुभृत्यांस्तोषयेत्तत्र कर्मकारापरैः सह॥
तोषितैः सर्वसूत्रैश्च गुरुतः क्षेममाप्नुयात्।
निर्विघ्नं च भवेत्तत्र सर्वकामफलं भवेत्॥
सिद्धिं विनायकं चादौ क्षेत्रपालांस्ततोऽर्चयेत्।
पूजयेदुक्तविधिना योगिनीश्च कुमारिकाः॥
भूपरिग्रहणं प्रोक्तं शुभं धात्रीपरीक्षणम्।
पूर्वं त्वेवं प्रवक्ष्यामि शृणु चैकाग्रमानसः॥

३. वा० वि० स्थपति-लक्षणम्— १. १२-२०

अथ वक्ष्यामि सङ्क्षेपाच्छिल्पिनां लक्षणं पृथक्।
स्थपतिः स्थापनार्हः स्यात् सर्वशास्त्र विशारदः॥
नहीनाङ्गोऽतिरिक्ताङ्गो धार्मिकस्तु दयापरः।
अमात्सर्योऽनसूयश्च तान्त्रिकस्त्वभिजातवान्॥
गणितज्ञः पुराणज्ञ आनन्दात्माप्यलुब्धकः।
चित्रज्ञः सर्वदेशज्ञः सत्यवादी जितेन्द्रियः॥
अरोगी चाप्रमादी च सप्तव्यसनवर्जितः।
सुनामा दृढबन्धुश्च वास्तुविद्याब्धिपारगः॥
स्थपतेस्तस्य शिष्यो वा सूत्रग्राही सुतोऽथवा।
स्थपत्याज्ञानुसारी च सर्वकर्मविशारदः॥
सूत्रदण्डप्रमाणज्ञो मानोन्मानप्रमाणवित्।
तद्वितानां तक्षकेणाप्युपर्युपरि युक्तितः॥
वृद्धिकृद् वर्धकिः प्रोक्तः सूत्रग्राहानुगः सदा।

तक्षणात् स्थूलसूक्ष्माणां तक्षकः स तु कीर्तितः ॥
मृत्कर्मज्ञो गुणी शक्तः सर्वकर्मस्वतन्त्रकः ।
गुरुभक्तः सदा हृष्टः स्थपत्याद्यनुगः सदा ॥
एभि विना न सर्वेषां कर्तुं कर्म न शक्यते ।
तस्मादेषां सदा पूज्यं स्थपत्यादिचतुष्टयम् ॥

४. मान०
२.१-१७
(शिल्पिकोदयः)

शिल्पिनां लक्षणं वक्ष्ये मानोपकरण(णं)क्रमात् ।
परःशिवसकाशाद्धि ब्रह्मा इ(चे)न्द्रोऽपि लोककृत् ॥
स महाविश्वकर्मेति ई(त्वी)श्वरेणैव कीर्तितः ।
स एवायं विश्वकर्मा ब्रह्माण्डं सृजते मुहुः ॥
विश्वकर्मा चतुर्वर्ण(पूर्ववक्त्रादीनि चत्वारि) नाम(मानि) वक्ष्ये पृथक् पृथक् ?
विश्वभूरिति नामैतत्पूर्ववक्त्रं प्रकीर्तितम् ॥
दक्षिणे विश्वविद्वक्त्रं विश्वस्त(स्य)श्च तथोत्तरे ।
पश्चिमे विश्वस्रष्ट्राख्यं वक्त्रमेवं चतुर्विधम् ॥
एतेभ्यः प्रथमो जातो विश्वकर्मा चतुष्टयः ।
पूर्वानने विश्वकर्मा जातो दक्षिणे मयः ॥
उत्तरस्य मुखे त्वष्टा पश्चिमे तु मनुः स्मृतः ।
उपयेमे विश्वकर्मा इ(त्वि)न्द्रस्य तनयां तदा ॥
मयः सुरेन्द्रतनयामुपयेमे क्रमात्ततः ।
त्वष्टा वैश्रवणसुतामुपयेमे त्वनन्तरम् ॥
मनुर्नलस्य तनयामुपयेमे तु तुर्यकम्(कः) ।
विश्वकर्माख्यनाम्नोस्य(इत्यस्य) पुत्रः स्थपतिरुच्यते ॥
मयस्य तनयः सूत्रग्राहीति परिकीर्तितः ।
त्वष्टुर्देव-ऋषेः पुत्रो वर्धकी(किरि)ति प्रकथ्यते ॥
मनोः पुत्रस्तक्षकः स्यात्स्थपत्यादिचतुष्टयम् ।
स्थपतिस्तु त्वतुर्येभ्यस्त्रिभ्यो गुरुरिति स्मृतः ॥
सूत्रग्राही गुरुर्द्वाभ्यां तुर्येभ्योऽद्य इति स्मृतः ।
तक्षकस्य गुरुर्नाम(म्ना) वर्धकी(किरि)ति प्रकीर्तितः ॥
स्थपतिः सर्वशास्त्रज्ञः सूत्रग्राहीति सूत्रदृक् ।
वर्धकी (किर्) मानकर्मज्ञः तक्षणात्तक्षकः स्मृतः ॥
स्थपतिः स्थापनायार्हः वेदविच्छास्त्रपारगः ।
स्थापनाधिपतिर्यस्मात्तस्मात्स्थपतिरुच्यते ॥
स्थपतेश्चाज्ञया सर्वे सूत्रग्राह्यादयः सदा ।
कुर्वन्ति शास्त्रदृष्टे(ष्टादेशे)न वास्तुवस्तु प्रयत्नतः ॥
स्थपत्यादिचतुर्वर्णाः शिल्पिभिः परिकीर्तिताः ।
आचार्यलक्षणैर्युक्तं(क्तः)स्थपतिर्नाम धीयते ॥

श्रुतज्ञः सूत्रग्राही च रेखाज्ञः शास्त्रवित्तमः।
विचारज्ञः श्रुतज्ञश्च चित्रकर्मज्ञ (ज्ञो)वर्धकी(किः)॥
तक्षकः कर्मवित्सभ्यो बलबन्धू(न्धु) दयापरः।

४. शिल्प०
(अ) आचार्यलक्षणम्
१. २९–३३

ग्रामादिकं वा नृगृहादिकं वा
वाप्यादिकं वा विबुधालयं वा।
यः कर्तुमिच्छत्यथ संवृतं ते-
न स्याद्गुरुशिल्पिरेतदर्थम् (?)॥
विप्रः कुलीनः कृतसंस्क्रियौघः
स्वाधीतवेदागमतत्त्ववेत्ता।
वर्णाश्रमाचारपरोऽधिदीक्षो
दक्षस्तपस्वी गुरुरास्तिकोऽस्तु॥
पूर्वं स्थपतिरेष्टव्यः शिल्पशास्त्रविशारदः।
तथैव शिल्पशास्त्रज्ञो युक्तः स्वाचार्यलक्षणैः॥
स्थापकोऽपि वृतः कर्त्रा वास्तुकर्म समाचरेत्।
ताभ्यामुभाभ्यां प्रारब्धं विमानं वान्यदेव वा॥
निष्पाद्यमासमाप्तेः स्यात् ताभ्यामेव हि नेतरैः।
तयोरभावे तत्पुत्रैः शिष्यैर्वा कर्मतत्परैः॥

(ब) शिल्पिलक्षणम्
१.३४–४१½

स्थपतिः स्थापनार्हः स्यात् सर्वशास्त्रविशारदः।
न हीनाङ्गोऽतिरिक्ताङ्गो धार्मिकस्तु दयापरः॥
अमात्सर्योऽनसूयश्च तान्त्रिकः स्वाभिजातवान्।
गणितज्ञः पुराणज्ञः सानन्दश्चाप्यलुब्धकः॥
चित्रज्ञः सर्वदेशज्ञः सत्यवादी जितेन्द्रियः।
अरोगी चाप्रमादी च सप्तव्यसनवर्जितः॥
सुनामा दृढबन्धुश्च वास्तुविद्याब्धिपारगः।
स्थपतेस्तस्य शिष्यो वा सूत्रग्राही सुतोऽथवा॥
स्थपत्याज्ञा(नधारी?नुरोधी) च सर्वकर्मविशारदः।
सूत्रदण्डप्रमाणज्ञो मानोन्मानप्रमाणवित्॥
तक्षणात् स्थूलसूक्ष्माणां तक्षकः स तु कीर्तितः।
मृत्कर्मज्ञो गुणी शक्तः सर्वकर्मस्वतन्त्रकः॥
गुरुभक्तः सदा हृष्टः स्थपत्याद्यनुगः सदा।
तक्षितानां तक्षकेणाप्युपर्युपरि युक्तितः॥
वृद्धिकृद् वर्धकिः प्रोक्तः सूत्रग्राह्यनुगः सदा।
एभिर्विनापि सर्वेषां कर्म कर्तुं न शक्यते॥
तस्मादेष सदा पूज्यः स्थपत्यादिचतुष्टयः॥

## अष्टाङ्गं स्थापत्यम्

स० सू०
४९.१-६

प्रोक्तं चतुर्धा स्थापत्यं वास्तुतत्त्वस्य सिद्धये।
ब्रूमस्तदेव चेदानीमङ्गैः संयुक्तमष्टभिः॥
तेष्वङ्गं प्रथमं प्रोक्तं वास्तुपुंसो विकल्पना।
पुरस्य विनिवेशस्तु द्वितीयं द्वारकर्म च॥
रथ्याविभागः प्राकारनिवेशोऽट्टालकस्य च।
विनिवेशः प्रतोलीनां विभागस्थानकानि च॥
प्रासादश्च तृतीयं स्याच्चतुर्थं तु ध्वजोच्छ्रितिः।
पञ्चमं नृपतेर्वेश्म स्थानान्तरविभक्ति च॥
चातुर्वर्ण्यविभागश्च गृहभागश्च षष्ठकम्।
सप्तमं यजमानस्य शालायां मानमीरितम्॥
यज्ञवेदीप्रमाणं च कोटिहोमविधिस्तथा।
अष्टमं राजशिविरनिवेशो दुर्गकर्म च॥
यो वेत्त्यङ्गान्यमून्यष्टौ सोऽत्र स्थपतिसत्तमः।
यशो मानं स लभते पूज्यते च नराधिपैः॥
अशास्त्रज्ञमकर्मज्ञं स्थपतिं यः प्रयोजयेत्।
न तस्य वास्तु सिध्येत सिद्धमप्यसुखावहम्॥
तस्मात् कर्म च शास्त्रं च यो वेत्ति द्वितयं नरः।
अष्टाङ्गमपि यो वेत्ति स राज्ञः स्थपतिर्भवेत्॥

## द्वितीयः पटलः

### मौलिकाधाराः—

१. दिङ्निर्णयः (शङ्कुस्थापनं च)
२. वास्तुपदानि
३. मानम्
४. आयादिषड्वर्गः
५. पताकादिच्छन्दांसि च

### दिङ्-निर्णयः

१. वि० वा० ३. १–२४

आदौ कालं परीक्षेत सर्वकार्यार्थसिद्धये।
कालो हि सर्वजीवानां शुभाशुभफलप्रदः॥
कालातिक्रमणे दोषो द्रव्यहानिश्च जायते।
देवानामपि देवीनां विप्रादीनां विशेषतः॥
प्रासादभवनारम्भे स्तम्भस्थापनकर्मणि।
द्वारस्थापनवेलायां भवनानां प्रवेशने॥
वापीतटाकनिर्माणे गोपुरारम्भकर्मणि।
विमानमण्डपारामगर्भगेहोद्धृतौ तथा॥
कालं शुभं परीक्षेत मङ्गलावाप्तिसाधकम्।
देशभेदेन कालोऽपि भिन्नतां प्रतिपद्यते॥
इष्टिकान्यसनं शस्तं शुभकाले विशेषतः।
तस्मात्सर्वप्रयत्नेन शुभं कालं न लङ्घयेत्॥
प्राचीं परीक्षयेत्सम्यक् सूर्यगत्यनुमानतः।
गृहीतस्थलके शङ्कुमवटे स्थापयेत्क्रमात्॥
खदिरस्तिन्दुको वापि क्षीरवृक्षसमुद्भवः।
शङ्कुः श्रेयस्करः प्रोक्तो द्वादशाङ्गुलमानभाक्॥
हस्तप्रमाणतो वापि द्विहस्तो देवमन्दिरे।
शङ्कोरुपरि मानस्य सूचिका सा शिखा मता॥
यत्र सा पतति व्यक्ता तत्स्थानं बिन्दुसंज्ञकम्।
शिल्पाचार्यवरैः शङ्कुस्थापनं कल्पयेद् बुधः॥
चक्राकारे नेमियुक्ते मण्डले शङ्कुभासुरे।
शङ्कुच्छायाप्रसारस्तु यत्र भाति सलक्षणः॥
तं प्रदेशं निरीक्ष्यैव प्राचीनिर्णयमादिशेत्।
उत्तरायणमासेषु दक्षिणायनगेष्वपि॥

कन्यायां वृषभे मासि यदि व्यक्ते दिवाकरे।
शङ्कुच्छाया मध्यगा स्यान्नहि पार्श्वे कदाचन॥
मेषस्थे वा मृगस्थे वा रवौ तु चतुरङ्गुला।
शङ्कुच्छाया भवेद्व्यक्ता दिशां निर्णयकारिणी॥
मकरस्थे रवौ शङ्कोश्छायाष्टाङ्गुलका भवेत्।
मिथुनस्थे रवौ शङ्कोश्छाया तु त्र्यङ्गुला मता॥
कुलीरस्थे रवौ शङ्कोश्छाया वेदाङ्गुला मता।
सिंहस्थे तु रवौ शङ्कोश्छाया वेदाङ्गुला मता॥
तुलास्थिते रवौ शङ्कोश्छाया तु द्व्यङ्गुला मता।
वृश्चिकस्थे रवौ शङ्कोश्छाया स्याच्चतुरङ्गुला॥
चापस्थिते रवौ शङ्कोश्छाया स्याच्च षडङ्गुला।
मीनस्थिते रवौ शङ्कोश्छाया स्याच्चतुरङ्गुला॥
इति द्वादशमासस्थे रवौ छाया स्फुटा भवेत्।
उत्तरायणमासेषु छाया दक्षिणगा भवेत्॥
दक्षिणायनमासेषु छाया चोत्तरगा भवेत्।
छायामानवशादेवमङ्गुलानि विसर्जयेत्॥
शिष्टच्छायाप्रसारेण सम्यक्प्राचीं समादिशेत्।
विन्ध्यस्य दक्षिणे देशेष्वेवं प्राचीविनिर्णयः॥
आर्यावर्तस्थदेशानां प्राचीनिर्णय उच्यते।
मकरादिचतुर्मासेष्वेवं छायाङ्गुला भवेत्॥
वृषभस्थे रवौ शङ्कोश्छाया तु चतुरङ्गुला।
मिथुनस्थे रवौ शङ्कोश्छाया स्याच्च षडङ्गुला॥
इति दक्षिणगा छाया प्राचीनिर्णयकारिणी।
कुलीरस्थे वृश्चिकस्थे रवौ छाया न विद्यते॥
सिंहस्थैकाङ्गुला प्रोक्ता कन्यास्थे द्व्यङ्गुला भवेत्।
तुलाचापस्थिते भानावङ्गुला सा प्रकीर्तिता॥
इति चोत्तरगाच्छाया प्राचीनिर्णयकारिणी।
ब्रह्मावर्तस्थदेशानां प्राचीनिर्णय उच्यते॥
मकरादिषु मासेषु त्रिपुच्छायाङ्गुला भवेत्।
मेषस्थे वृषभस्थे च छाया तु त्र्यङ्गुला मता॥
मिथुनस्थे झषस्थे च छाया पञ्चाङ्गुला मता।
मीनस्थे च क्वचिच्छाया न भवेदिति तान्त्रिकाः॥
कुलीरस्थे रवौ चापस्थिते च न हि सा स्फुटा।
सिंहकन्यास्थिते भानौ सा चतुष्पञ्चका मता॥
तुलास्थिते द्व्यङ्गुला स्यादितिच्छायाक्रमो भवेत्।

शङ्कुस्थापनवेलायां विप्रेभ्यो बहुदक्षिणाः ॥
मार्दङ्गिकैः स्वस्तिकैश्च जयशब्दश्शुभावहः ।
सूत्रप्रसारमानेन शुद्धां प्राचीं समाश्रयेत् ॥
पुरारम्भे गृहारम्भे गोपुरारम्भकर्मणि ।
गर्भगेहविमानादिसद्मास्तुषु शुभावहः ॥
शिल्पिनां माननं शस्तं हेमभूषादिभिश्शुभैः ।
स्थूपिस्थापनकाले च प्राकारस्थापने तथा ॥
प्रासादभवनारम्भे वापीकूपादिकेषु च ।
गृहप्रवेशकाले च स्वस्तिवोपश्शुभावहः ॥
दिशां कोणास्तु चत्वारो न शस्ता आयलक्षणे ।
तस्मात्सर्वप्रयत्नेन शुद्धां प्राचीं समाश्रयेत् ॥

२. अ० पृ० ६३.१६–२२

प्राचीमतः प्रवक्ष्यामि दिङ्मूढभ्रान्तिनाशिनीम् ।
सा च पञ्चविधा प्रोक्ता कथये यामनुक्रमात् ॥
दिनादौ मेषतुलयोः कृत्तिकाश्रवणोदये ।
चित्रास्वात्यन्तरे चैव शङ्कुच्छाया ध्रुवेषु च ॥
कृत्तिकोदये या प्राची सा प्राची श्रवणोदये ।
चित्रास्वात्यन्तरे प्राची तत्र सूत्रान्तरोत्तरा ॥
ध्रुवशङ्कूद्भवा प्राची सूत्रसूत्रान्तरोत्तरा ।
दिनादौ मेषतुलयोः सूर्यभुक्त्यैकमार्गतः ॥
स्यात्पलत्रयतो वृद्धिर्ह्रस्वे ह्रस्वं तु वर्धयेत् ।
ह्रासवृद्धीश्चर्तुदार्द्धमयनं दक्षिणोत्तरम् ॥
जलाग्रमस्तकभवा साधने स्यात् समक्षितिः ।
साधनीया क्षमा त्वेवं शङ्कुमूर्ध्वं च स्थापयेत् ॥
अमसिद्धाः समतला निर्व्रणा दोषवर्जिताः ।
द्वादशपर्वोद्भवाश्च शङ्कुच्छायाश्च पर्वभिः ॥
द्वादश दशाष्टाभिश्च त्रिभिर्वृत्तं क्षिप्ताङ्कितम् ।
शङ्कुच्छायस्त्रिगुणतो द्विपर्वयुक्तिकोत्तमाः ॥
परिधौ बाह्यवृत्तस्य व्यासे शङ्कुतुल्योत्तमा ।
कूलवंशपूर्वा छाया शङ्कुश्चरणाश्रितः ? ॥
छायाग्रे वृत्ततुल्या च छाया पूर्वापरोद्भवा ।
प्रवेशे निर्गमे छाया याति सूत्रं सदा भवेत् ॥
याम्योत्तरं सूत्रपाते मत्स्यमुखं पुच्छाग्रसूत्रे ? ।
याम्योत्तरोद्गतं सूत्रं विकर्णैः कर्णसाधनम् ॥
अथ रात्रौ ध्रुवं साध्यं ध्रुवाक्षा दक्षिणोत्तरम् ।
मण्डलोभयपक्षे च मध्ये स्थाप्यं त्रिदीपकम् ॥

एकसूत्रे यदा त्रीणि दीपशिखाग्रकाणि च ।
पूर्वसंस्थं ध्रुवं साध्यमपरस्थं च दोषकृत् ॥
शस्तं तु मीनपातैश्च पूर्वापरादिसाधनम् ।
विकर्णाकर्णगा साध्या ध्रुवशङ्कुप्राच्युद्भवः ॥

वा० राज० १. १०–११

प्राची मेषतुलारवेरुदयतः स्याद्वैष्णवे वह्निभे
चित्रास्वातिभमध्यगा निगदिता प्राची बुधैः पञ्चधा ।
प्रासादं भवनं करोति नगरं दिङ्मूढमर्थक्षयं
हर्म्ये देवगृहे पुरे च नितरामायुर्धनं दिङ्मुखे ॥
तारे मार्कटिके ध्रुवस्य समतां नीतेऽवलम्बे नते
दीपाग्रेण तदैक्यतश्च कथिता सूत्रेण सौम्या दिशा ।
शङ्कोर्नेत्रगुणो तु मण्डलवरे छायाद्वयान्मत्स्ययो-
र्जाता यत्र युतिस्तु शङ्कुतलतो याम्योत्तरे स्तः स्फुटे ॥

मनुष्या० २. १–६

यन्त्रेणावनतादिना च निपुणो यद्वाम्बुसम्पूरणे-
नोर्वी चारु समीकरोत्वथ दृढं शङ्कुं करार्धायतम् ।
मूले द्व्यङ्गुलविस्तृतं क्रमवशादग्रे तदर्धान्मित-
व्यासं वृत्ततरं सरोजमुकुलाकाराग्रमाकल्पयेत् ॥
शङ्कुदीर्घयुगसम्मितसूत्रेणाकलय्य परिवृत्य सुवृत्तम् ।
वृत्तमध्यमवधार्य सुसूक्ष्मं शङ्कुमत्र तु दृढं निवेशयेत् ॥
शङ्कुच्छायाग्रभागे त्ववहितहृदयो वृत्तलग्नेऽङ्कयित्वा
प्राह्णान्ते पश्चि (मस्यां?) मायां दिशि तदितरदिश्येवमेवापराह्णे ।
पाश्चात्त्येऽन्येद्युरप्यङ्कनमपि च विधायाङ्कयोरेतयोर-
प्यन्तर्भागत्रिभागे नयतु गतदिनाङ्कं तदेवेह सूक्ष्मम् ॥
पूर्वापरेद्युःप्रभवाङ्कयुग्ममेवं सुसूक्ष्मं परिकल्पितं यत् ।
तदङ्कयुग्माहितसूत्रमेव पूर्वापराशाप्रभवं सुसूक्ष्मम् ॥
एवं क्षेत्रस्य मध्ये सुविहितमिह यद् ब्रह्मसूत्रं तदाहु-
स्तन्मध्येऽन्योन्यमन्तर्गतमथ रचयेत् वृत्तयुग्मं च धीमान् ।
तद्योगात् तिर्यगुद्यज्झषजठरसुषुम्नाध्वना सूत्रमेकं
याम्योदग्गामि सूक्ष्मं रचयतु यमसूत्रं तदित्यामनन्ति ॥
तत्सूत्रद्वितयेऽथ दिक्षु चतसृष्वङ्कान् समं कल्पयि-
त्वाङ्कारोपितमध्यकानि सुसमं चत्वारि वृत्तानि च ।
सिध्यन्त्यत्र विदिक्षु वृत्तयुगलीयोगेन मत्स्याः शिवा-
ग्न्यग्रास्तद्गतसूत्रयुग्ममपि चात्राव्ययमाकल्पयेत् ॥
सूत्रे प्रागुदगग्रके क्षितितले कृत्वा चतुःखण्डिते
खण्डे कल्पयतु द्विजादिवसतिं शार्वेऽथवा नैरृते ।
क्षेत्रे विस्तृतिरस्ति चेत् पुनरपि श्रुत्यंशिते गृह्यते

शैवे नैऋतखण्डमेव निऋतौ शैवं शुभं चोभयोः ॥
धात्रीतलेऽद्ध्यंशिनि मानुषाख्यं गृहाभिवृद्धिप्रदमैशखण्डम् ।
देवाह्वयं नैऋतमिष्टदं स्यादुभे शुभे गेहविधौ नराणाम् ॥
आग्नेयखण्डं यमसंज्ञितं स्यान्मृतिप्रदं चाखिलवर्ज्यमेतत् ।
वायव्यमप्यासुरसंज्ञितत्वान्निन्द्यं विशां क्वापि च गृह्यते तत् ॥

५. मान० ६. १-६०

अथातः संप्रवक्ष्यामि शङ्कुस्थापनलक्षणम् ।
आदित्योदयकाले तु शङ्कुस्थापनमारभेत् ॥
उत्तरायणमासे तु दक्षिणायनगे (न ए) ऽथवा ।
शुक्लपक्षे यथा (ऽथवा) कृष्णपक्षे शुभतमे दिने ॥
पौर्णमीं(पूर्णिमां)चाप्यमावास्यां वर्जयेत्सुमुहूर्तके ।
प्रभाते स्थापयेच्छङ्कुमपराह्लात् (ह्णे) ततः स्थितम् ॥
स्थापनात्पूर्वदिवसे स्थलशुद्धिं प्रकारयेत् ।
ग्रामभूमध्यदेशे तु चतुरश्रं समन्ततः ॥
चतुर्हस्तप्रमाणेन विधतः सलिलस्थलम् ।
कृतमाल(लं) शमीशाखाचन्दनं रक्तचन्दनम् ॥
खदिरं तिन्तु(न्दु)कं चैव शङ्कुदारु प्रकीर्तिता (तम्) ।
श्वेतक्षीरिणि(णी)वृक्षं(क्षो)वा शुभदन्तमथापि(वा) ॥
शङ्क्वायामं तु हस्तं स्यान्मूलाग्रान्तं क्षयं क्रमात् ।
सुवृत्तं निर्व्रणं चैव छत्राकारं तदग्रकम् ॥
एवं तु चोत्तमं शङ्कुं मध्यमं तत्प्रवक्ष्यते ।
अष्टादशाङ्गुलायामं मूलतारं शराङ्गुलम् ॥
अग्रमेकाङ्गुलं तारं शेषं प्रागुक्तवन्नयेत् ।
कन्यसं द्वादशाङ्गुल्यं शङ्क्वायामं विशेषतः ॥
चतुरङ्गुलविस्तारं मूलमग्रं त्रयाङ्गुलम् ।
अथवायामसंमूले नाहमग्रे नवाङ्गुलम् ॥
शेषं पूर्ववदुद्दिष्टं स्वीकरीकृतभूतले ।
तन्मध्ये विन्दुतस्तन्नो शङ्क्वायामद्वयेन च ॥
भ्रामयेन्मण्डलं कुर्यात्तन्मध्ये शङ्कुमर्पयेत् ।
पूर्वाह्णे शङ्कुतश्छायां पश्चिमे मण्डलान्तकम् ॥
तत्रैव विन्दुसंज्ञाश्च कुर्यात्तु शिल्पि(ल्प)वित्तमः ।
(अ)परा शङ्कुतश्छायां पूर्वदिङ्मण्डलान्तके ॥
पूर्ववद्विन्दु(न्दुं)संस्थाप्य पश्चाच्छङ्कुं त्यजेत्ततः ।
शङ्क्वायामपदाधिक्यनत्र्यंशविभाजिते ॥
तस्यांशेन प्रपच्छायां त्यक्त्वा प्राचीं नयेत्ततः ।
कन्यावृषभमासौ च द्व(सयोर)पच्छाया न विद्यते ॥

मेषे च मिथुने चैव तुलासिंहचतुष्टये।
एव हि द्व्यङ्गुलं न्यस्तं वृश्चिकाषाढमीनयोः (नेषु)॥
चतुरङ्गुलं प्रकर्तव्यं धनुःकुम्भौ(म्भयोः)षडङ्गुलम्।
मकरेऽष्टाङ्गुलं प्रोक्त(क्ता)मव(प)च्छायां(या)विशेषतः॥
छायायां बिन्दुवामे(तु)दक्षिणे चोक्ताङ्गुलं न्यसेत्।
अङ्गुलान्ते तु यच्छुद्धं प्राचीसूत्रं प्रयोजयेत्॥
मकरादि(दौ) च षण्मासे छाया दक्षिणतो भवेत्।
कुलीरादि(दौ) च षण्मासे छाया चोत्तरतो दिशि॥
छायाया अभिमुखे प्रत्यग्वामे वामं न्यसेद्यते (न्यसेद्तः)।
पूर्वे च दक्षिणे नीत्वा प्रत्यग्वामाङ्गुलान्न्यसेत्॥
अपच्छायां त्यजेच्छिल्पी प्राक् प्रत्यक् सूत्र(त्रं)विन्यसेत्।
तत्सूत्रात्पूर्वदिग्देशे नीत्वा चोत्तरतो दिशि॥
एवं मीनविवृद्धिः स्यात्पुरतोऽङ्गुलमेव च।
तत्सूत्राद्दक्षिणे सौम्यं(म्ये) तस्य द्वारं प्रकल्पयेत्॥
मत्स्यपुच्छानने न्यस्तं सूत्रं स्याद्दक्षिणोत्तरम्।
मण्डलावधिदेशे तु नीत्वा सूत्रा(त्रम)ङ्गुलं न्यसेत्॥
मासानां पङ्क्तिपङ्क्तेश्च दिवसानां त्रिधा त्रिधा।
विद्यमानाव(प)च्छाया(य)पच्छायां(या)चोच्यते॥
मेषे च प्रथमे पङ्क्ते (ङ्क्तौ) द्व्यङ्गुलं च विसर्जयेत्।
मध्ये दशदिने चैकं चान्त्ये पङ्क्त्या(म) ङ्गुलं विना॥
वृषभे प्रथमदशके दिवसे त्वङ्गुलं नहि।
मध्ये चैकाङ्गुलं प्रोक्तं पङ्क्त्यन्ते द्व्यङ्गुलं त्यजेत्॥
मिथुने प्रथमदशके दिवसे त्व(द्व्य) ङ्गुलं त्यजेत्।
मध्ये दशदिने वह्नि(ह्निं)चान्त्यपङ्क्ति ( ौ )च तु त्यजेत्॥
कुलीरे प्रथमदशके वेदमात्रं विसर्जयेत्।
मध्ये दशदिने चापि त्र्यङ्गुलं तत्परित्यजेत्॥
द्व्यङ्गुलं चान्त्यदिवसे दशके समुदाहृतम्।
सिंहस्य चादिदशके द्व्यङ्गुलं च परित्यजेत्॥
मध्ये दशदिने चैकवा(म)न्त्यपङ्क्तौ विनाङ्गुलम्।
युवत्यामादिदशके दिवसे नाङ्गुलं भवेत्॥
मध्ये चैकाङ्गुलं त्यक्त्वा(क्तं)चान्त्यपङ्क्तौ द्व्या(द्व्य)ङ्गुलम्।
तुलारम्भे दशदिने द्व्यङ्गुलं च निषेधयेत्॥
विसृज्य(ज्यं)द्व्य(त्र्य)ङ्गुलं मध्ये चान्त्ये वेदमिति स्मृतम्।
वृश्चिके प्रथमे पङ्क्तिर्(ङ्क्तौ)दिवसे चतुरङ्गुलम्॥
मध्ये दशदिने वाणं चान्त्यपङ्क्तौ षडङ्गुलम्।

धनुराशौ दशदिने प्रथमे तु षडङ्गुलम् ॥
मध्ये दशदिने सप्तद्वय (सप्ता)ङ्गुलं च विवर्जयेत् ।
अन्त्यपङ्क्ति दिने त्याज्यं वसुमात्रमिति स्मृतम् ॥
मकरादौ दशदिने त्यजेदष्टाङ्गुलं बुधः ॥
मध्ये सप्ताङ्गुलं त्यक्त्वा(त्यक्तं)चान्त्ये त्यक्त्वा(क्तं)षडङ्गुलम् ।
कुम्भे चादौ दशदिने विसृजेत्तु षडङ्गुलम् ॥
मध्ये पञ्चाङ्गुलं त्यक्त्वा(क्तं)चान्त्ये च चतुरङ्गुलम् ।
मीनराशौ च दशके दिवसे चतुरङ्गुलम् ॥
मध्ये च पङ्क्ति दिवसे द्वय(त्र्य)ङ्गुलं च विसर्जयेत् ।
अन्ते दशदिने चापि वर्जयेद्द्वकाङ्गुलम् ॥
अपच्छायं(या)तत्र नास्ति यदुक्तं तदिहोच्यते ।
प्रागुक्तरविराश्यां तु कन्यायां वृषभस्थितम् ॥
अपरे विंशतिदिने तत्तदृक्षं भं यदि ।
उक्ताङ्गुलं तत्र नास्ति सूत्रं ज्ञात्वा प्रसारयेत् ॥
राश्यां(ऋक्ष)युतं रवेर्मासं प्रो(प्रे)क्ष्यापि च परित्यजेत् ।
ऊहापोहाप्यरुक्तादि दशा(द्वया)ङ्गुलं न्यत्र(स्तं)सूरिभिः ॥
तद्दशाङ्ककुभं ग्राह्य(ह्यं)तत्र सूत्रं प्रसारयेत् ।
शुद्धप्राची भवेत्सम्यगैशान्या प्राच्यथोच्यते ॥
प्राच्यङ्गुलकृताद्बिन्दोरुत्तरे चाङ्गुलं न्यसेत् ।
प्रतीचीमात्रतद्बिन्दोरीशप्राची (चीं) प्रसूत्रयेत् ॥
मुक्तिकामस्य करणे शुद्धप्राचीं प्रयोजयेत् ।
ऐशान्यप्राची सर्वस्य भोगकामस्य संमताम्(ता) ॥
आग्नेयं प्राचीसंयुक्तं सर्वदोषकरं भवेत् ।
आग्नेयप्राच्यिकं वास्तु तस्मात्सर्वं विसर्जयेत् ॥
एवं कृते त्वलं वास्तौ(स्तु)सुगाढं सुसमृद्धये ।
दण्डमानसमं सूत्रदीर्घमानं प्रकल्पयेत् ॥
आदौ तन्तुं त्रिधा कृत्वा सूत्रग्राहीति योजयेत् ।
वा(द्वि)मावर्तं तु सूत्रं स्यात्तृतीयावर्तदक्षिणम् ॥
कार्पासं(स)सूत्रसंयुक्तं(वा)पट्टसूत्रमथापि वा ।
सूत्राह्य(च ल)भ्यते वास्तौ प्रमाणं हीति निश्चितम् ॥
मध्यादिन्द्राच्च त(न्नैऋ तात्त)द्दिक्षु न्यसेन्द्रादि(सेदिन्द्र)शिखान्तकम् ।
इन्द्रादीशानपर्यन्तं चान्तकात्पावकान्तम् ॥
वरुणाद्वायुपर्यन्तं सौम्यादेर्वायु(यो)र्वान्तकम् ।
सौम्यादीशानपर्यन्तं सूत्रमेवं परित्यजे(द्याजये)त् ॥
विमाने त्रिगृहे वाऽपि मण्डपादीनि(दौच)वास्तुके ।

ग्रामादीनां च सर्वेषां मानयेन्मानसूत्रकम् ॥
तत्प्रमाणस्य परितो हस्तद्विहस्तम(म)धिकम् ।
तत्तत्सूत्रावसाने च शङ्कुमेवं प्रतिष्ठितम् ॥
गर्भसूत्रस्य कर्णैश्च द्विद्विशङ्कु निखानयेत् ।
चतुर्दिक्षु चतुःशङ्कु जन्मनिष्क्रमणार्थम् ॥
चतुष्कर्णैश्च कर्णैश्च चतुःशङ्कु(ङ्कु)समायुतम् ।
एवं महार्थकम् कुर्याच्छङ्कु दारु प्रवक्ष्यते ॥
खदिरं चादिमेदं च मधूकं क्षीरिणी तथा ।
अन्यैश्च सारवृक्षैर्वा खातं(त) शङ्कु रिति स्मृतम् ॥
एकविंशाङ्गुलं वाऽपि चैकपञ्च (पञ्चविंश) त्यङ्गुलायतम् ।
खातं शङ्कुमिदं मुष्टिमानं तत्परिणाहकम् ॥
मूलं तु सूचिवत्कुर्यान्मूला:(द)ग्रक्षयक्रमात् ।
गृहीत्वा वामहस्तेन स्थपतिस्थापकावुभौ ॥
शङ्कुदक्षिणहस्तेन लोष्ट(ष्टं)संगृह्य ताडयेत् ।
प्रत्येकमष्टसंख्या च प्राङ्मुखो वाप्युदङ्मुखः ॥
शङ्कुस्थापनकाले तु ब्राह्मणैः(णः)स्वस्तिवाचक(न)म् ।
कुर्यान्मङ्गलघोषैश्च समज्यां(माज्यः)पूजयेत्ततः ॥
एवं नैर्ऋतिकोणे तु(णादी)स्थपत्याद्यश्च तक्षकम्(कः) ।
पश्चान्मङ्गलघोषैश्च सर्वशङ्कुः(ङ्कून्)प्रहारयेत् ॥

६. का० शि० १.६०-७०½

शङ्कुं कलाङ्गुलायामं नाहं तत्सत्यमुच्यते ।
मूलताराष्टभागैकं हीनाग्रमति(वि)शालकम् ॥
सुवृत्तमर्जयेश(च्छ)ङ्कु सारवृक्षं विशेषतः ।
शङ्कु द्विगुणमानेन तन्मध्ये मण्डलं लिखेत् ॥
तन्मध्ये स्थापयेच्छङ्कु चतुर्दिक्षु विशेषतः ।
पूर्वापराह्णयोश्छाया यदि तौ मण्डलान्तकौ ॥
छायाग्रमध्यं संलक्ष्यं तथैव त्वपराह्णके ।
विन्दुद्वयान्तरं सूत्रं पूर्वापरादिगिष्यते ॥
तयोर्विन्द्वान्तरग्राह्यं यच्चापराननपुच्छकम् ? ।
दक्षिणोत्तरगं सूत्रं तन्मध्ये तु प्रसारयेत् ॥
येन मध्यममाधातुं ह्यपच्छायाङ्गुलं व्रजेत् ।
मण्डलं कुञ्जतालेन ह्यङ्गुलं तु विभाजयेत् ॥
भानुर्मीनाष्टविंशांशं सप्तविंशांशयोस्तरे ।
गते त्वजंवनत्युक्ता कन्यायां च तथैव हि ॥
मीनेऽष्टविंशदेशं हि भागं प्रत्यर्धमातृकम् ।
वर्धयेन्मिथुने सप्तविंशदेशावसानके ॥

ततोत्रि(ति)मात्रं क्षीणं स्याद्भागं प्रति विशेषतः।
कन्यायां छन्द्रविंशांशं तद्भागांशविवर्धनात् ॥
छायोऽष्टविंशदं शान्तं ततो हासं तथैव हि।
छायावृद्धिं च्यं चैव कृत्तिकांशं खु(कु)मध्यमम् ॥
छायामानं व्रजेन्मध्ये ब्रह्मसूत्रं प्रसारयेत्।
पूर्वापराह्णयोश्छाया मध्ये मानं च वर्जयेत् ॥
प्रागादिपरितं सूत्रमिष्टमाने तु विन्यसेत्।

७. त० स० १.२१

साचे शङ्कुमिनाङ्गुलं समतले कृत्वा पृथक्कालज-
च्छायाग्रार्चितत्रिविन्दुपरिवृत्तयोत्पाद्य मत्स्यद्वयम्।
तत्सौपुच्छसिरोरथसूत्रयुगयोगाच्छङ्कुनाड्यन्तिमं
सूत्रं न्यस्य सुसाधयेद् यमधनेशाशे ततश्चेतरे ॥

टि०—दिङ्निर्णय एव प्लवविचारस्य प्रासङ्गिकत्वात् प्लवपरीक्षा यथाः—

वा० वि० २. २-२४½

सुवः प्लवं प्रवक्ष्यामि नराणां च शुभाशुभम्।
पूर्वप्लवा वृद्धिकरी ह्युत्तरा धनदा स्मृता ॥
अर्थक्षयकरीं विद्यात् पश्चिमप्लवनां ततः।
दक्षिणप्लवना पृथ्वी नराणां मृतिदा भवेत् ॥
वारुणोच्चसमायुक्ता नीचमाहेन्द्रसंयुता।
गोवीथिरिति सा ज्ञेया ऐन्द्रोच्चानीचवारुणा ॥
जलवीथिरिति प्रोक्ता वास्तुज्ञानविशारदैः।
सौमोच्चा यमनीचा च यमवीथीति कथ्यते ॥
यमोच्चसोमनीचा च गजवीथीति कथ्यते।
ईशोच्चं निर्ऋतिनीचं भूतलं भूतवीथिकम् ॥
आग्नेयोच्चं वायुनीचं नागवीथी प्रशस्यते।
वायूच्चमग्निनीचं यद् वीथीं वैश्वानरीं विदुः ॥
निर्ऋत्युच्चमीशनीचं धनवीथीत्युदाहृतम्।
इन्द्राग्न्यन्तरमुच्चं स्यान्नीचं वरुणवातयोः ॥
वास्तु पैतामहं विद्यान्नराणां कुरुते शुभम्।
याम्याग्न्यन्तरमुच्चं स्यान्नीचं मारुतसोमयोः ॥
सुपथं नाम तद्वास्तु प्रशस्तं सर्वकर्मणाम्।
सोमेशानान्तरं नीचमुच्चं निर्ऋतिकालयोः ॥
दीर्घायुर्नाम तद्वास्तु प्रशस्तं कुलवर्धनम्।
ईशानेन्द्रान्तरं नीचमुच्चं वरुणरक्षसोः ॥
पुण्यकं नाम तद्वास्तु द्विजानां च शुभावहम्।
इन्द्राग्न्योरन्तरं नीचमुच्चं वायुजलेशयोः ॥

अपथं नाम तद्वास्तु वैराय कलहाय च ।
कालाग्न्योरन्तरं नीचमुच्चं स्याद् वायुसोमयोः ॥
रोगकृन्नाम तद्वास्तु नराणां रोगवृद्धिकृत् ।
निर्ऋत्यन्तकयोर्नीचमुच्चं सोमशिवान्तरम् ॥
अर्गलं नाम तद्वास्तु ब्रह्महत्यादिनाशकृत् ।
रुद्रेन्द्रान्तरमुच्चं स्यान्नीचं वरुणरक्षसोः ॥
श्मशानं नाम तद्वास्तु केवलं कुलनाशनम् ।
नीचमग्नौ भवेदुच्चं निर्ऋतीशानवायुषु ॥
श्येनकं नाम तद्वास्तु नाशाय मरणाय च ।
रुद्राग्निवरुणेषूच्चं नीचं स्यान्निर्ऋतौ तथा ॥
श्वमुखं नाम तद्वास्तु दारिद्र्यं कारयेत् फलम् ।
निर्ऋत्यग्निशिवेषूच्चं नीचं रवीन्द्रयोस्तथा ॥
ब्रह्मघ्नं नाम तद्वास्तु नेष्टं प्राणभृतां सदा ।
अग्नौ यदि भवेदुच्चं नीचं निर्ऋतिरुद्रयोः ॥
वातनिम्नं च तद्वास्तु स्थावरं नाम शोभनम ।
उच्चं निर्ऋतिभागे स्यान्नीचं ज्वलनवातयोः ॥
रुद्रनिम्नं च तद्वास्तु स्थण्डिलं नाम शोभनम् ।
रुद्रोच्चं यदि निम्नं स्याद् वह्नौ निर्ऋतिवातयोः ॥
शाण्डुलं नाम तद्वास्तु प्रापयत्यशुभं सदा ।
निर्ऋत्यग्निशिवेषूच्चं नीचं चन्द्रमसं प्रति ॥
द्विजेन्द्राणां तु सुस्थानमवनी समुदाहृता ।
नीचमिन्द्रे भवेदुच्चं निर्ऋत्यां पश्चिमानिले ॥
सुलभं नाम तद्वास्तु राजराष्ट्रविवर्धनम् ।
सौम्येशपवनेषूच्चं नीचं भवति चेद् यमे ॥
नाम्ना वास्तुचरं नाम वैश्यानां तदभीष्टदम् ।
नीचं वारुणमुच्चं चेदीशानेन्द्राग्निषु क्रमात् ॥
श्वमुखं नाम तद्वास्तु शूद्राणां तदभीष्टदम् ॥

वास्तुपदानि—

1. स० सू० १३.१ प्रमुखवास्तुभेदाः एकाशीतिपदवास्तु ११.१–१४

एकाशीतिपदं यत् स्यात् तथा शतपदञ्च यत् ।
चतुःषष्टिपदं यच्च वास्तुरत्नं त्रिधोदितम् ॥
चतुरश्रीकृते क्षेत्रे विभक्ते नवधा ततः ।
मध्ये महाद्युतिर्ब्रह्मा विधेयो नवभिः पदैः ॥
तस्मादनन्तरं प्राच्यां षट्पदः कीर्तितोऽर्यमा ।
आग्नेयकोणे सवितृसावित्रौ पदिकावुभौ ॥

ब्रह्मणोऽनन्तरं याम्ये विवस्वान् षट्पदाश्रितः।
नैर्ऋते पदिकौ कोणे जयेन्द्रौ कथिताबुभौ॥
षट्पदः स्यात् ततो मित्रः काष्ठायां पत्युरम्भसः।
कोणे परोत्तरे यक्ष्मा रुद्रश्च पदिकावुभौ॥
षड्भिः पदैस्ततः सौम्ये निश्चलः पृथिवीधरः।
आपस्तथापवत्सश्च पदिकावीशदिग्गतौ॥
इत्यन्तःसंश्रयान् देवान् प्रोक्तान्ब्रूमो बहिः स्थितान्।
ज्ञेयं प्रदक्षिणं तेषां स्थानं पूर्वोत्तरादितः॥
अग्निस्तदनु पर्जन्यो जयन्तश्चेन्द्र एव च।
रविः सत्यो भृशश्चेति नभस्तस्मात् ततोऽनिलः॥
पूषाख्यो वितथाख्यश्च गृहक्षतयमावथ।
गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्ततः॥
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलेश्वरः।
असुरः शोषनामा च पापयक्ष्मा ततः परम्॥
रोगो नागश्च मुख्यश्च भल्लाटः सोम एव च।
चरकोऽथादितिर्दैत्यमातेति पददेवताः॥
रवेर्वायोः पितृणां च व्याधेश्चैव क्रमाद् बहिः।
चरकी च विदारी च पूतना पापराक्षसी॥
पदभोगोऽस्ति नैतासां स्थानमेव हि केवलम्।
पदभोगमथ ब्रूमो बहिःस्थानां नभःसदाम्॥
तत्राष्टौ द्विपदाधीशा जयन्तो भृश एव च।
वितथो भृङ्गसुग्रीवशोषमुख्यास्तथादितिः॥
एभ्यः शेषा बहिर्ये तु ते स्युःपदभुजः सुराः।
एकाशीतिपदे प्रोक्तो देवतानां पदक्रमः॥

शतपदवास्तु
११.१५–२०

चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते।
भवेच्छतपदो वास्तुर्ब्रूमोऽत्राप्यमरस्थितिम्॥
द्विरष्टगुणितं मध्ये पदमेकं पितामहः।
भुङ्क्ते शतपदे वास्तौ चतुर्गुणितमर्यमा॥
विवस्वतोऽथ मित्रस्य तद्वच्च पृथिवीभृतः।
भोगमिच्छन्ति वै तेषामर्यम्ण इव सूरयः॥
सवित्राद्यापवत्सान्ता ये च प्रोक्ताः सुरोत्तमाः।
यथैकाशीतिके तद्वत् तेषां भोगः पदाष्टकम्॥
अग्न्यन्तरिक्षपवना मृगश्च पितरोऽपि च।
रोगो दितिस्तथाध्यर्धपदभाजो बहिः स्थिताः॥
चतुर्विंशतिरुक्ता ये पर्जन्याद्याः सुरोत्तमाः।

आदित्यन्वा द्विपदिकास्ते शेषं प्राक् प्रसाधितम् ॥

चतुष्षष्टिपदवास्तु
११. २१—३०

चतुरश्रीकृते क्षेत्रे पूर्ववद् भाजितेऽष्टभिः ।
चतुः षष्टिपदो वास्तुश्चतुःषष्ट्या पदैर्भवेत् ॥
अस्मिन् पदानि चत्वारि भुनक्त्यन्तः पितामहः ।
अर्यमाद्याः सुराश्चान्ते द्वे द्वे मध्यगताः पदे ॥
मध्येऽष्टौ बाह्यतोऽष्टौ ये स्थिताः कोणेषु चाष्टसु ।
ये देवाः सर्व एकत्र ते पदार्धभुजः स्मृताः ॥
पर्जन्योऽथ भृशः पूषा भृङ्गदौवारिकौ तथा ।
शोषनागादितिप्रान्ताः स्युरध्यर्धपदस्पृशः ॥
जयन्तादिषु बाह्येषु चरकान्तेषु कीर्तिता ।
प्रत्येकं षोडशस्त्वत्र सुरेषु द्विपदस्थितिः ॥
सिरां बहिः पदादूर्ध्वं नयेत् पितृपदान्ततः ।
बाह्याशानिर्गतां चैनां रोगनामानमानयेत् ॥
द्विनाम्नः प्रापयेद् भृङ्गं भृङ्गात् सुग्रीवमानयेत् ।
ततोऽदितिं तां गमयेद् द्विनामानं प्रवेशयेत् ॥
सौराद् याम्यं पदं नीत्वा वारुणं प्रापयेत् ततः ।
नयेत् पदं ततः सौम्यं तत आदित्यमानयेत् ॥
भृशादानीय वितथं शोषाख्यं वितथादथ ।
शोषान्मुख्यं समानीय नयेत् तस्मात् पुनर्भृशम् ॥
ये विभागाः समुद्दिष्टा यथासङ्ख्येन तैरिह ।
यज्ञामरनृणां वास्तुं समस्तं विभजेत् सुधीः ॥

शतपद-चतुष्षष्टिपद-
वृत्तवास्तु
१२. १३—१६

अथोच्यते वृत्तवास्तु वृत्तप्रासादहेतवे ।
एकश्चतुःषष्टिपदभागः शतपदोऽपरः ॥
अष्टधा भाजिते वृत्तविष्कम्भे भागिकान्तरान् ।
चतुरः परिधीन् कुर्यान्मध्यवृत्तं द्विभागिकम् ॥
स्याद्बहिर्वृत्तवलयमष्टाविंशतिभागिकम् ।
तदन्तर्वृत्तवलयमष्टाष्टांशोज्झितं क्रमात् ॥
एवं कृते भवेन्मध्ये ब्रह्मणस्तच्चतुष्पदम् ।
इत्थं चतुःषष्टिपदो वृत्तवास्तुरुदाहृतः ॥
दशधा भाजिते वृत्तविष्कम्भे भागिकान्तराः ।
कार्याः परिधयः पञ्च मध्ये वृत्तं द्विभागिकम् ॥
बहिस्थं वलयं तस्य भजेत् षट्त्रिंशता ततः ।
शेषं चतुःषष्टिपदस्थित्या स्याच्छतवास्तुनि ॥
देवतापदसङ्क्षिप्तिरनयोश्चतुरश्रवत् ।
एवं कार्यवशात् कार्या वास्तवोऽन्येऽपि धीमता ॥

द्व्यश्रादिवास्तुपद १२. २०—२१

द्व्यश्रे षडश्रे चाष्टाश्रे षोडशाश्रे च वृत्तवत्।
वृत्तायतेऽर्धचन्द्रे च वास्तौ पदविभाजनम्॥
एक एव पुमानेषु बहुधा परिकल्पितः।
सर्वस्मिन्नपि संस्थाने विभक्ते लक्षयेत् ततः॥

स्तुपुरुषो विकल्पना १४. १—१२

देवतानां पदैरित्थं संविभक्तैः पृथग्विधैः।
स्थपतिः प्रयतः कुर्याद् वास्तुमित्थंपुमाकृतिम्॥
शिरस्तस्याग्निरुद्दिष्टं दृष्टिर्दित्यम्बुदाधिपौ।
जयन्तश्चादितिश्चास्य कर्णौ वायुर्मुखे स्थितः॥
अर्कः स्याद् दक्षिणे वामे भुजे सोमः प्रतिष्ठितः।
महेन्द्रचरकौ सापवत्सावस्योरसि स्थितौ॥
स्तनेऽर्यमा दक्षिणे स्याद् वामे च पृथिवीधरः।
यक्ष्मा रोगश्च नागश्च मुख्यो भल्लाट इत्यमी॥
दक्षिणेतरमेतस्य बाहुं देवाः समाश्रिताः।
सत्यो भृशो नभो वायुः पूषा चेत्यथ दक्षिणम्॥
पञ्चापि बाहुमेतस्य संश्रितास्त्रिदिवौकसः।
सावित्रसवितारौ च रुद्रशक्तिधरावपि॥
चत्वारोऽमी कलाः फोणिस्थाः करयोर्हृदि च स्वभूः।
वितथौकःक्षतौ पार्श्वे दक्षिणेऽस्य व्यवस्थितौ॥
वामे पुनः स्थितावस्य देवौ शोषासुराभिधौ।
मित्राभिधो विवस्वांश्च द्वावप्युदरमाश्रितौ॥
मेढ्रमध्यस्थितावस्य सुराविन्द्रजयाभिधौ।
यमश्च वरुणश्चोर्वोः क्रमाद् दक्षिणवामयोः॥
गन्धर्वभृङ्गौ सम्मृगौ जङ्घां सव्यामथेतराम्।
द्वास्थसुग्रीवपुष्पाख्याः संश्रिताः पितरोऽङ्घ्रिशः॥
एकाशीतिपदस्येशदिग्विभागाश्रितं शिरः।
माहेन्द्रीसंश्रितं विद्याच्चतुःषष्टिपदस्य तु॥
एकाशीतिपदाज्जातो वास्तुः शतपदाभिधः।
यः षोडशपदः स स्याच्चतुष्षष्टिपदोद्भवः।

पुरुषाङ्गदेवता—निघण्टु १४. १३—२४

मध्ये य एव देवानां स्थितो ब्रह्माब्जसंभवः।
स सहस्राननोऽचिन्त्यविभवो जगतां प्रभुः॥
योऽयं वह्निरिहोक्तः स सर्वभूतहरो हरः।
पर्जन्यनामा यश्चायं वृष्टिमानम्बुदाधिपः॥
जयन्तस्तु द्विनामाख्यः कश्यपो भगवानृषिः।
महेन्द्रस्तु सुराधीशो दनुजानां विमर्दनः॥
आदित्यं पुनरिच्छन्ति विवस्वन्तमहस्करम्।

सत्यो भूतहितो धर्मो वृषः कामोऽथ मन्मथः॥
योऽन्तरिक्षः स्मृतो देवस्तन्नभः समुदाहृतम्।
मारुतो वायुरुद्दिष्टः पूषा मातृगणः स्मृतः॥
अधमो वितथाख्यः स्यात् कलेरप्रतिमः सुतः।
गृहक्षतः पुनर्योऽत्र स चन्द्रतनयो बुधः॥
प्रेताधिपो मतः श्रीमान् यमो वैवस्वतश्च सः।
गन्धर्वो भगवान् देवो नारदः परिकीर्तितः॥
भृङ्गराजमिहेच्छन्ति राक्षसं निरृतेः सुतम्।
यो मृगोऽस्मिन्ननन्तः स स्वयंभूर्धर्म इत्यपि॥
पितरस्तु स्मृता देवाः पितृलोकनिवासिनः।
स्मृतो दौवारिको नन्दी प्रमथानामधीश्वरः॥
आदिः प्रजापतिः स्रष्टा मनुः सुग्रीव ईरितः।
पुष्पदन्तस्तु विनतातनयः स्यान्महाजवः॥
वरुणः पाथसां नाथो लोकपालः स कीर्तितः।
असुरो राहुरर्केन्दुमर्दनः सिंहिकात्मजः॥
शोषस्तु भगवानेष सूर्यपुत्रः शनैश्चरः।
पापयक्ष्मा क्षयः प्रोक्तो रोगस्तु कथितो ज्वरः॥
भुजङ्गमानामधिपः श्रीमान् नागस्तु वासुकिः।
त्वष्टा स्यान्मुख्यसंज्ञोऽत्र विश्वकर्माभिधश्च सः॥
चन्द्रो भल्लाट इत्युक्तः कुबेरः सोमसंज्ञितः।
चरको व्यवसायाख्यः श्रीरिहादितिसंज्ञिका॥
दितिरत्रोच्यते शर्वः शूलभृद् वृषभध्वजः।
हिमवानाप इत्युक्त आपवत्स उमा स्मृता॥
आदित्यस्त्वर्यमा वेदमाता सावित्र उच्यते।
देवी गङ्गात्र विद्वद्भिः सवितेति प्रकीर्तिता॥
मृत्युः शरीरहर्तासौ विवस्वानिति स स्मृतः।
जयाभिधस्तु वज्रीति स्यादिन्द्रो बलवान् हरिः॥
मित्रो हलधरो माली रुद्रस्तूक्तो महेश्वरः।
राजयक्ष्मा गुहः प्रोक्तः क्षितिश्चोऽनन्त उच्यते॥
चरकी च विदारी च पूतना पापराक्षसी।
रक्षोयोनिभवा ह्येता देवतानुचरीर्विदुः॥
इत्येष वास्तुदेवानां नियण्टुः परिकीर्तितः।
क्षो मूर्ध्नि हो ह्योर्मध्ये लो घ्राणे चिबुके तु षः॥
शः कण्ठे हृदये वः स्याल्लकारो नाभिदेशगः।
रेफो वस्तौ यकारस्तु मेढ्रे मः (पुष्पः) मुष्ककावुभौ॥

नकार ऊरुणी जानुकारः पिण्डिकाश्रितः ।
(ङः) ङकारो गुल्फयोरन्ते पकारोऽङ्घ्रितले स्मृतः ॥

तस्यनाड्यादि— सिरादि विकल्पा तत्र गृहनिर्माणे त्याज्यस्थानानिच १२. २२—३७१

शरीरं वास्तुपुंसोऽस्य गुणदोषा भवन्ति यत् ।
मुखं मूर्धा ततः श्रोत्रे दृक्तालव्वोष्ठरदाः क्रमात् ॥
वक्षः कण्ठः स्तनो नाभिर्मेढ्रमुष्कावथो गुदम् ।
बाहू च प्रबाहू पाणी स्फिगूरुजङ्घापदद्वयम् ॥
कल्पयेदेवमेतेन स भवेत् पुरुषाकृतिः ।
सिरावंशानुवंशाश्च सन्धयः सानुसन्धयः ॥
मर्माण्यथ महावंशा लक्ष्या वास्तुशरीरगाः ।
सिराः कर्णगता याः स्युस्ता नाड्यः परिकीर्तिताः ॥
पदस्य षोडशो भागस्तत्प्रमाणं प्रकीर्तितम् ।
महावंशौ प्रावप्रतीच्यौ याम्योदीच्यौ च मध्यगौ ॥
प्रमाणं पञ्चमो भागः पदस्योदाहृतं तयोः ।
वंशास्तेऽस्मिन् समुद्दिष्टा रेखा याः स्युर्मुखायताः ॥
यास्तिर्यगायता रेखास्तेऽनुवंशाः प्रकीर्तिताः ।
सम्पाता ये स्युरेतेषां मर्म तत् संप्रचक्षते ॥
उपमर्माणि तान्याहुः पदमध्यानि यानि हि ।
भागोऽष्टमोऽथ दशमो द्वादशः षोडशोऽपि च ॥
पदतो भागमिष्टं स्याद् वंशादीनामनुक्रमात् ।
वंशाष्टकस्य यः सन्धिः स सन्धिरिति कीर्तितः ॥
ये पुनः स्युस्तदङ्गानां प्रोक्तास्ते चानुसन्धयः ।
वालाग्रतुल्यं सन्धीनां प्रमाणं परिचक्षते ॥
तदर्धमनुसन्धीनां प्रमाणं समुदीरितम् ।
यत्नेनैतानि सन्त्यज्य वास्तुविद्याविशारदः ॥
द्रव्याणि प्रयतो नित्यं स्थपतिर्विनिवेशयेत् ।
महावंशस्य नाक्रान्तिं कुर्याद् द्रव्येण केनचित् ॥
इतरेषु पुनर्द्रव्यं मध्यवंशेषु सन्त्यजेत् ।
महावंशसमाक्रान्तौ भवेत् स्वामिवधो ध्रुवम् ॥
वर्षेण तपनाद् भीतिं वंशानां पीडनाद् विदुः ।
उपमर्माणि रोगाय मर्माणि कुलहानये ॥
उद्वेगायार्थनाशाय सिराश्च स्युः प्रपीडिताः ।
कलिः स्यात् सन्धिविद्धेषु पीडितेष्वनुसन्धिषु ॥
तस्मादेतानि सर्वाणि पीडितान्युपलक्षयेत् ।
ज्ञात्वा सिराः सानुसिराश्च नाडीवंशानुवंशानपि वास्तुदेहे ।
यत्नेन मर्माणि फलानि चैषां वेधं त्यजेद् यस्तमुपैति नापत् ॥

वास्तुपदप्रयोगः
१३. ३—४

वर्णिनां भवनादीनि निवेशा राजवेश्मनाम्।
एकाशीतिपदेनेन्द्रस्थानं च विभजेत् सुधीः॥
प्रासादा विविधास्तद्वद् विचित्राश्राश्च मण्डपाः।
तान् मापयेच्छतपदप्रविभागेन बुद्धिमान्॥
यः पुनः स्याच्चतुःषष्टिपदस्तेन विभाजयेत्।
नरेन्द्रशिविरग्रामखेटादि नगरादि च॥

मर्माणि तेषां पीडनफलं च
१३. ६—२३½

अन्तस्त्रयोदश सुरा द्वात्रिंशद् वाह्यतश्च ये।
तेषां स्थानानि मर्माणि सिरा वंशाश्च तेषु तु॥
मुखे हृदि च नाभौ च मूर्ध्नि च स्तनयोस्तथा।
मर्माणि वास्तुपुंसोऽस्य षण्महान्ति प्रचक्षते॥
वंशानुवंशसम्पाताः पदमध्यानि यानि च।
देवस्थानानि तान्याद्ये पदषोडशकान्विते॥
देवस्थानानि सम्पाताश्चतुःषष्टिपदे पुनः।
तथैकाशीतिपदिके पदान्तशतिकेऽपि च॥
चतुर्ष्वपि विभागेषु सिरा याः स्युश्चतुर्दिशम्।
मर्माणि तानि चोक्तानि द्वारमध्यानि यानि च॥
भित्तिविस्तृतमध्येन यद्वा मध्येन दारुणः।
मर्म यत् पीड्यते येन गृहे तत्रोच्यते फलम्॥
द्वारैर्वा भित्तिभिर्वापि मर्मणां परिपीडनात्।
दौर्गत्यं गृहिणः प्राहुः कुलहानिमथापि वा॥
भवेत् स्वामिवधः स्तम्भैस्तुलाभिः स्त्रीपरिक्षयः।
स्नुषावधो जयन्तीभिर्बन्धुनाशश्च सङ्ग्रहैः॥
मर्मस्थानक्षयैः कायैर्भर्तुः कायो निपीड्यते।
सुहृद्विश्लेषमिच्छन्ति सन्धिपालैश्च तद्विदः॥
नागपाशैर्धनोच्छेदो नागदन्तैः क्षयमादिशेत्॥
षड्दारुकाजानुसिरागवाक्षालोकनानि च।
मर्ममध्योपगान्येतान्यावहन्ति धनक्षयम्॥
द्वारद्रव्यतुलास्तम्भनागदन्तगवाक्षकैः।
नृपदण्डभयं पत्युः पीडनं च प्रचक्षते।
द्वारमध्येषु षड्दारुमध्येष्वपि च सूरयः॥
कर्णद्रव्यादिभिर्विद्धेष्वेतदेव फलं विदुः।
शय्यानुवंशविहिता गृहिणां कुलनाशिनी॥
क्षयावहा नागदन्ता भर्तुः शय्यान्विता नगाः।
वातायनैरथ स्तम्भैर्ये विद्धा नागदन्तकाः॥
ते शस्त्रभीतिदा भर्तुर्यद्वा चौरभयप्रदाः।

द्रव्यधान्यविनाशाय शोकाय कलहाय च ॥
गृहमध्यगतं द्वारं भवेत् स्त्रीदूषणाय च ।
द्रव्येणान्यतरेणापि महामर्म निपीडितम् ॥
भवेत् सर्वस्वनाशाय गृहिणो मरणाय च ।
अंशुकाश्चोर्ध्ववंशाश्च तुम्बिकाः सेन्द्रकीलकाः ॥
पुष्पप्रासादगेहानां वेधेऽप्येते न दोषदाः ॥

अ० पृ०
वास्तुभेदाः
५७. १—७

स्वस्तिकं पुष्पकं नन्दं षोडशाक्षं चतुर्थकम् ।
पञ्चमं कुलतिलकं सुभद्रं षष्ठमेव च ॥
सप्तमो मरीचिगणो भद्रकं स्यात्तथाष्टमम् ।
नवमं कामदं प्रोक्तं दशमं भद्रमुच्यते ॥
सर्वतोभद्रनामाख्यमतऊर्ध्वं न कारयेत् ।
वास्तून्येकादशैव स्युः प्रोक्तानि परमेश्वरैः ॥
पदमेकं स्वस्तिकं स्यात्पुष्पकं च चतुष्टयम् ।
नन्दं नवपदं प्रोक्तं षोडशं षोडशपदैः ।
पञ्चविंशतिभिः कुलं षट्त्रिंशद्भिः सुभद्रकम् ।
एकोनपञ्चाशत्पादैर्मरीचिगण उच्यते ॥
भद्रकं तु चतुःषष्टिरेकाशीतिश्च कामदम् ।
शतपदैस्तु भद्राख्यं सहस्रैः सर्वतोद्भवम् ॥
पदसङ्ख्यास्तु कथिता वास्तुस्थानानि वच्म्यहम् ।
स्वस्तिकं पदसंस्थाने ध्रुवतः कथ्यते बुधैः ॥

तेषां प्रयोगाः
५७. ८—२३

श्रीधरं राजगेहानां हर्म्यादीनां ध्रुवं यथा ।
चतुष्की देवताग्रे या विद्यारम्भे तत्स्वस्तिकम् ॥
दीक्षा विविधयात्रासु कन्यालग्ने च पुष्पकम् ।
नन्दं प्रपूजयेद्वास्तु वनयात्रादिशोभनम् ॥
लतिने रुचकादीनां मण्डपेषु गृहादिके ।
जगती वसुधायुक्तं षोडशाख्यं तु पूजयेत् ॥
दक्षिणोत्तरपट्टकाद्यं शक्राद्यं कमलोद्भयम् ।
श्रीमात्रादिषु दीक्षासु तिलकं तु प्रपूजयेत् ॥
सुकर्मणि च प्रस्थाने सुभद्रं च प्रशस्यते ।
समस्तजीर्णोद्धारेषु मरीचिगणमर्चयेत् ॥
ग्रामखेटपुराद्यौ च कूपे च कर्वटादिके ।
तथा राजनिवेशे च भद्रकं पूजयेत्सदा ॥
गृहादिषु समस्तेषु तृणपटच्छन्दादिषु ।
पाण्डुरस्वपूर्णखण्डेषु कामदं वास्तु पूजयेत् ॥
प्रासादा विविधाश्चैव विविधाश्चात्र मण्डपाः ।

जगतीलिङ्गपीठे च भद्राख्यं राजवेश्मान ॥
प्रासादाश्चैव मेर्वाद्या लिङ्गं षट्करतः परम् ।
महार्था देशराष्ट्रे च सर्वतोभद्रमर्चयेत् ॥
अधस्तात् सर्वतोभद्राद् भद्राख्योपरि वास्तुकम् ।
मध्ये च द्वाविंशतिभिर्गुणिता पदकल्पना ॥
षट्क्षेत्राणि प्रवक्ष्यामि वास्तुपदनिवासिनाम् ॥
संस्थानोन्मानसूत्रं च वास्तुवेदसमुद्भवम् ।
चतुरश्रमायतं च वृत्तं वृत्तायतं तथा ॥
अष्टाश्रं चार्धचन्द्रं च वास्तुसूत्रं तु षड्विधम् ॥
प्रासादेषु गृहाद्येषु पुरग्रामनिवेशने ।
क्षेत्राणि चतुरश्राणि चतुरश्रं समर्चयेत् ॥
तथायताश्च प्रासादाः पुष्पाद्यकुलसम्भवाः ।
यथायतानि क्षेत्राणि पूजयेच्च तथायतम् ॥
वापीकूपक्षेत्रकाणि वृत्तानि प्रतिमास्तथा ।
कैलासच्छन्दोद्भवाश्च सर्वे वृत्ताः प्रकीर्तिताः ॥
वृत्तायताश्च मणिका अष्टशाला अष्टाश्रकाः ।
तडागेषु समस्तेषु ह्यर्धचन्द्रं प्रपूजयेत् ॥

देवतानां सामान्य-स्थितिः ५७ २४—२२

क्षेत्रषट्कात्मके वास्तौ बाणवेदाश्च देवताः ।
त्रयोदश स्थिता मध्ये द्वात्रिंशद् बाह्यतस्तथा ॥
सूत्रबाह्येऽष्टदेव्यश्च ईशादिषु प्रदक्षिणम् ।
तासां पदविधिर्नास्ति केवलं पूजनं स्मृतम् ॥

तेषां पदभोगाः ५८. २८—३५

ईशस्तथा च पर्जन्यो जयो माहेन्द्र एव च ।
आदित्यः सत्यभृशौ चान्तरिक्षान्ताष्ट पूर्वतः ॥
अग्निः पूषा च वितथो गृहक्षतो यमस्तथा ।
गन्धर्वो भृङ्गराजश्च मृगान्तश्चाष्ट दक्षिणे ॥
पितरो दौवारिकश्च (श्चापि) सुग्रीवः पुष्पदन्तकः ।
वरुणश्चासुरः शोषः पापयक्ष्मा तु पश्चिमे ॥
रोगो नागस्तुमुख्यश्च भल्लाटः सोम एव च ।
गिर्यदितिर्दितिश्चैवाष्टावुत्तरदिशि क्रमात् ॥
ब्रह्मकर्णौ तथा चाष्टावीशान्यादि क्रमेण तु ।
आपश्चैवापवत्सश्च ईशकर्णे तु संश्रितौ ॥
सविता चैव सावित्री आग्नेय्यां तु समाश्रितौ ।
इन्द्र इन्द्रजयश्चैव नैरृत्यां ब्रह्मणः स्थितौ ॥
रुद्रश्च रुद्रदासश्च संस्थितौ वायवीदिशि ।
मरीचिश्च विवस्वांश्च मित्रश्च पृथिवीधरः ॥

वास्तुमर्मोपमर्म-
निर्णयः
४६. १—१८

पूर्वादिक्रमयोगेन संस्थिताश्च चतुर्दिशम् ।
एवमादिक्रमयोगः सर्वेषां वास्तुमण्डले ॥
चतुष्षष्टिपदैः क्षेत्रे पुरवास्तु प्रकल्पयेत् ।
मर्मोपमर्मसन्धींश्च वास्तुदेहसमुद्भवान् ॥
पूर्वापरायता वंशा उपवंशाः प्रभेदतः ।
मर्माणि वंशसम्पाता उपमर्माणि मध्यतः ॥
इन्द्रादित्यतस्त्रिरेखा वरुणपुष्पदन्तगाः ।
एते वंशाः समाख्याता उपवंशा याम्योत्तराः ॥
सोमभल्लाटतस्तिस्रो गृहक्षतयमान्तगाः ।
पूर्वापरायता रेखाः पुनर्भिन्नाश्च तिसृभिः ॥
ईशब्रह्मपितृतश्च शिरा रोगाग्निमध्यतः ।
शिरास्त्वेवं विकर्णस्था ईशाग्निपितृरोगतः ॥
जयगन्धर्वसुग्रीवगिरिभिश्च प्रभेदिताः ।
सत्यमुख्यायता रेखा वितथाच्चासुरान्तगाः ॥
एते च सूत्रसंपाता महामर्माणि कीर्तिताः ।
सूत्रसंपाताग्रपङ्क्ति पट्कं लाङ्गलमुच्यते ॥
शिरासूत्रपातपट्कं तच्चापि लाङ्गलं स्मृतम् ।
चतुर्विंशति लाङ्गलानि पदार्धेषु त्रिकोणगाः ॥
ब्रह्मणश्च चतुःपार्श्वेष्वष्टसूत्राणि पञ्चकम् ।
पक्षेषु लाङ्गलं द्वंद्वं षड्रेखाभिर्विधीयते ॥
चतुःकर्णेषु शूलानि षड्रेखाभिश्च वज्रकम् ।
त्रिशूललाङ्गलपङ्क्तिशिरानाडीविवर्जितम् ॥
वन्धूच्छेदश्चोपवंशे मर्मणि स्यात्कुलक्षयः ।
वज्रे च वज्रपाताः स्युस्त्रिशूले च रिपोर्भयम् ॥
पङ्क्तौ पतिविनाशश्च लाङ्गलेषु प्रजाक्षयः ।
कर्णशिरा (स्त्रीविनाशः सम्पाते चाग्रजातके ॥
चतुषु ब्रह्मकर्णेषु महामर्म सुकीर्तितम् ।
धनधान्यविनाशश्च सर्वनाशस्तथैव च ॥
पदन्यासषोडशांशो भागो द्वादशकः पुनः ।
बालाग्रं सन्धिसम्पाते वर्ज्यते मर्मशिल्पिभिः ॥
अष्टौ वर्गाः समाख्याताः कर्णपार्श्वाश्च कीर्तिताः ।
ब्रह्मकर्णे त्रिपद्मान्ते ? महामर्मचतुष्टयम् ॥
मर्मोपमर्मणी रक्ष्ये महादोषभयावहे ।
वंशोपवंशौ सन्धिश्च रेखापट्कं च लाङ्गलम् ॥
भूपरिग्रहो वास्तुश्च मर्मादि कथितं तव ।

पित्रोर्घातो भवेच्चैवं कृते शिरसि खातके ॥
भुजे स्कन्धे बन्धुनाशो हृदये च महाभयम् ।
धनधान्यसमृद्धिश्च जायते कुक्षिखातके ॥

मान०
वास्तुभेदाः
७. १—२९

अधुना पदविन्यासलक्षणं वक्ष्यते क्रमात् ।
प्रथमं चैकपदं स्यात्सकलं नाममैव मेवे (एव) च ॥
द्वितीयं चतुष्पदं चैव नाम पैशाच (पेचक) मेव च ।
तृतीयं नवपदं चैव नाम पीठमिति स्मृतम् ॥
चतुर्थं षोडशपदं महापीठमिति स्मृतम् ।
पञ्चमं पञ्चपञ्चांशमुपपीठमिति स्मृतम् ॥
षष्ठं च षष्ठषष्ठांशं चोग्रपीठं च कथ्यते ।
सप्तमं सप्तसप्तांशं स्थण्डिलं परिकीर्तितम् ॥
अष्टमं तु चतुःषष्टिपदं चण्डितमीरितम् ।
कथित (उक्त) मेकाशीतिपदं नवमं परमशाधि (यि) कम् ॥
दशमं शतपदं स्यान्नाम चासनमीरितम् ।
एकादशं तथा प्रोक्तं चैकविंशच्छतं पदम् ॥
स्थानीयं नाम चैवं तु चाथ द्वादशकं तथा ।
वेदाधिक्यं स चत्वारिंशदेव (द्देश्यं) शताधिकं पदम् ॥
त्रयोदशं तथा प्रोक्तं नवषष्ट्यधिकं शतम् ।
पदमेवं विधिं ज्ञात्वा नाम चोभयचण्डितम् ॥
चतुर्दशं तथा प्रोक्तं षण्णवत्यधिकं शतम् ।
नाम तद्भद्रमेवं (तु अ) चाथ पञ्चदशं तथा ॥
पञ्चविंशपदाधिक्यं शतद्वयपदान्वितम् ।
नामं (म) महासनं प्रोक्तमथ षोडशकं तथा ॥
सप्ताष्टाधिकं द्विशतं पञ्चगर्भपदं भवेत् ।
तथा वै सप्तदशकं नवाशीतिशतद्वयम् ॥
त्रियुतं पदमेवोक्तं तथाष्टादश(मं)कं तथा ।
चतुर्विंशत्सत्रिशतं चैव कर्णाष्टकं भवेत् ॥
एकोनविंशति तथा (चैव) सैकषष्टिशतत्रयम् ।
गणितं पदमित्येवं तथा विंशतिकं ततः ॥
चतुःशतपदं चैव प्रोक्तं कुर्याद्वि (सूर्यवि) शालकम् ।
तथा चैकविंशतिकं चैकपञ्चाष्टमाधिकम् ॥
चतुःशतपदं युक्तं सुसंहितमितीरितम् ।
तथापि द्वाविंशतिकं वेदाशीतिचतुःशतम् ॥
पदं सुप्रतिमाकान्तं स्यात्त्रयोविंशद्विधानके ।
नवविंशत्पञ्चशतं पदमेतद्विशालकम् ॥

चतुर्विंशद्विधाने तु षडाधिक्यं (क्य) सप्तति।
पञ्चशतपदयुतं विप्रगर्भमिति स्मृतम्।
पंञ्चविंशद्विधाने तु पञ्चविंशत्सषट्शतम्।
पदं विवेश (विश्वेशं) संज्ञातं (य?) नामसे वं प्रकीर्तितम्॥
षड्विंशतिविधाने तु षट्सप्ततिकसंयुतम्।
षट्शतं पद (दं) संज्ञात्वा विपुल (ल) भोगमिति (गं तु) स्मृतम्॥
सप्तविंशद्विधाने तु नवविंशतिसप्तशः।
शतयुतं पदं चैव विप्रकान्तमिति स्मृतम्॥
तथापि चाष्टाविंशत्ये वेदा (शीतिं च सा) शीत्या तथाधिकम्।
सप्तसंख्याशतयुतं विशालाक्षमिति स्मृतम्।
नवविंशद्विधाने तु चत्वारिंशैकमा (कं चा) धिकम्॥
अष्टशतपदयुक्तं विप्रभक्तीति (क्तिस्तु) कीर्तितम्॥
तत्र त्रिंशद्विधाने तु पदं नवशतं तथा।
एवं विश्वेशसारं च चैकत्रिंशद्विधानतः॥
एकषष्टिसमाधिक्य पदं नवशतयुतम्।
एवमीश्वरकान्तं स्याद्द्वात्रिंशद्विधानके॥
चतुर्विंशतिसंयुक्तसहस्रपदसम्मितम्।
एवं तु चन्द्रकान्तं स्यादेवमुक्तं पुरातनैः॥

मय०
वास्तुभेदाः
७. १—२१

वक्ष्येऽहं पदविन्यासं सर्ववस्तुसनातनम्।
सकलं पेचकं पीठं महापीठमतः परम्॥
उपपीठमुग्रपीठं (च?) स्थण्डिलं नाम चण्डितम्।
मण्डूकपदकं चैव पदं परमशायिकम्॥
तथासनं च स्थानीयं देशीयोभयचण्डितम्।
भद्रं महासनं पद्मगर्भं च त्रियुतं पदम्॥
व्रतभोगपदं चैव कर्णाष्टकपदं तथा।
गणितं पादमित्युक्तं पदं सूर्यविशालकम्॥
सुसंहितपदं चैव सुप्रतीकान्तमेव च।
विशालं विप्रगर्भं च विश्वेशं च ततः परम्॥
तथा विपुलभोगं च पदं विप्रतिकान्तकम्।
विशालाक्षपदं चैव विप्रभक्तिकसंज्ञकम्॥
पदं विश्वेशसारं च तथैवेश्वरकान्तकम्।
इन्द्रकान्तपदं चैव द्वात्रिंशत् कथितानि वै॥
सकलं पदमेकं स्यात् पेचकं तु चतुष्पदम्।
पीठं नवपदं चैव महापीठं द्विरष्टकम्॥
पञ्चविंशत्युपपीठं षटषटेचोग्रपीठकम्।

स्थण्डिलं सप्तसप्तांशं मण्डूकं चाष्टकाष्टकम् ॥
परमशायिपदं चैव नन्दनन्दपदं भवेत् ।
आसनं शतभागं स्यादेकविंशच्छतं पदम् ॥
स्थानीयं स्याच्चतुश्चत्वारिंशच्छतपदाधिकम् ।
देशीयं नवषष्ट्यंशं शतं चोभचण्डितम् ॥
षण्णवत्यधिकं चैव शतं चैव महासनम् ।
सपञ्चविंशद् द्विशतं पञ्चगर्भमिति स्मृतम् ॥
षडाधिक्यं तु पञ्चाशद्द्विशतं त्रियुतं पदम् ।
द्विशतं सनवाशीति व्रतभोगमिति स्मृतम् ॥
त्रिशतं च चतुर्विंशत् कर्णाष्टकपदं तथा ।
त्रिशतं चैकषष्ट्यंशं गणितं पदसंज्ञितम् ॥
चतुःशतपदं सूर्यविशालं परिकीर्तितम् ।
सुसंहितपदं चैकचत्वारिंशच्चतुःशतम् ॥
सवेदाशीतिचत्वारः शतं सुप्रतिकान्तकम् ॥
नवविंशत्पञ्चशतं विशालं पदमीरितम् ॥
षट्सप्ततिः पञ्चशतं विप्रगर्भमिति स्मृतम् ।
विश्वेशं षट्शतं पश्चात् पञ्चविंशत्पदं स्मृतम् ॥
षट्सप्ततिः षट्शतकं विपुलभोगमिति स्मृतम् ।
नवविंशतिकं सप्तशतं विप्रतिकान्तकम् ॥
विशालाक्षपदं वेदाशीतिसप्तशताधिकम् ।
सैकाष्टपञ्चयुक्तं चाष्टशतं विप्रभक्तिकम् ॥
विश्वेशसारमित्युक्तमेवं नवशतं पदम् ।
सैकषष्ट्या नवशतं पदमीश्वरकान्तकम् ॥
चतुर्विंशतिसंयुक्तं सहस्रपदसंकुलम् ।
इन्द्रकान्तमिति प्रोक्तं तन्त्रविद्भिः पुरातनैः ॥

शिल्प०
वास्तुभेदाः
६. १—६$\frac{1}{2}$

.........पदविन्यासः कथ्यते वास्तुसिद्धये ।
सकलं पेचकं पीठं महापीठोपपीठके ॥
उग्रपीठं स्थण्डिलं च मण्डूकपरशायिकम् ।
आसनं च तथा स्थानीयं च देशीयमुच्यते ॥
भयचण्डिताख्यपदं तथा भद्रमहासनम् ।
पञ्चगर्भं त्रियुतकं वृत्ताभोगाभिधं पुनः ॥
कर्णाष्टकपदं तद्वत् तथैव गणिकापदम् ।
पदं सूर्यविशालं तु सुसंहितपदं पुनः ॥
सुप्रतीकान्तं तद्वद् विशालं विप्रगर्भकम् ।
विश्वेशं विपुलाभोगं तथा विप्रतिकान्तकम् ॥

विशालाक्षं विप्रभक्तिकं च विश्वेशसारकम्।
तथैवेश्वरकान्ताख्यमिन्द्रकान्तपदं पुनः॥
द्वात्रिंशद्भेदसंयुक्तमेवं पदमिति स्मृतम्।

अवास्तुकार्मणज्ञानम् १३. १—१६½

मर्मादीनि निषिद्धानि वास्तुकर्मण्यनेकधा।
सन्ति संक्षेपतस्तानि द्विधा वक्ष्यामि सांप्रतम्॥
नाम्ना स्युर्दश पूर्वसौम्यमुखगा वास्तौ स्थिताः कल्पिते-
ष्वेकाशीतिपदेषु कर्णनिहिते सूत्रे लिखेत् तद्युते।
पश्चात् षट्त्रिपदस्थिता श्रुतिः+ + पार्श्वस्थिता रज्जवो
मर्मादीनि विभज्य वच्मि बहुधा तन्नाडिका रज्जुभिः॥
धर्मा यशोवती भद्रा शुभदा कामदा शुभा।
चित्रा सौम्या सुधा गौरी नाड्यः प्रागानना दश॥
अमृता वारुणी शान्ता नादिनी ब्रह्मवादिनी।
मनोरमा रतिः कान्ता ज्वालिनीशोत्तरानना॥
दक्षिणादिक्रमाज्ज्ञेया तद्रज्जुयुतिषु क्रमात्।
अष्टाभिः सङ्गतिर्यत्र नाडीरज्जुविमिश्रितैः॥
सूत्रैस्तत्र महामर्म ब्रह्मस्थानस्य कोणतः।
प्रत्येकं दिक्षु षट्कानि त्रिकोणा सन्ति पार्श्वतः॥
नाडीद्वयसमायोगान्युपमर्माणि तानि तु।
चतुर्विंशच्चतुष्काणि नाडीमर्माणि सन्ति च।
रज्जुमर्माणि रज्जुभ्यां चतुष्कं नवकं भवेत्।
कोणस्तम्भगमर्मान्तं त्रिकं बाह्यं विनिर्दिशेत्॥
षट्कं च मर्मसंभेदं कृतिं षण्णां वदन्ति हि।
पञ्चकं मर्मसन्धिश्च द्वे द्वे दिक्षु चतुर्ष्वपि॥
मध्यस्थितं समर्मरज्जुभ्यां दोषवर्जितम्।
स्थानान्येतानि वास्तोर्गृहकरणविधौ पीडयेन्नैव विद्वान्,
पीडा स्यात् पीडितेषु क्षितिपतिविषयब्राह्मणानां पशूनाम्।
तत्कर्तुः शिल्पिनां वा सतनयवनिताभ्रातृसंबन्धिनां च,
स्वस्थाः स्युस्तेन विद्धे पृथगथ विहितान् वच्मि दोषान् विभज्य॥
मूर्ध्नि वक्त्रे च कर्णे च हृदये मरणं भवेत्।
विद्धे चोरसि हृद्रोगं पादयोः कलहस्तथा॥
ललाटे भ्रातृहानिः स्याद् ,वित्तहानिस्तु पृष्ठयोः।
ऊर्वोर्मूत्युस्तु बन्धूनां पत्नीनाशस्तु वा भवेत्॥
गुह्ये तु सुतहानिःस्यादष्टके गर्भविच्युतिः।
षट्के च वृद्धिः शत्रूणां चतुष्के च गजक्षयः॥
पञ्चके व्याधिरुद्दिष्टस्तस्करेभ्यस्त्रिके भयम्।

वर्जयेत् कुड्यमध्ये च स्तम्भमध्यादिषु त्विदम् ॥
उक्तानुक्तं च यत्किञ्चित् प्रमादाद् यदि संभवेत् ।
एतानि दोषशान्त्यर्थं निधनेद्वास्तुकर्मणि ॥
सिंहमातङ्गमहिषकिटिकूर्मशिरांसि च ।
शुद्धहाटकक्लृप्तानि कर्तुः सौख्यविवृद्धये ॥

---

मानम्—

१. वि० वा० ७. ६२–८४

तद्वस्तु मानयेच्छिल्पी मानदण्डेन सर्वतः ।
तस्मान्मानं शिल्पिवर्गैरवश्यं ज्ञेयमीरितम् ॥
मानज्ञानविहीनैस्तु कर्म कर्तुं न शक्यते ।
कृतं च कर्म वैफल्यं भजते नात्र संशयः ॥
तन्मानं बहुधा प्रोक्तं तज्ज्ञेयं सूक्ष्मचक्षुषा ।
स्वर्गे लोके मानमादौ गुरुणा संप्रकीर्तितम् ॥
विविधं तच्च मघवा प्रोक्तवान्सुरसंसदि ।
देवेन नन्दिना तच्च बहुधाविष्कृतं पुरा ॥
तदेव विविधं प्रोक्तं नारदेन महर्षिणा ।
मानमेवं बहुविधं कथितं पूर्वसूरिभिः ॥
देवमानुषभूपालप्रासादेषु गृहेषु च ।
मण्टपेषु विमानेषु गोपुरे तोरणेऽपि च ॥
सोपानेषु प्रतोलीषु वापीकूपादिकेषु च ।
विविधासु च शालासु चन्द्रशालादिकासु च ॥
डोलादिषु गवाक्षेषु खट्वासु प्रतिमासु च ।
उपपीठेषु पीठेषु सिंहवक्त्रादिकेषु च ॥
अन्येषु शिल्पकार्येषु यन्मानं तच्च योजयेत् ।
मानाभावे क्रियादीनां न शोभा न बलादिकम् ॥
द्रव्यनाशश्चापयशो भवत्येव न संशयः ।
तस्मान्मानं शिल्पिवर्गैरवश्यं ज्ञेयमीरितम् ॥
परमाण्वादिमानन्तु प्रसिद्धं सुरसंसदि ।
न ग्राह्यं नापि विज्ञेयं मानवैस्तु कदाचन ॥
तस्मान्मानवमानन्तु प्रोच्यते फलदायि तत् ।
शालिव्रीहिस्तु सर्वत्र सिद्धमानोदयो मतः ॥
तैर्व्रीहिभिस्त्रिभिर्युक्तमङ्गुलं मानवं मतम् ।
द्वादशाङ्गुलसंयुक्तो वितस्तिरभिधीयते ॥
वितस्तिद्वयसंयुक्तं हस्तमानमुदीरितम् ।

हस्तमानद्वयोपेतो धनुर्मुष्टिरितीरिता ॥
धनुर्मुष्टिद्वयोपेतो दण्ड इत्यभिधीयते ।
दण्डद्वयेन संयुक्तो नृपदण्ड इतीरितः ॥
नृपदण्डद्वयोपेतो ब्रह्मदण्ड इति स्मृतः ।
इत्यादि बहुधा मानं शास्त्रेषूक्तं मनीषिभिः ॥
दारुणा पट्टवस्त्रेण लोहैर्वा वल्कलादिभिः ।
मानसूत्रमिदं कार्यं शिल्पिभिश्शास्त्रपारगैः ॥
वेरनिर्माणकार्येषु धनुर्मुष्टिरुदीरिता ।
विमाने देवपीठेषु वह्निशालादिकासु च ॥
हस्तमानन्तु संयोज्यं कार्यज्ञैश्शिल्पिनां वरैः ।
दण्डेन मानयेद्ग्रामनगरादीन्नृपेण वा ॥
घण्टापथं च शृङ्गाटं चत्वरं मानवं गृहम् ।
निषद्यां विपर्णिं मार्गशालां सस्यचितिं तथा ॥
दण्डेन क्ष्मापदण्डेन मानयेच्छिल्पकोविदः ।
पुष्कलं ग्राममानं च गिरिदुर्गवनानि च ॥
तरङ्गिणीं तटाकं च नृपप्रासादकन्तथा ।
उपकार्यां च विविधामवरोधांश्च शिल्पिराट् ॥
मानयेन्नृपदण्डेन सर्ववास्तुप्रमाणवित् ।
देवप्रासादशालादीन्ब्रह्मदण्डेन मानयेत् ॥
स्थिरधीरप्रमत्तश्च मानविच्छिल्पकोविदः ॥

२. स० सू०

(क) हस्त-विभाजनं ६.४–६

रेणवष्टकेन बालाग्रं लिक्षा स्यादष्टभिस्तु तैः ।
भवेद् यूकाष्टभिस्ताभिर्यवमध्यं तदष्टकात् ॥
अष्टाभिः सप्तभिः षड्भिरङ्गुलानि यवोदरैः ।
ज्येष्ठमध्यकनिष्ठानि तच्चतुर्विंशतिः करः ॥
सोऽष्टभिः पर्वभिर्युक्तः करः कार्यो विजानता ।
करस्यार्धं चतुःपर्व शेषं स्याद् भक्तमङ्गुलैः ॥
तत्राग्रे पर्वरेखाः स्युस्तिस्रः पुष्पकभूषिताः ।
शेषास्त्वङ्गुलरेखासु पुष्पाणि विदधीत न ॥
अग्रार्धे मध्यतः कार्यं द्वेधा पञ्चममङ्गुलम् ।
मध्यं त्रिधाष्टमं कार्यं चतुर्धा द्वादशं ततः ॥
हस्तः स्वाङ्गुलमानेन विधेयाङ्गुल(मि?)इष्यते ।
तत् सार्धं द्विगुणं वापि वाहुल्यं तु तदर्धतः ॥

(ख) मान-विभाजनं ६.३६½-४०½

स्यादेकमङ्गुलं मात्रा कला प्रोक्ताङ्गुलद्वयम् ।
पर्व त्रीण्यङ्गुलान्याहुर्मुष्टिः स्याच्चतुरङ्गुला ॥
तलं स्यात् पञ्चभिः षड्भिः करःपादाङ्गुलैर्भवेत् ।

सप्तभि(र्द्वि?)र्दिष्टिरष्टाभिरङ्गुलैस्तूणिरिष्यते ॥
प्रादेशो नवभिस्तैः स्याच्छ्रयतालो दशाङ्गुलः ।
गोकर्ण एकादशभिर्वितस्तिर्द्वादशाङ्गुला ॥
चतुर्दशभिरुद्दिष्टः पादो नाम तथाङ्गुलैः ।
रत्निः स्यादेकविंशत्या स्यादरत्निः करोन्मितः ॥
द्वाचत्वारिंशता किष्कुरङ्गुलैः परिकीर्तितः ।
चतुरुत्तरयाशीत्या व्यामः स्यात् पुरुषस्तथा ॥
षण्णवत्याङ्गुलैश्चापं भवेन्नाडीयुगं तथा ।
शतं षडुत्तरं दण्डो नल्वस्त्रिंशद्धनुर्मितः ॥
क्रोशो धनुःसहस्रं तु गव्यूतं तद्द्वयं विदुः ।
चतुर्गव्यूतमिच्छन्ति योजनं मानवेदिनः ॥
एकं दश शतमस्मात् सहस्रमनु चायुतम् ।
नियुतं प्रयुतं तस्मादर्बुदन्यर्बुदे अपि ॥
वृन्दखर्वनिखर्वाणि शङ्कुपद्माम्बुराशयः ।
ततः स्यान्मध्यमन्त्यं च परं चापरमप्यतः ॥
परार्धं चेति विज्ञेयं दशवृद्ध्योत्तरोत्तरम् ।
संख्यास्थानानि कथितान्येवमेतानि विंशतिः ॥

(ग) मान-प्रयोगः
९.३०½-३९

विभागायमविस्ताराः खेटग्रामपुरादिषु ।
प्रासादवेश्मपरिखाद्वाररथ्यासमादिषु ॥
मार्गाश्च निर्गमा(ये?श्चै)षां सीमक्षेत्रान्तराणि च ।
वनोपवनभागांश्च देशान्तरविभक्तयाः ॥
योजनक्रोशगव्यूतिप्रमाणमपि चाध्वनः ।
प्राशयेन प्रमातव्याः खातकक्षचराशयाः ॥
तलोच्छ्रयान् मूलपादान् जलोद्देशानधः क्षितेः ।
तथा दोलाम्बुशस्त्रादि पातमानविनिर्णयम् ॥
शैलखातनिकेतानि सुरुङ्गामानमान्तरम् ।
साधारणेन वाऽप्यध्वमासं च परिकल्पयेत् ॥
आयुधानि धनुर्दण्डान् यानं शयनमासनम् ॥
प्रमाणं कूपवापीनां गजानां वाजिनां नृणाम् ।
अरघट्टेक्षुयन्त्राणि युगयूपहलानि च ॥
शिल्प्युपस्करनौच्छत्रध्वजातोद्यानि यानि च ।
वृसीकर्मोपकरणाटवाणादिकं च यत् ।
तत्त्वदण्डास्तथा मात्राशयहस्तेन मापयेत् ॥

२. अ० पृ०
४१. १-२९½

हस्तलक्षणमानं च गायत्रीमानसम्भवः ।
मानोन्मानप्रमाणं च सर्वकर्मसु कारणम् ॥

विज्ञेयं सूत्रधारेण हस्तमानं च लक्षणम्।
मानोन्मानप्रमाणाख्यं वास्तुशास्त्रादिदीपकम्॥
भास्करोदयनाद् दिष्टः किरणैश्च प्रकाशितः।
जालान्तरगते रश्मौ सूक्ष्मरेण्वष्टमांशकः॥
परमाणुः प्रमाणं तद् समुद्दिष्टं समन्ततः।
परमाणुरष्टगुणमेकत्र पिण्डलक्षणम्॥
रजोभिरष्टगुणितं केशाग्रं च प्रसिद्ध्यति।
केशाग्रैरष्टगुणितैर्लिक्षाकर्म तु योजयेत्॥
केशाग्रैश्चाष्टगुणितैर्लिक्षा चैका तु सिद्ध्यति।
लिक्षाभिरष्टभिर्यूका यूकाभिश्चाष्टभिर्यवः॥
तथाष्टगुणितैश्चैव यवैर्मानं प्रसिद्ध्यति।
निर्दोषं मानमेतच्च स्यात्परमाणुमूलकम्॥
उत्तममध्यमाधमैस्त्रिविधो माननिर्णयः।
न्यूनाधिके कृते हस्ते दोषः स्याच्च महाभयम्॥
ज्येष्ठं चाष्टयवैः प्रोक्तं मध्यमं सप्तभिर्यवैः।
स्यात्कनिष्ठं षड्यवैस्तच्चतुर्विंशतिभिः करः॥
एवं मानोद्भवो हस्त उदितश्च त्रिधा क्रमात्।
अङ्गुष्ठाग्रे पर्वरेखा पुष्पकं त्रिभिरङ्गुलैः॥
ओं तत्पुरुषाय विद्महे महादेवाय धीमहि।
तन्नो रुद्रः प्रचोदयात्॥
एतान्यङ्गुलाक्षराणि क्रमतश्चैव संस्थिताः।
पुष्पके देवतास्तिस्रः प्रतिष्ठाप्या यथाक्रमम्॥
आदौ विष्णुरन्ते रुद्रो ब्रह्मा मध्ये च संस्थितः।
भूर्भुवः स्वर्बीजत्रयं स्युराद्यस्वरदेवताः॥
ईश्वरो वायुर्विश्वे च वह्निर्ब्रह्मा दिवाकरः ?
रुद्रो यमो विरूपाख्यो वसुरिन्द्रो जलाधिपः॥
स्कन्द इच्छा क्रियाज्ञानं धनदो विजयस्तथा।
वासुदेवो बलभद्रः प्रद्युम्नश्चानिरुद्धकः॥
एते च वासुदेवांशाः कम्बिकानिश्चलाः स्मृताः।
आगमैर्वेदमन्त्रैश्च पूज्याश्च परमाः कलाः॥
रुद्रश्च पवनस्त्वष्टाऽनलो ब्रह्मा तथा यमः।
वरुणो धनदो विष्णुर्मूलतश्चान्ततः स्थिताः॥
अञ्जनैः खदिरैर्वंशैः कनिष्ठाः सर्जपादपैः।
हेमरौप्यताम्रमयाः श्रेष्ठा लौहाश्च मध्यमाः॥
आयामश्चचतुर्विंशत्या त्रिविधाङ्गुलतः स्मृतः।

ज्येष्ठमध्यकनिष्ठानां प्रत्येकं हस्तसङ्ख्यया ॥
नगरग्रामपूःखेटकूटानां कर्वटस्य च ।
मानसङ्ख्या योजनैश्च ज्येष्ठहस्तेन मापयेत् ॥
प्रासादप्रतिमालिङ्गजगतीपीठमण्डपान् ।
राज्ञां निवेशं भवनं मापयेन्मध्यमानतः ॥
शय्यासनं स्थालीपात्रं तत्र सिंहासनादिकम् ।
शस्त्रं यानं च झम्पानं मापयेच्च कनिष्ठतः ॥
सिद्धार्थाङ्गुलपृथुत्वे पिण्डं कुर्यात् तदर्धतः ।
चतुर्विंशत्यङ्गुलानां क्रमेण नवदेवताः ॥
रुद्राद्या ब्रह्मपर्यन्तं देवाः स्थानेषु पुष्पके ।
ब्रह्मतो विष्णुपर्यन्तं रेखाः स्युर्द्वादशाङ्गुलैः ॥
ब्रह्मादिस्थानपञ्चकं विभक्तं चाङ्कितं त्रिधा ।
अष्टमाङ्गुलं कार्यं चतुर्धा द्वादशाङ्कितम् ॥
इत्युक्तमानप्रमाणं प्रयुक्तं वास्तुवेदिभिः ।
४. मान० २.२०-४० मुनीनां नयनोद्वीक्ष्य(क्ष्यं)तत्परमाणुरुदाहृतम् ॥
ताभिरष्टाभिर्गुणितं रथधूलिरिति स्मृतम् ।
रथधूल्यष्टमिलितं वालाग्र(न्तु) मिति तु स्मृतम् ॥
वालाग्रैरष्टधायुक्तं लिक्षेति परिकीर्तितम् ।
लिक्षै(क्षाभि) श्चाष्टभिरायुक्तं यूकं तमि(दि)ति कथ्यते ॥
यूकैरष्टाभिः(भिश्च)प्रोक्तं यवमेवं विधीयते ।
यवैरष्टसमायुक्तमङ्गुलं तत्प्रकीर्तितम् ॥
मानमात्रं त्रिधा प्रोक्तं यववृद्धिविशेषतः ।
षट्सप्ताष्टयवैरेतत्कनिष्ठो(ष्ठ)मध्यमोत्तमम् ॥
अङ्गुलैर्द्वादशभिर्युक्तं वितस्तिः परिकीर्तितम्(ता) ।
वितस्तियुग्मं किष्कुः स्यात्प्राजापत्योऽङ्गुलाधिकः ॥
षड्विंशतिकाङ्गुल्यं हस्तमुक्तं धनुर्ग्र (हं ?) हः ॥
चतुर्हस्तं धनुर्दण्डं दण्डाष्टं रज्जुमेव च ।
याने च शयने चैव किष्कुहस्तेन मानयेत् ॥
विमानस्य तु सर्वेषां प्राजापत्येन मानयेत् ।
मानयेद्वास्तु यन्मानं धनुर्मुष्टिकरेण च ॥
ग्रामादीनां च मानानां(च सर्वेषां)मानयेत्तद्धनुर्ग्रहम् ।
किष्कुहस्तेन यन्मानं मानयेद्विश्वतस्तु वा ॥
शमी शाकं च चापं च खदिरः क्ष(रक्ष)तमालकः ।
क्षीरिणी तिन्त्रिणी(तिन्दिनी)चैव हस्तदारु प्रकीर्तितम् ॥
दारुसंग्रहणं(णात्) पश्चात्त्रिमासान्तं जले क्षिपेत् ।

क्षालयित्वा परिग्राह्यं तक्षकेण विदारयेत् ॥
तद्दारितं निकरं दारु तक्षयेच्चतुरस्रतः ।
एकहस्तसमं दीर्घं तदेकाङ्गुलविस्तृतम् ॥
घनमध्या(र्धा)ङ्गुलं प्रोक्तं हस्त(स्तं)निश्चित्य योजयेत् ।
न वक्रं न च भिन्नं च न रन्ध्रं स्निग्धमेव च ॥
क्रमुकं वा पि वेणुश्च च (गुश्च)दण्डदारु प्रकीर्तितम् ।
हस्तदण्डोभयोः प्रोक्तं(क्ता)विष्णुमूर्त्य(र्तिर)धिदेवता ॥
नालिकेर(नारिकेल)फलैःशाता(शाणैः)दर्भैर्न्यग्रोधवल्कलैः ।
कार्पासं(स)किंशुकैः(क)सूत्रैस्तालकेतकवल्कलैः ॥
यलमेद्वल्कलैर्ग्राह्यं रज्जुं संकल्पवित्तमः ।
पार्श्वादेकाङ्गुलं चैव तत्समं रज्जुनाहकम् ॥
देवभूसुरभूपानां त्रिवर्ति(र्ती)ग्रन्थिवर्जितम्(ता) ।
वणिजां शूद्रजातीनां रज्जुरेकद्विवर्तिता(र्ती च) ॥
वासुकी रज्जुदेवात्मा मानतज्ज्ञः(तज्ज्ञः)पितामहाः(हः) ।
तद्धार्य (तद्धृत्वा) हस्तं रज्जुश्च (च) मानदण्डं तथैव च ॥
स्मृत्वा मनसि तां(तान्)देवां(वान्)मानयेद्वर्धकी(किस्) तथा ।
एवं मान(ने)कृते वास्तुवस्त्वादि च विवर्धयेत् ॥
उक्तं न कुरुते यस्तु स स्थितो रेणुकं फलम् ।
तस्मात्परिहरेच्छिल्पी कारयेत्तत्तु विश्वतः ॥

५. मय० ५.१-१२½

सर्वेषामपि वास्तूनां मानेनैव विनिश्चयः ।
तस्मान्मानोपकरणं वक्ष्ये सङ्क्षेपतः क्रमात् ॥
परमाणुक्रमाद् वृद्धं मानाङ्गुलमिति स्मृतम् ।
परमाणुरिति प्रोक्तं योगिनां दृष्टिगोचरम् ॥
परमाणुभिरष्टाभी रथरेणुरुदाहृतः ।
रथरेणुश्च वालाग्रं लिक्षायूकायवास्तथा ॥
क्रमशोऽष्टगुणैः प्रोक्तो यवाष्टगुणितोऽङ्गुलः ।
अङ्गुलं तु भवेन्मात्रं वितस्तिर्द्वादशाङ्गुलम् ॥
तद्द्वयं हस्तमुद्दिष्टं तत् किष्किन्ति मतं चरैः ।
पञ्चविंशतिमात्रं तु प्राजापत्यमिति स्मृतम् ॥
षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहः ।
याने च शयने किष्कुः प्राजापत्यं विमानके ॥
वास्तूनां तु धनुर्मुष्टिर्ग्रामादीनां धनुर्ग्रहः ।
सर्वेषामपि वास्तूनां किष्कुरेवाथवा मतः ॥
रत्निश्चैवमरत्निश्च भुजो बाहुः करः स्मृतः ।
हस्ताश्चतुर्धनुर्दण्डौ यष्टिश्चैव प्रकीर्तिता ॥

दण्डेनाष्टगुणा रज्जुर्दण्डग्रामं च पत्तनम् ।
नगरं निगमं खेटं वेश्मादीन्यपि मानयेत् ॥
गृहादीनां तु हस्तेन याने च शयने बुधैः ।
वितस्तिना विधातव्यं क्षुद्राणामङ्गुलेन तु ॥
यवेनाल्पीयसां मानमेवं मानक्रमं विदुः ।
मध्यमाङ्गुलिमध्यस्थपर्वमात्रायतं तु यत् ॥
कर्तुर्मात्राङ्गुलं प्रोक्तं यागादीनां प्रशस्यते ।
देहलब्धाङ्गुलं यत्तदुपरिष्टाद् विधीयते ॥
एवमेवं विदित्वा तु स्थपतिर्मानयेद् दृढम् ।

६. शिल्प० २. १–२९

परमाणुरिति प्रोक्तो योगिनां दृष्टिगोचरः ।
त्रसरेणुरष्टभिः स्यात् तैरेव परमाणुभिः ॥
तदष्टभिस्तु बालाग्रं लीक्षा बालाग्रकाष्टभिः ।
लीक्षाष्टभिस्तु जूका स्याज्जूकाष्टगुणितो यवः ॥
यवोदरैः षड्गुणैर्वा सप्तभिर्वाधमादिकम् ।
क्रमादष्टगुणैर्वाथ मानाङ्गुलमिति स्मृतम् ॥
श्वेतशाली महाशाली रक्तशाली तथैव च ।
सौगन्धिशेमराली च शाली पञ्चविधा स्मृता ॥
चुण्णे सिता स्मृता शाली रक्तो व्रीहिरुदाहृतः ।
तासामुदरविस्तारैरपि मानाङ्गुलं स्मृतम् ॥
शाल्यायतैस्त्रिभिस्तैश्च सार्धैस्तैर्वेदसम्मितैः ।
मानाङ्गुलो नचाप्येवं कनिष्ठादीनि कल्पयेत् ॥
र(ल? क)शाल्यायतं तेषु द्विगुणं वा त्रिमात्रकम् ।
चतुस्त्रिंशद्विधं दुष्टमेवं मानाङ्गुलं बुधैः ॥
तद्भर्तुर्दक्षिणकरमध्यमामध्यपर्वणः (?) ।
दैर्घ्यं मात्राङ्गुलं श्रेष्ठं नीचं तद्द्वयसम्मितम् ॥
इत्थं मात्राङ्गुलं शिल्पशास्त्रज्ञैरीरितं द्विधा ।
अङ्गुलत्रितया मुष्टिर्वितस्तिर्द्वादशाङ्गुलिः ॥
तद्द्वयं हस्तमुद्दिष्टं तच्च किष्कुरिति स्मृतम् ।
एकैकाङ्गुलवृद्ध्यातो भवन्त्यष्टौ कराः स्फुटम् ॥
प्राजापत्यं धनुर्मुष्टिश्चापग्रहमतः परम् ।
प्राच्यां वैदेहकं नाम्ना वैपुल्यं च प्रकीर्तितम् ॥
इत्थमेकोत्तरत्रिंदङ्गुलान्ताः कराः स्मृताः ।
एवं त्वशीतिसंयुक्तद्विशतं करभेदकम् ॥
हस्तैश्चतुर्भिर्भवतीह दण्डो नीचोत्तमः पञ्चभिरेव हस्तैः ।
सार्धाऽधिहस्तैरथ मध्यमोऽयं क्रोशः सहस्रद्वितयेन तेषाम् ॥

स्याद् योजनं क्रोशचतुष्टयेन तथा कराणां दशकेन वंशः ।
निवर्तनं विंशतिसंख्यवंशैस्तथैव रज्जुर्गजदण्डदीर्घः ॥
ग्रासन्धेर्बद्धमुष्टिस्तु करोऽरत्निरुदाहृतः ।
स एवारत्निरुद्दिष्टास्त्वष्टौ चेदार्कनिष्ठिका ॥
प्रादेशतालगोकर्णवितस्त्यः स्युर्यथाक्रमम् ।
तर्जन्यादिकनिष्ठान्तमङ्गुष्ठाग्रात् प्रसारिताः ॥
मानाङ्गुलैः केवलमेव कुर्याद् देवालयादीनि गृहाणि वा नृणाम् ।
कुण्डादिकानामथ मण्डलानां सर्वत्र मात्राङ्गुलमिष्यते बुधैः ॥
याने च शयने किष्कुः प्राजापत्यं विमानके ।
ग्रारामोद्यानकादौ तु प्राजापत्यकरं स्मृतम् ॥
वास्तूनां च धनुर्मुष्टिर्ग्रामादीनामियं तु वा ।
वापीकूपादिमार्गादौ ग्रामादीनां धनुर्ग्रहम् ॥
विप्रादीनां करौ द्वौ द्वौ प्रकीर्णकधनुर्ग्रहौ ।
वैपुल्यचापमुष्ट्याख्यौ स्यातां भवनमापने ॥
प्राजापत्याख्यवैदेहौ किष्कुप्राच्यौ च तत्क्रमात् ।
सर्वेषां सर्ववस्तूनां किष्कुरेवाथवा मतः ॥
धनुर्ग्रहः प्रकीर्णाद्या द्विजानां गृहमापने ।
वैपुल्यं च धनुर्मुष्टिः क्षत्रियाणां विशेषतः ॥
प्राजापत्यं च वैदेहं वैश्यजात्यार्हकं स्मृतम् ।
किष्कुप्राच्यककूचैव शूद्राणामिति केचन (?) ॥
दण्डेन तद्ग्रामनिवेशनाद्यं पुराणि वाटं निगमं च कुर्यात् ।
हस्तेन वेद्यादिषु मानमुक्तं स्वल्पेषु चेदङ्गुलकैर्यवैर्वा ॥
मुष्टिः स्याद् यज्ञपात्रादौ वितस्तिर्वस्त्रकादिषु ।
तालं विम्बादिके माने भवेत्तद्धर्मि(?)तद्विधौ ॥

## आयादिषड्वर्गः

ग्रायादीनां षण्णां सामान्यम्

(i) तन्त्रसमु० २.३

इष्टातानवितानमाननिचये त्रिघ्नेऽष्टभिर्भाजिते ।
शेषो योनिरिह व्ययो मुनियुजाथायोऽष्टनिघ्नेऽस्त्वैः ॥
ऋक्षैर्ऋक्षमथासिरत्र तु वयो ज्ञेयं तिथिस्त्रिंशता ।
वारो भूमिधरैर्निधिप्रगुणिते धर्माहृते वा व्ययः ॥

(ii) विमर्षिणीतः विस्तारायामराशौ वसुगुणित इनैर्भाजिते शेष ग्रायो
रामघ्ने मन्वयाप्ते व्यय इह वसुभिर्भक्तशेषस्तु योनिः ।

अष्टाभिर्वर्धतेऽस्मिंस्त्रिनवहृतफलं तद्वयः शेषऋक्षं
पर्यन्ते त्रिंशदाप्ते तिथिऋषि भजिते वार आदित्यपूर्वः ॥

(iii) मयमततः व्यासायामसमूहे वसुनिधि गुणिते दिनेशधर्महृते
आयं व्ययमवशिष्टं शमघ्नेऽष्टाहृते योनिः ।

प्राची साधने आयादीनां महत्वं विशेषतश्चयोनेः ॥ (तन्त्रसमु० २.२.)
ईशादिप्रेतेशपर्यन्तदिक्स्थाः प्रासादाः ग्रामादिकेषुध्वजोत्थाः ।
गोयोन्युत्थाः शेषदिक्संस्थिता स्युस्तत्स्वाप्याचा चेष्यते तत्सयोनिः ॥

तथाहि मनुष्यालयचन्द्रिकायाम् (३. ३१)—
"योनिः प्राणा एव धाम्नां यदस्माद् ग्राह्यस्तत्तद्योययोनिप्रभेदः"

स० सू० आयव्ययांशकर्त्तारिण प्रवक्ष्यामोऽथ वेश्मनाम् ।
२६. ११½-१२½ गृहमानवशात् सम्यक् कर्तुः स्थानबलाबलम् ॥
(अ) आय-लक्षणम् नगरे वा पुरादौ वा दण्डैर्मानं विधीयते ।
१२½-२४½ तदलाभे करैः कार्यं सम्यगायविशुद्धये ॥
यत्र हस्तैर्मितिः क्षेत्रे तत्रायो हस्तसंश्रितः ।
क्षेत्रालाभे तु तत्रैव ग्राह्यः स स्यादिवाङ्गुलैः (?) ॥
अङ्गुलैस्तु सिते क्षेत्रे सोऽङ्गुलैस्तदलाभतः ।
पादैर्वाथ यवैर्वापि ग्राह्यः क्षेत्रानुसारतः ॥
गृहेषु कर्महस्तेन मानं स्वामिकरेण वा ।
देवतानां तु धिष्ण्येषु कर्महस्तेन केवलम् ॥
दैर्घ्यं हन्यात् पृथुत्वेन हरेद् भागं ततोऽष्टभिः ।
यच्छेषमायं तं विद्याच्छास्त्रदृष्टं ध्वजादिकम् ॥
ध्वजो धूमोऽथ सिंहश्च श्वा वृषः खरकुञ्जरौ ।
ध्वाङ्क्षश्चेति त उद्दिष्टाः प्राच्याद्यासु प्रदक्षिणम् ॥
अन्योन्याभिमुखास्ते च कामं स्वच्छन्दचारिणः ।
पूर्वाचार्यैः समुद्दिष्टा आयवृद्धिविधायकाः ॥
वृषसिंहगजाः शस्ताः प्रासादपुरवेश्मसु ।
ध्वजेऽर्थलाभः सन्तापो धूमे भोगो मृगाधिपे ॥
कलिः शुनि धनं धान्यं वृषे स्त्रीदूषणं खरे ।
गजे भद्राणि दृश्यन्ते ध्वाङ्क्षे तु मरणं ध्रुवम् ॥
वृषस्थाने गजं कुर्यात् सिंहं वृषभहस्तिनोः ।
न कुर्याद् वृषमन्यत्र शस्यते सर्वतो ध्वजः ॥
कल्याणं कुरुते सिंहो ब्राह्मणस्य विशेषतः ।
क्षत्रियस्य गजः शस्तो वृषभः शस्यते विशः ॥
शूद्रस्य ध्वज एवैकः शस्यतेऽर्थप्रदः सदा ।

एवमेते गृहादीनामायाः सर्वे प्रकीर्तिताः ॥
प्रदद्यादासने सिंहमातपत्रेषु तु ध्वजम् ।
चिह्नेष्वपि च सर्वेषु चामरव्यजनादिषु ॥
सिंहं गजं वा शस्त्रेषु रथेषु कवचेषु च ।
सार्थश्वगजपर्याणेष्विभं वृषभमेव च ॥
अर्थधारणपात्रेषु शयनेषु मतङ्गजम् ।
याने च वाहने चैव मतिमान् योजयेद् गजम् ॥
प्रासादप्रतिमालिङ्गपीठमण्डपवेदिषु ।
कुण्डेषु च ध्वजं दद्याद् देवोपकरणेषु च ॥
आयो गृहवदुद्वाहवेदीमण्डपयोर्भवेत् ।
महानसे वृषं दद्याज्जलाधारे जलाशये ॥
स्थाल्यां भोजनपात्रे च कोष्ठागारेऽन्नधारणे ।
एतद्गृहे तथा दद्याद् गृहोपकरणेषु च ॥
वृषभं गजशालायां प्रदद्याद् गजमेव वा ।
वृषं तुरगशालासु गोशालागोकुलेषु च ॥
गजाश्ववृषशालासु सिंहं यत्नेन वर्जयेत् ।
अधमानां खरध्वाङ्क्षधूमश्वानः शुभावहाः ॥
धूमोऽग्निजीविनां शस्तो ध्वाङ्क्षः सन्न्यासिनां हितः ।
श्वगणानां श्वपाकानां स्ववेश्मानां खरः शुभः ॥
नटनर्तकवेश्मेषु पण्यस्त्रीणां खरः शुभः ।
कुलालरजकादीनां तथा गर्दभजीविनाम् ॥

व्ययलक्षणम् ३४½–३६½

गृहादिषु क्षेत्रफलं गणयेदष्टभिर्भजेत् ।
त्रिघनेन भजेच्छेषं नक्षत्रेऽष्टहृते व्ययः ॥
पिशाचो राक्षसो यक्ष इति त्रेधा व्ययो मतः ।
साम्याधिक्यन्यूनताभिरायतः स्याद् यथाक्रमम् ॥

अंशक लक्षणम् ३६½–४०

व्ययं क्षेत्रफले क्षिप्त्वा गृहनामाक्षराणि च ।
भागं त्रिभिर्हरेत् तत्र यच्छेषं सोंऽशको भवेत् ॥
चतुरङ्गे यथा मन्त्री मुख्यो लग्नान्नवांशकः ।
तथा गृहादिषु प्रोक्तं मुख्यत्वेनांशकत्रयम् ॥
इन्द्रो यमश्च राजा च त्रयो नामभिरंशकाः ।
स्वनामतुल्यफलदा विज्ञातव्यास्त्रयोऽपि च ॥

तारालक्षणम् ४०–४८

गणयेत् स्वामिनक्षत्राद् यावत् स्याद् भवनस्य भम् ।
नवभिर्भाजिते तस्मिञ्शेषं तारा प्रकीर्तिता ॥
जन्म सम्पद्विपत्क्षेमपापसाधकनैधनीः ।
मैत्रीपरममैत्र्यौ च प्राहुः संज्ञाः समाः फले ॥

त्रिसप्तपञ्चमीर्भर्तुः हतारा विवर्जयेत् ।
आद्याद्वितीयाष्टम्यस्तु ताराः स्युरिह मध्यमाः ॥
तथा ऋक्षेऽपि चानिष्टे चन्द्रेऽष्टमगतेऽपि च ।
नयते दुरितं तारा चतुःपञ्चवती (?) नृणाम् ॥
सुरराक्षसमर्त्याख्या ऋक्षाणां स्युर्गणास्त्रयः ।
यद्गणर्क्षो भवेद् भर्ता तद्गणर्क्षं गृहं शुभम् ॥
मृगाश्विरेवतीस्वात्यो मैत्रं पुष्यपुनर्वसू ।
हस्तः श्रवण इत्येष देवाख्यो नवको गणः ॥
विशाखा कृत्तिकाश्लेषा नैर्ऋतं वारुणं मघा ।
चित्रा ज्येष्ठा धनिष्ठेति नवको राक्षसो गणः ॥
आर्द्राभरणीरोहिण्यस्तिस्रः पूर्वास्तथोत्तराः ।
इति नक्षत्रनवकं विज्ञेयं मानुषे गणे ॥
गणसाम्यं शुभा तारा, यस्य, भर्तुर्व्ययोऽल्पकः ।
षड्वर्गस्य सामान्यम् हितोंऽशकश्च तद्वेश्म भर्तुः शुभफलप्रदम् ॥
८९-९६ आयो व्ययश्च योनिश्च ताराश्च भवनांशकाः ।
गृहनामेति चिन्त्यानि करणानि गृहस्य षट् ॥
त्रिभिः शुभैः शुभं वेश्म द्वाभ्यामेकेन चाशुभम् ।
करणैश्चतुराद्यैस्तु शुभैरतिशुभं भवेत् ॥
न समायव्ययं वेश्म नाव्ययं नाधिकव्ययम् ।
न द्वितीयांशमसद्योनिभं च न कारयेत् ।
भर्तृतुल्याभिधानं च गृहं दूरात् परित्यजेत् ॥
समसप्तकमेषर्क्षं तृतीयैकादशं तथा ।
चतुर्थदशकं चेति कर्तव्यं मन्दिरं सदा ॥
षट्कोष्ठकं त्रिकोणं च वर्ज्यं द्विर्द्वादशं तथा ।
षट्कोष्ठके मृतिर्दैन्यं वियोगश्च भवेद् गृहे ॥
त्रिकोणे वसतां दुःखं वैधव्यं च प्रजायते ।
द्विर्द्वादशे पुत्रपौत्रगुरुबन्धुधनक्षयः ॥
हतेऽष्टभिः क्षेत्रफले खनेत्रशशिभाजिते ।
शेषं जीवितमेतस्मिन् पञ्चभक्ते भवेन्मृतिः ॥
सभुजं सहषड्दारु मुखमण्डपसंयुतम् ।
आयामतः पृथुत्वाच्च मानं कृत्वा विभाजयेत् ॥
सर्वतः शोधितं वास्तु यच्चलम्यङ्मितं भवेत् ।
स्वामिनस्तद् भवेद् धन्यं स्थपतेश्च यशस्करम् ॥
अर्चितं वर्धते वास्तु नारीभिः पशुभिर्नरैः ।
कीर्त्यायुर्धनधान्यैश्च प्रमोदैस्तु महोत्सवैः ॥

अ० पु० (अ)
६४.१-४९
(आयाधिकारः)

आयव्ययांशका ऋक्षं ताराचन्द्रबलं गृहे।
जीवितं मरणं ज्ञेयं वास्तुविज्ञानपूर्वकम्॥
नगरे वा पुरे चैव मानं दण्डैर्विधीयते।
वास्तुदण्ड इति प्रोक्तः सोऽत्र वै हस्तसङ्ख्यया॥
चतुर्हस्तं च यत्क्षेत्रमङ्गुलैश्च फलप्रदम्।
वस्वङ्गुलैश्च क्षेत्रं तु पादैर्वा प्रतिशोधयेत्॥
तत्क्षेत्रं तु यथाकारमस्मकार्यं विशोधयेत्।
यत्र हस्तमितिः क्षेत्रे तद्गृहं हस्तसङ्ख्यया॥
क्षेत्रालाभे तु तत्रैव स्यात्स्वदेहाङ्गुलैर्गृहम्।
अङ्गुलैः क्षेत्रमाने च अङ्गुलैस्तदलाभतः॥
पादैर्वापि यवैर्वापि गृहक्षेत्रानुसारतः।
तृणच्छन्दे स्वामिहस्तैर्हर्म्यादौ कर्मिहस्ततः॥
राजवेश्मपुरादीनां वापीकूपादिकस्य च।
प्रासादेषु च देवानां शास्त्रहस्तेन केवलम्॥
दैर्घ्यं हन्यात्पृथुत्वेन हरेद्भागं ततोऽष्टभिः।
शेषमायं चैव विद्याच्छास्त्रदृष्टं ध्वजादिकम्॥
ध्वजो धूमश्च सिंहश्च श्वानो वृषखरौ गजः।
ध्वाङ्क्षश्चेति समुद्दिष्टाः प्राच्यादिषु प्रदक्षिणाः॥
अन्योऽन्याभिमुखास्ते च क्रमच्छन्दानुसारतः।
पूर्वं चये समुद्दिष्टा आयुर्वृद्धिविधायकाः॥
ध्वजः सिंहो वृषगजौ शस्यन्ते सुखवेश्मनि।
अधमानां खरध्वाङ्क्षधूमश्वानः सुखावहाः॥
ध्वजः प्रायः कृतयुगे त्रेतायां सिंह एव च।
द्वापरे वृषबाहुल्यं गज एव कलौ युगे॥
कल्याणं कुरुते सिंहो नृपाणां च विशेषतः।
ध्वजः प्रशस्यते विप्रे वृषो वैश्ये तथोदितः॥
उत्तरोत्तरमाख्याताश्चतुर्वर्णफलप्रदाः ।
ध्वजे चैवार्थलाभः स्याद् धूमे संताप एव च॥
सिंहे च विपुला भोगाः कलिः श्वाने सदा भवेत्।
धनधान्यं वृषे चैव स्त्रीदूषणं च रासभे॥
गजे भद्राणि पश्यन्ति ध्वाङ्क्षे च मरणं ध्रुवम्।
प्रासादप्रतिमालिङ्गजगतीपीठमण्डपे ॥
वेदीकुण्डशुचिष्वेवं पताकाछत्रचामरे।
वापीकूपतडागानां कुण्डानां च जलाशये॥
ध्वजोद्भूयस्य संस्थाने ध्वजं तत्र निवेशयेत्।

आसने देवपीठेषु वस्त्रालङ्कारयोजने ॥
केयूरमुकुटाद्ये च वेशयेच्च ध्वजं शुभम् ।
अग्निकर्मसु सर्वेषु होमशालामहानसे ॥
धूमोऽग्निकुण्डसंस्थाने होमकर्मगृहेऽपि वा ।
आयुधानां समस्तानां नृपाणां भवनेषु च ॥
नृपासने सिंहद्वारे सिंहं तत्र निवेशयेत् ।
श्वानश्च म्लेच्छजातौ च गेहे श्वानोपजीविनाम् ॥
तथा चाग्रुद्धसंस्थाने प्रशस्तः श्वानको मतः ।
वणिक्कर्मसु सर्वेषु भोज्यपाधुत्रे मण्डपे ॥
वृषस्तुरङ्गशालायां गोशालायां च गोकुले ।
ततविततादिस्वरे वादित्रे विविधे तथा ॥
कुलालरजकादीनां खरो गर्दभजीविनाम् ।
गजश्च गजशालायां यानझम्पानयो रथे ॥
शय्यायां शिविकायां च गजमुद्रा चतुष्कतः ।
अन्तःपुरे गृहे प्रोक्तः पिण्डवास्यादिकोद्भवः ? ॥
अन्योपस्करकादौ च मदनागारके गजः ।
तथाऽरहट्टयन्त्रेषु जिनशालादिकेषु च ॥
ध्वाङ्क्षः कल्याणकृच्चैवं शिल्पकर्मोपजीविनाम् ।
स्वके स्वके वै स्थाने च सर्वे कल्याणकारकाः ॥
मित्रस्नेह्यानुगाश्चैव ते सर्वे हितकामदाः ।
वृषस्थाने गजं दद्यात् सिंहं वृषभहस्तिनोः ॥
ध्वजः सर्वेषुदातव्यो वृषो नान्यत्र दीयते ।
गजाभिदृष्टिः सिंहः स्याद् वारुणाभिमुखो ध्वजः ॥
वृषभः प्राच्यभिमुखो गजो याम्यमुखस्तथा ।
सन्मुखा याम्योत्तराश्च अशस्ताः पृष्ठतोमुखाः ॥
स्वके स्वके वै स्थाने च प्रशस्ताश्च त्रिदिशु च ।
ध्वजः पुरुषरूपश्च सिंहः सिंहस्वरूपकः ॥
वृषो वृषभरूपाढ्यो गजो हस्तिस्वरूपकः ।
धूमो मार्जाररूपाढ्यो श्वानः श्वानाधिरूपकः ॥
खरो गर्दभरूपाढ्यो ध्वाङ्क्षः काकस्वरूपकः ।
सर्वे च वृषभारूढाः पुरुषाकारमुद्गलाः ? ॥
तद्रूपकाश्च हस्ताभ्यां पादाभ्यां विहगानुगाः ।
ग्रीवया सिंहरूपाश्च प्रबलाश्च महोत्कटाः ॥
महागणेश्वराः प्रोक्ता अष्टदिक्क्षेत्रपालकाः ।
वास्तुकर्मसु सर्वेषु आया दिक्पतयोऽष्ट हि ॥

पूजिताः पूजयन्त्येव निघ्नन्ति चापदस्थिताः।
साध्यक्षेत्रं च त्रिपुटं प्रभिन्नं च नवांशकैः॥
अष्टौ तथाऽऽयस्थानानि मध्ये स्यात्कुलदेवता।
गृहस्याऽभिमुखाः शस्ताः मध्यमाश्च पराङ्मुखाः॥
नगराभिमुखाः शस्ताः पुरबाह्ये तु देवताः।
देवानां प्रतिमा आया दिशापाला इति स्मृताः॥
वसवः प्रतिदेवाश्च शिवयोगसमुद्भवाः।
यावत्तु शिवदेवत्वं यावच्चन्द्रार्कमेदिनी॥
तावच्च वास्तुशास्त्रोक्ता आयाश्च समुदाहृताः।
साध्यक्षेत्रगुणाकारैरायाश्चैव प्रतिष्ठिताः॥
यावत्तु क्षेत्रभक्तिश्च तावदायः प्रपालयेत्।
खण्डितं स्फुटितं जीर्णं विशीर्णं स्फुटस्फोटितम्॥
त्यक्त्वा च वास्तुदेवाद्यमायास्तेषु विवर्जिताः।
अपदं तस्य संस्थानं मासान्ते सन्धिशोधितम्॥
दिनाष्टके प्रलिप्ताङ्गं वर्जयन्ति च नित्यशः।
भानूदये मण्डलं च पुष्पप्रकरसंकुलम्।
उदुम्बरोत्तरङ्गाढ्यं जलकुम्भादिपूजनम्॥
गृह्णाति हुताशनं? स्वस्तिकैश्च महोत्सवैः।
एवं वास्तावायाद्यं च श्रियं चिन्तति नित्यशः॥
शिवस्य पुष्पैश्चरणौ सुपूजितौ वराङ्गनासेवनमल्पभोजनम्।
अनग्नशायित्वमपर्वमैथुनं चिरप्रनष्टां श्रियमानयन्ति॥

(ब) ६५. १—३१
नक्षत्रराशिचन्द्र,
मैत्र्यनुक्रमः

आयानां यत्तु क्षेत्रं च गुणितव्यं प्रतिष्ठयेत्।
तत्क्षेत्रस्य फलं साध्यं गुणितं दैर्घ्यविस्तरैः॥
फले चाष्टगुणे तस्मिन् सप्तविंशतिभाजिते।
यच्छेषं लभ्यते तत्र नक्षत्रं तद्गृहस्य च॥
देवनृराक्षसानां च नक्षत्राणां त्रिधा गणः।
यस्य यस्यानुगा मैत्री वैरं स्याच्च परस्परम्॥
स्वगणे परमा प्रीतिर्मध्यमा दैवमानुषे।
मर्त्यराक्षसयोर्मृत्युः कलहो देवरक्षसोः॥
नव देवगणाः प्रोक्ता मानुषा नव कीर्तिताः।
नव रक्षोगणाश्चैव नक्षत्राणां त्रिधा गणः॥
कृत्तिका मघा विशाखा आश्लेषा शततारका।
चित्रायुक्ता धनिष्ठा च ज्येष्ठा मूलं च राक्षसाः॥
मृगोऽश्विनी रेवती च हस्तः स्वातिः पुनर्वसू।
पुष्यानुराधाश्रवणमेते देवगणः स्मृतः॥

तिस्रः पूर्वाश्च भरणी आर्द्रा वै रोहिणी तथा।
उत्तरात्रयसंयुक्तः कीर्तितो मानुषो गणः॥
अथ राशीः प्रवक्ष्यामि लभ्या क्षेत्रफलेषु च।
तदनुक्रमयुक्तोऽस्य कथये तव साम्प्रतम्॥
गृहक्षेत्रेषु यद्वर्ग पञ्चत्रिंशशताहतम्।
षष्टिभिश्च हरेद् भागं भुक्तवत्यस्तु शेषतः॥
ऋक्षभुक्तिक्रमयुक्ता स्वस्वराशिकसंज्ञिताः।
स्युर्मेषाद्या राशयश्च अश्विन्यादिक्रमेण च॥
वास्तुचक्रादिचक्रेषु ग्रहवेधविशोधनैः।
अष्टाविंशतिरेवं च साभिजित् कृत्तिकादयः॥
चातुर्वर्ण्यप्रशस्तांश्च राशीनथ वदाम्यहम्।
तत्र त्रयस्त्रयः प्रोक्ता विप्रशूद्रान्तसार्गतः॥
वृश्चिकः कर्कटो मीनो ब्राह्मणाः परिकीर्तिता।
धनुर्मेषस्तथा सिंहो राजन्याश्च शुभाः स्मृताः॥
वृषः कन्या च मकर एते वैश्या उदाहृताः।
मिथुनं च तुला कुम्भस्त्रयः शूद्राः प्रकीर्तिताः॥
भवेद् द्वादशभिर्विप्रः क्षत्रियो नवभिस्तथा।
षड्राशिभ्यो भवेद् वैश्यस्त्रिभिः शूद्रः प्रशस्यते॥
चातुर्वर्णान्तरभेद एवमुक्तोऽपराजित।
प्रीत्यर्थं च पुनर्भेदं कथये तव साम्प्रतम्॥
षडष्टके ध्रुवं मृत्युः प्रीतिः स्यात् समसप्तमे।
अनिष्टं पञ्चनवमे पुष्टिर्दशचतुर्थके॥
तृतीयैकादशे मैत्री तृतीयद्वादशे रिपुः।
राशयः षड्विधा एवमन्योन्यं पतिवेश्मनोः॥
गृहाग्रे च यदा चन्द्रो क्षयं वेश्म करोति हि।
राट्चौराग्निभयं घोरं चन्द्रे वै पृष्ठमागते॥
धनधान्यजनारोग्यं कुरुते दक्षिणस्थिते।
श्रीस्त्रीपुत्रा उत्तमाश्च चन्द्रे वै उत्तरे स्थिते॥
सप्तोर्ध्वं स्थापयेद्रेखाः पुनर्भिन्नाश्च सप्तभिः।
रेखाः प्रोक्तानि साभिजिन्नक्षत्राण्यष्टविंशतिः॥
कृत्तिकादग्नमीशान्यां शेषर्क्षाणि प्रदक्षिणे।
गृहक्षेत्रोक्तमृक्षं च तत्र चन्द्रमुदीरयेत्॥
वेश्मपत्योर्भवेच्चैव गृहमैत्री परस्परम्।
द्वादशोक्ता राशयश्च नवैव च ग्रहास्तथा॥
तथैकराशिकाः केचित् केचिच्चैव द्विराशिकाः।

तदनुक्रमकं वक्ष्ये यदुक्तं परमेश्वरैः ॥
भौमस्य वृश्चिको मेषो भार्गवस्य तुलावृषौ।
बुधस्य कन्यामिथुने सोमस्यैवं तु कर्कटः ॥
सिंहः सूर्यस्य क्षेत्रं स्याद् धनुर्मीनौ तथा गुरोः।
शनेश्च कुम्भमकरौ गृहक्षेत्राधिपा इति ॥
न पीडयन्त्यात्मक्षेत्रं स्नेहिनः क्षेत्रपालकाः।
रिपुगृहं पीडयन्ति भस्मीकुर्वन्ति विग्रहे ॥
स्यात्सूर्यमन्दयोर्वैरं तथा च कुजमन्दयोः।
गुरुशुक्रयोः स्याद्वैरं चन्द्रेण च बुधस्य तु ॥
रवेरङ्गारकस्यैव मैत्री च गुरुचन्द्रयोः।
एषां त्रयाणां वै मैत्री ह्यन्येषां तु न विद्यते ॥
ग्रहाश्चत्वार एकत्र त्रय एकत्र संस्थिताः।
उभयोरन्तरं घोरं कालानल इवापरः ॥

(स) ६६. १–४२ व्ययांशकतारग्रहजीवमृत्युसर्वबलं

नक्षत्रे वसुभिर्भक्ते यच्छेषं व्ययमादिशेत्।
अष्टौ व्ययास्तथाप्रोक्ता आयेष्वष्टसु योजिताः ॥
आयाश्च कथिताः पूर्वं व्ययानां लक्षणं शृणु।
एकैका यस्य संस्थाने व्ययाश्च त्रिविधाः स्मृताः ॥
समो व्ययः पिशाचश्च राक्षसस्तु व्ययोऽधिकः।
व्ययो न्यूनो यक्षश्चैव धनधान्यकरः स्मृतः ॥
अनायव्यये कर्तरि आयहीने व्यये तथा।
व्ययाधिके विनश्यन्ति अचिरेणैव सर्वदा ॥
ध्वजादिष्वष्टस्वायेषु ह्यष्टौ शान्तादिका व्ययाः।
प्रत्येकव्ययसंस्थाभ आयो न्यूनेतरः स्मृतः ॥
शान्तः पौरः प्रद्योतश्च श्रियानन्दो मनोहरः।
श्रीवत्सो विभवश्चैव चिन्तात्मा च व्ययाःस्मृताः ॥
आयस्थाने व्ययो योज्यो ह्यप्रशस्तो व्ययोऽधिकः।
व्ययो न्यूनस्तथा श्रेष्ठो धनधान्यकरः स्मृतः ॥
स्मृतो ध्वजे शुभः शान्तः नित्यं कल्याणकारकः।
भोज्यं पूजाफलं शान्तिनृत्यं गीतं सुरालये ॥
धूम्रस्थाने यदा शान्तो हेमरत्नादिसम्भवः।
अग्न्युपजीवकानां च धातुद्रव्यफलप्रदः ॥
सिंहस्थाने च पौरश्चेत् सिंहवच्च पराक्रमैः।
निहन्ति रिपुसैन्यानि आत्मस्थाने महोत्सवाः ॥
प्रद्योतः श्वानसंस्थाने नित्यं भोगसुखावहः।
शय्यासु वेश्मनि तथानेकभोगादिकामदः ॥

श्रियानन्दो वृषस्थाने नित्यं श्रीसुखशान्तिदम्।
व्यवहारोपस्करं च गुरुदेवार्चने रतिम्॥
मनोहरः खरे युक्तः सर्वमनोरथप्रदः।
समस्तभोगयुक्तानां तीर्थयात्राप्रकाशकः॥
श्रीवत्सो गजसंस्थाने स्त्रीणां क्रीडात्मनः स्मृतः।
शृङ्गारभोगयुक्तानां बलपुष्टिप्रदायकः॥
विभवो ध्वाङ्क्षसंस्थाने शिल्पिनां हितकामदः।
सूत्रशास्त्रार्थसम्पन्ना भोगशृङ्गारनिश्चलाः॥
सर्वेषु शान्त आयेषु प्रशस्तः सर्वकामदः।
षट्सु सिंहादिषु शुभः पौरो धूमध्वजौ विना॥
ध्वजे धूमे तथा सिंहे प्रद्योतादीन् विवर्जयेत्।
शेषाणां सुप्रशस्ताश्च तथा स्थानेषु पञ्चसु॥
खरे वृषे श्रियानन्दो गजे ध्वाङ्क्षश्च शोभनः।
मनोहरं त्यजेत्सोऽथ खरे ध्वाङ्क्षे गजे शुभः॥
श्रीवत्सश्च गजे ध्वाङ्क्षे विभवो ध्वाङ्क्षके शुभः।
व्ययो न्यूनतरः श्रेष्ठो ह्यधिकश्चैव राक्षसः॥
चिन्तात्मकं व्ययं चापि ह्यायेष्वष्टसु वर्जयेत्।
पिशाचकमायसमं न कुर्याच्छुभकर्मसु॥
शृणु वत्स यथा चांशो वास्तुवेदे त्रिधा स्मृतः।
एकैकक्रमयोगो वै शुभश्चाशुभ उच्यते॥
यदुक्ता मूलराशौ च ह्यायार्थेषु फलं कृतम्।
तत्र राशौ व्यये मिश्रे गृहनामाक्षराणि च॥
गुणैर्भक्ते व्यये शेषसंशकं त्रिविधं विदुः।
इन्द्रो यमश्च राजा च त्रिभिर्नामभिरंशकाः॥
प्रासादप्रतिमालिङ्गे जगतीपीठमण्डपे।
वेदीकुण्डश्रुचु चैव इन्द्रश्चैव ध्वजादिषु॥
चैत्राद्धिसंक्षा? नागेन्द्रे गणाध्यक्षे च भैरवे।
ग्रहमातृगणे देव्यामादित्ये च यमांशकः॥
पुरप्राकारनगरखेटकूटे च कर्वटे।
हर्म्ये च राजवेश्मादौ शस्तो राजा तथा मतः॥
स्वर्गादिभोगयुक्तानां नृत्यगीतमहोत्सवे।
प्रजावने च पाण्डित्ये इन्द्रांशश्चोत्तमो मतः॥
विविधं च वणिक्कर्म मद्यमांसादिकं तथा।
इत्युक्तं क्रमतश्चेत्थं प्रशस्तं च यमांशके॥
गजाश्वरथक्रीडायां यानजंभानकादिके।

स्वर्गादितुल्यभोगाश्च राजांशक उदाहृताः ॥
त्र्यक्षराणि त्रिभेदाश्च त्रिदेवास्त्रिहुताशनाः ।
त्रयः कालास्त्रिसन्ध्याश्च रजःसत्वतमस्त्रयम् ॥
प्रमाणत्रयमेवं च ज्येष्ठमध्याधमैः क्रमात् ।
त्र्यंशकं तु समानीय वास्तुवेदभवं ततः ॥
गणयेत्स्वामिनक्षत्राद्यावदृक्षं गृहस्य च ।
नवभिस्तु हरेद् भागं शेषास्ताराः प्रकीर्तिताः ॥
शान्ता मनोहरा क्रूरा विजया कलिका तथा ।
पद्मिनी राक्षसी वीरा ह्यानन्दा नवमी स्मृता ॥
शान्ता शान्तिकरी नित्यं मनोह्लादा मनोहरा ।
क्रूरा प्रवर्जिता प्राज्ञैश्चौराग्न्यादिभयङ्करी ॥
विजया जयकल्याणा कलिका कलहप्रदा ।
पद्मया प्राप्यते सौख्यं महत्तीर्थफलं तथा ॥
राक्षसी च तथा घोरा निशायां भयदायिनी ।
वीरा सौम्या भोगदा च ह्यानन्दानन्दकारिणी ॥
एवं नवविधाकारा निराकारा हि तारकाः ।
क्षीणश्चन्द्रो यदा वारे भवेत्तारा बलप्रदा ॥
क्रूरा च कलिका चैव राक्षसी तु तृतीयका ।
क्रूराद्या इति वै तिस्रो वर्जयेच्छुभकर्मसु ॥
शान्ता मनोहरा चैव विजया पद्मिनी तथा ।
वीरा नन्देति षट्तारा नित्यं कल्याणकारिकाः ॥
करराशिहतोत्था ये भागैर्हृष्टं तथोऽष्टभिः ।
आधिपत्यं भवेच्छेषं नाम्ना च सदृशं फलम् ॥
वित्तत्य ? कनकश्चैव धूम्रको विजयः स्वरः ।
बिडालविजयौ चैव दन्तः कान्तस्तथा मृगः ॥
विषमआया भवेत्सप्त आयहीना व्ययाः शुभाः ।
आधिपत्यं समं शान्तं शुभदं सर्वदा नृणाम् ॥
अष्टभिश्च हते क्षेत्रे फले षष्टिविभाजिते ।
लब्धे दशगुणे जीवो मृत्युर्वै भूतभाजिते ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पञ्च तत्त्वानि प्रोक्तानि विभक्तानि स्युरन्तके ॥
अप्सु चाद्भिर्भवेन्मृत्युस्तेजस्यग्निबलं भवेत् ।
वायुर्वायुकरो देहे ह्याकाशे शून्यता भवेत् ॥
धनधान्येषु नष्टेषु देहः पतति जर्जरः ।
इत्थं मृत्युः प्रभवति पञ्चतत्त्वविनाशतः ।

अयोग्यं ग्रहनक्षत्रं ताराचन्द्रसौम्यादिकम् ॥
प्रीतिरायुश्च मृत्युश्च चिरं नन्दति चेद्भुवाः ।
त्रिभिः श्रेष्ठैस्तु श्रेष्ठं स्यात् पञ्चभिश्चोत्तमोत्तमम् ॥
सप्तभिः सर्वकल्याणं नवभिर्धनसंपदा ।
न षट्काष्टकं त्रिकोणं द्वादशीद्वितीयाष्टमी ॥
न चाष्टद्वादशे दृष्टी तारा त्रिपञ्चसप्तमी ।
न द्वितीयांशकं कुर्यात् तथा चाष्टमसायकम् ॥
न दृष्टस्तथा चन्द्रं नववास्तुककर्मणि ।
नाधिकस्तु व्ययः कार्यो न वेदा विमला ग्रहाः ? ॥
न स्वकुलस्याल्पविदिष्टं? न राशिवर्णवाहनः ।
पदे पूज्याः स्थिताः सर्वे हिंसन्ति स्वपदे स्थिताः ।
ग्रहा गावस्तथा विप्राः शापानुग्रहकारकाः ॥

---

## पताकादिषट्छन्दांसि

षट्छन्दांसि       मेरुश्च खण्डमेरुश्च पताका सूचिका तथा ।
स० सू० २६.६०     उद्दिष्टं नष्टमिति षट् छन्दांसीह प्रचक्षते ॥
मेरुविन्यासः       एकाद्येकोत्तरान् कोष्ठान् विन्यसेदिच्छयात्मनः ।
२६. ६१–६३        आद्यादारभ्य तद्वृद्धिर्यथा स्यात् पार्श्वयोः समम् ॥
मेरोरेकाधिका सङ्ख्या शरावस्येव चाकृतिः ।
प्रथमे कोष्ठके रूपमन्तं यावच्च पार्श्वयोः ॥
आसन्नोर्ध्वस्थयोरन्यैस्त्वेन्मध्ये सङ्कलितं पृथक् ।
तस्मिन्निष्टविकल्पानां सङ्ख्या स्याद्वृत्तपङ्क्तिगा ॥
खण्डमेरुः        खण्डमेरुं तु विन्यस्येत् तद्वदेकपार्श्वतः ।
२६. ६४–६५        प्रवृद्धैः कोष्ठकैस्तत्राप्यङ्काः प्राग्वत् फलं तथा ॥
अथापरः खण्डमेरुः कोष्ठांस्तन्मेष्टसङ्ख्यया ।
कृत्वैकापचितान् तानविभागापचितानधः ॥
पताका          एकाद्येकोत्तरानङ्कानाद्यपङ्क्तौ निवेशयेत् ।
२६. ६६–७०        अन्यासु पङ्क्तिष्वाद्यान्तं शून्या (न्याःना) येषु कल्पयेत् ॥
द्वितीयेषु च कोष्ठेषु तासामेकैकमावपेत् (?) ।
द्वितीयायां तृतीयादिकोष्ठकेषु यथाक्रमम् ॥
विकल्पयोगजानन्यान्पूर्वयोगतन्नवान् ।
फलं विकल्पयोगोऽप्यनेकस्मिन् परिकल्पयेत् ॥
एकाधिकान्तनीष्टायाः सङ्ख्यायास्त्रिचतुर्गतिकेत् ।

कोष्ठाने (कांच?तांश्च) रूपादींस्तन्मध्ये द्विगुणोत्तरान् ॥
एकोनं पृष्ठतस्तेषामेकं द्विगुणमग्रतः ।
नातिक्रामेत् परां सङ्ख्यां पताकाछन्द उच्यते ॥

सूची
२६. ७१–७३

तद्विनेष्टाद्यगा सङ्ख्येत्येकाद्यैस्तैस्ततो गृहे ।
न्यस्ताङ्कसङ्ख्याः सङ्ख्याः स्युरलिन्दाद्यैः प्रकल्पिताः ॥
एकैकमिष्टस्थानेषु लिखेत् सैकेष्वतः परम् ।
अन्त्या(द?द्) ते पूर्वपूर्वयुक्तेनायोजयेत् परम् ॥
अन्त्यादारभ्य तद्वनावकाद्येषु (?) च पर्ययात् ।
अलिन्दादिषु यत्र स्यात् सङ्ख्या सूचीं तु तां विदुः ॥

उद्दिष्टम्
२६. ७४–७५

उद्दिष्टे स्थापयेत् सङ्ख्यामुद्दिष्टां सम्भ (वे?जे) च ताम् ।
दलयेद् रूपयुक्तां तु दलयेन्नाम सम्भवेत् (?) ॥
लघुस्वरूपदलने सैकार्धे करणे गुरुः ।
यावदिष्टपदाप्तिः स्याल्लघवोऽलिन्दकोदयः ॥

नष्टम्
२६. ७५–७७

कृत्वा छन्दःसमुद्दिष्टं तदन्ते लघुनि द्विकम् ।
न्यसेदेकं गुरूणां च द्विगुणं द्विगुणं ततः ॥
व्यत्ययाल्लघुनः स्थाने द्विगुणादेककं गुरोः ।
कुर्यात् तमाद्यस्थानाङ्कसङ्ख्यां नष्टे गृहं भवेत् ॥

तेभ्यो गृहमूषा-संख्यादि ज्ञानम्
२६. ७८–८०

प्रास्यैकं कोष्ठमेकैकवृद्ध्या न्यस्येदूर्ध्वं पङ्क्तयो यावदिष्टाः ।
इष्टानेकादींल्लिखेदानुपूर्व्या कर्णेनाधः शून्यरूपे च दद्यात् ॥
कर्णस्थाङ्कः श्लेषतोऽङ्के भवेद् यस्तं विन्यस्येत् कोष्ठकेषु क्रमेण ।
उद्दिष्टाङ्को भद्रसङ्ख्यानि मध्ये, याभ्यः कर्णश्लेषतो मूषिकास्ताः ॥
एकादिषु द्विगुणितेष्विह यावदिष्ट मूषाग्रगव्युपहितेष्विह तेषु विद्यात् ।
उद्दिष्टवेश्मकृतनिर्गममार्गमूषासत्काङ्क सैकयुतिनिर्मितसङ्ख्यमोकः ॥

अ० पृ०
गृहप्रासादसंभूत-षट्छन्दा०
६८. १–४

छन्दश्च कथितं देव सर्वशास्त्राद्यसंभवम् ।
अन्यत्र छन्दभेदांश्च कथयस्व परमेश्वर ॥
गृहप्रासादसम्भूताश्छन्दाः षट्संज्ञकाः स्मृताः ।
कथयस्त्र प्रसादेन तेषां निर्णयमादितः ॥
मेरुश्च खण्डमेरुश्च पताका सूचिका तथा ।
उद्दिष्टं नष्टमित्युक्ताश्छन्दाः षड्बुधसम्मिताः ॥
एषां प्रस्तारसन्दोहं मम भ्रान्तिहरं परम् ।
त्वत्प्रसादेन देवेश छन्दशास्त्रसमुद्भवम् ॥

छन्दादिनिकाशो-संख्याधिकारः ।
६८.५–२५

प्रोक्ता भेदाश्छन्दसां षट् त्रिपुरान्तवेदोद्भवाः ।
भेदे शून्यं त्र्यशून्यं वेदाशू उपाङ्ग वध्रकशवः ? ॥
खशून्या भवेदमुक्ता सङ्ख्यामिति छन्दोद्भवा ।
प्रयुक्तशास्त्रछन्देषु भेदाश्च षड्विधाः क्रमात् ॥

लक्षणालङ्कारयुता भिन्ना अर्थार्थतस्तथा।
भिन्नास्तथैकाक्षरत इत्थं छन्दसमुद्भवः॥
श्रुतिस्मृतिपुराणानि मन्त्रमुद्राक्षराणि च।
मेरुच्छन्दसमुत्पन्नमाब्रह्मभुवनान्तकम्॥
माडमौडशुद्धशृङ्गतुङ्गारसिंहकादिकाः।
प्रोक्ता च राजवेश्मादौ मेरुच्छन्दसमुद्भवाः॥
आनकणाभिसंघाटा? गृहमालाकूटपञ्जरम्।
संभूता मेरुछन्दाच्च गृहा हर्म्यादिसंज्ञकाः॥
तृणपट्टवाजिपूर्णखण्डपाण्डव एव च।
प्रयुक्ता मेरुच्छन्दादौ वास्तुविद्भिरुदाहृताः॥
लतिना नागरा भौमा द्राविडाश्च विराटकाः।
सावन्धारा विमानाख्या मेरुच्छन्दसमुद्भवाः॥
स्तम्भगर्भतीर्थमाना खण्डा वेणुकलादिकम्।
मेरुच्छन्दोद्भवा रेखाः प्रोक्ताश्च सुरवेश्मनाम्॥
तथैकत्रिपञ्चसप्तनवशाखसमुद्भवम्।
प्रयुक्तं द्वारविधानं वास्तूपदेशका विदुः॥
गूढो नृत्यश्चद्रालोको भद्रावलोकनादिकाः।
चतुःषष्टिः समाख्याता मण्डपा मेरुछन्दतः॥
पद्मनाभिसभामार्गमन्दारभिन्नमिश्रकम्।
षड्विधं च वितानं स्यात् मेरुच्छन्दादुदाहृतम्॥
कर्णजा भ्रमजाश्चैव भद्रजा गर्भजास्तथा।
मध्यजाः पार्श्वजाः ख्याताः शालाश्च मेरुच्छन्दतः॥
वेदोबन्धं श्रीबन्धाख्यं पङ्कजं भद्रकं तथा।
सुभद्रं तारकं पीठं मेरुच्छन्दोविनिर्गतम्॥
सुरार्चितं चाद्यनादि स्वभु वाणं चतुर्थकम्।
शक्त्याख्यं वर्धमानं च लिङ्गं मेरुविनिःसृतम्॥
वेदाश्रा वर्तुलाख्या त्रिकोणा तु षडंशका।
वेदिका पत्रिका चैव पीठिका मेरुच्छन्दतः॥
सीमा गर्भस्तथा द्वारं तलकोर्ध्वविभक्तिकम्।
अर्चा च षड्विधा प्रोक्ता मेरुच्छन्दसमुद्भवा।
नगरं च पुरं ग्रामः खेटः कूटश्च कर्व्वटः।
एते च षड्विधा ज्ञेया मेरुच्छन्दविनिर्गताः॥
वापीकूपतडागं च रथयन्त्रचक्रादिकम्।
प्रयुक्तं मेरुच्छन्देषु वास्तुविद्भिरुदाहृतम्॥
वेदीसिंहासनं छत्रं शय्याकवचमायुधम्।

वास्तुवेदे समाख्यातं मेरुच्छन्दसमुद्भवन् ॥
रथवीथ्यन्तरमार्गाश्च षट् पन्थान एव च।
प्रयुक्ता वास्तुविद्भिश्च मेरुच्छन्दसमुद्भवाः ॥

मेरुछन्दः
६८. २६—४०

पृथ्व्याकारो यथा छन्दो मैर्वाकारसमुद्भवः।
षड्विधं मेरुच्छन्दश्च षट्त्रिंशच्छन्दभेदकाः ॥
भेदैस्तत्र त्र्यष्टशतैर्दशभिर्गुणितैस्ततः।
चतुर्विंशत्सहस्राणि छन्दभेदाश्च सङ्ख्यया ॥
इन्द्रोद्भवक्षमावृद्धी भूतकोणान्तमध्यमैः ? ।
इषुं प्राणेषु भजन्ती प्रत्येकविषमेपदम्? ॥
षड्भिर्नभशद्वैः कोटिर्मेरुच्छन्दे तु सङ्ख्यया।
तत्रोक्तमेवप्रमाणं सृष्टाम्भोजप्रकाशिना ॥
मेरुर्मेरूपमः कार्यः शरावस्येव चाकृतिः।
सृष्टिस्तदुद्भवा सूत्रपात्रे पात्रमिवापरम् ॥
मेरुश्च खण्डमेरुश्च पताका सूचिका तथा।
उद्दिष्टं नष्टमिति षट् छन्दांसीह प्रचक्षते ॥
मृत्युभीतैः पुरा देवैरात्मनश्छन्दनायकैः।
संस्मृतानीह छन्दांसि छादितैस्तैस्ततो महाः? ॥
छन्दे छन्दं समुद्दिष्टं वाससी कृतिरेव च।
छन्दोभिरावृतं सर्वं वन्द्यं सर्वत्र नान्यथा ॥
व्योम्नः पतते विन्दु?पतितो सविन्दुगर्भतो भवेत्।
गुरुर्लघुर्लतायांश्च तस्य चाष्टौ समुद्भवाः ॥
आद्यगुरोरधो ह्रस्वं पुनः शेषं यथोपरि।
अङ्कभिः पूरयेत् पश्चाद् यावत् सर्वहृतं पदम् ॥
गुरोरधस्ताच्च गुरुं निधाय शेषं समानं परिलिख्य सम्यक्।
खण्डं प्रकुर्याद् गुरुपूरणार्थं यावत्पदं सर्वलघुस्थमेते ॥
भवन्ति प्रस्तारगताश्च एते षट् सप्तमीप्रत्यय वै गृहाणाम् ?
ये नैव जानन्ति गुरूपदिष्टान् ते सूत्रधारा रिपवः प्रजानाम् ॥
एकाद्येकोत्तरान् कोष्ठान् विन्यसेदिच्छयात्मनः।
आद्यादारभ्य तद्वृद्धिर्यथास्यात्पार्श्वयोः समम् ॥
मेरोरेकाधिका संख्या शरावस्येव चाकृतिः।
प्रथमे कोष्ठके रूपमन्तं यावच्च पार्श्वयोः ॥
आसनोर्ध्वस्थयोर्न्यस्येन्मध्ये सङ्कलितं पृथक्।
तस्मिन्निष्टविकल्पानां सङ्ख्या स्यादन्त्यपङ्क्तिगा ॥

खण्डमेरुः
६८.४१—४९

खण्डमेरुं तु विन्यस्येत् तद्वदेकैकपार्श्वतः।
प्रवृद्धैः कोष्ठकैस्तत्राप्यङ्काः प्राग्वत् फलं यथा ॥

# द्वितीयः खण्डः

## ( ग्राम-नगर-दुर्गादिवास्तु )

## प्रथमः पटलः

## ( औपोद्घातिकः )

| | |
|---|---|
| देशचयने वि० वा० | वास्तुभूर्विविधा ख्याता स्थलभेदात्क्वचित्क्वचित् । |
| वास्तुभूमिः प्रशस्ता | चतुरश्रायता भूमिर्वर्तुला च त्रिकोणगा । |
| अप्रशस्ता | मर्दलाकारवत्येषा प्रशस्ता वास्तुकर्मणि ॥ |
| ७.२ —३ | निम्नोन्नता च या भूमिश्शिरोहीना च भूरपि । |
| ७. ४ | वक्राकृतिश्च भूरन्या वर्ज्या सर्वेषु कर्मसु ॥ |
| खेटादि-पुर- | खेटस्य वास्तुभूमिस्तु प्रायः काननमध्यगा । |
| विशेष— | शबरैश्च पुलिन्दैश्च संयुता मांसजीविभिः ॥ |
| वास्तु-भूमिर्यथा— | वास्तुभूमिः खर्वटस्य नदीतीरगता मता । |
| ८.२०;२२-२३; | रसालसालबकुलैस्तिन्त्रिणीवेणुपाटलैः ॥ |
| २६-२७;३०-३१॥; | कदम्बैर्नारिकेलैश्च श्रीपर्णैस्तिलकैरपि । |
| ३३-३५॥ | छायावृक्षसमाकीर्णा निष्कुटारामसंवृता ॥ |
| इति दिक् | वनमध्यङ्गता वापि गिरिसानुसमीपभाक् । |
| | आरामभूमध्यगता पल्लीभूमिस्तु सौख्यदा ॥ |
| | मधूकैस्तिन्त्रिणीभिश्च रसालैर्नारिकेलकैः । |
| | पनसैश्च शिरीषैश्च संवृता च समन्ततः ॥ |
| | घोषभूमिश्शैवलिनीतीरभाग्वा वनान्तभाक् । |
| | गिरिसानुगता वापि सर्वकालेषु सौख्यदा ॥ |
| | वानीरबिल्वकुन्दाद्यैर्मालत्यादिभिरन्विता । |
| | चूतादि फलवृक्षैश्च सर्वतस्तु समावृता ॥ |
| | सस्यभूम्यावृता विष्वक्सुखग्राह्यजलान्विता । |
| | आभीरभूश्शैवलिनीतीरभाग्वा वनान्तभाक् ॥ |
| | सर्वतस्सूक्ष्मसिकता पुष्पगन्धाद्यगन्धिनी । |
| | मण्डलाख्यतृणैर्वासैरन्यैश्च बहुभिर्युता ॥ |
| | नारिकेलरसालादिफलवृक्षैस्समन्विता । |
| | सर्वतो हस्ततोयाढ्या भूमिरेवंविधा मता ॥ |
| | त्रिशद्वीथियुता क्षुद्रवीथियुक्च समन्ततः । |
| | वापीकूपतटाकाद्यैरन्विष्टा सुखदायिनी ॥ |

यथास्थानं जनपदान् खेटग्रामपुरादि च ॥

८. ४०—४३ स्निग्धाः सारभृतः शुद्धा प्रदक्षिणजलाशयाः ।
बहूदकास्तरुच्छन्ना निबिडा प्रागुदक्प्लवाः ॥
दूर्वास (स्वौ?श्यौ) षधीमुञ्जकुरुन्दकुशवल्कलैः ।
परितः परिणद्धाश्च स्वादुस्वच्छस्थिरोदकाः ॥
वास्तुयज्ञामरस्थानाद्यारामोद्यानसंभृताः ।
तटाकवापीस्थानैश्च याः समन्तादलङ्कृताः ॥
या वाहनानां सुखदा मिथुनानां रतिप्रदाः ।
पुरार्थं ताः प्रशस्यन्ते भूमयो जनितश्रियः ॥

शिल्प० (चतुर्धा भूमिः) ३. ४—१२
पूर्णा सुपा च तथैव भद्रा धूम्रा च भूमिर्विहिता चतुर्धा ।
वक्ष्ये च तासामपि लक्षणानि संक्षेपतो भूमिपरिग्रहार्थम् ॥
प्लक्षन्यग्रोधनिम्बार्जुनबकुलकुलत्था (प?स) नाशोकनिष्पा-
वाङ्कोलैर्मालतीचम्पकतिलखदिरैः कोद्रवैर्मुद्रिता वा ।
भूमिर्या भूधराधीश्वरशिखरगता पार्श्वसंस्थाऽथवाद्रेः
पूर्णा सा पुष्टिदात्री सुरनिलयसभा कल्पने स्वल्पतोया ॥
कर्पूरागरुनालिकेरतिलकैर्दर्भैः कदम्बार्जुनै-
र्मालेयैः क्रमुकेक्षुकेतककुशैः कुन्दारविन्दोत्पलैः ।
पूर्वोदक्प्लवशालिनी बहुजला वा या दरीदृश्यते
सेयं शान्तिकरी सुरेशयजने सूक्ता सुपद्मा मही ॥
तीरं वारिनिधेः श्रिताथ सरितस्तीर्थस्य वा दक्षिणे
व्रीहिक्षेत्रविचित्रिताप्यदिशि यज्ञार्हाङ्घ्रिपैरङ्किता ।
कीर्णा पुष्पफलप्रवालतरुभिर्योद्यानहृद्यापि वा
भद्रा सा परिगीयते वसुमती प्रीतिप्रदा यज्वनाम् ॥
अर्कैर्वेणुविभीतकैः स्नुहियुतैः श्लेष्मातकैः पीलुभिः
संकीर्णा बहुशर्करा च कठिना गर्भान्विता सोषरा ।
गृध्रश्येनवराहवायसशिवाशाखामृगैः सन्ततं
जुष्टा यष्टुरनिष्टदा निगदिता धूम्रा मही सूरिभिः ॥
वारुण्यैन्द्री तथाग्नेयी वायवी भूश्चतुर्विधा ।
तद्भवा च शिला ज्ञेया तन्नामा शुभदा शुभा ॥
या कोमलतरुव्राता स्वतः पुष्पितकानना ।
जलाशयैश्च सर्वत्र युक्ता भूर्वारुणी स्मृता ॥
या क्षीरवृक्षबहुला सौम्ये यस्या जलं महत् ।
व्रीहिक्षेत्रं च याम्यायां सा माहेन्द्री क्षितिःस्मृता ॥
गृध्रकङ्कवराहर्क्षश्येनगोमायुवायसैः ।
संयुक्ता दूरपानीया भूराग्नेयी विनिन्दिता ॥

अश्वस्नुहिकलिङ्गार्कपीलुश्लेष्मातकण्टकैः ।
युक्ता या निर्जला भूमिरशुभा वायवी स्मृता ॥

भूमिसंग्रहः भूपरीक्षा मृत्तिकापरीक्षा च।

वि० वा० भूमिसंग्रह-भू-परीक्षा च ५. १—२७॥

पुरा भूमिरियं धात्रा विशाला च वसुन्धरा ।
जलधारान्विता सृष्टा सशैलवनकानना ॥
हिमवद्विन्ध्यमलयैरन्यैः कुलमहीधरैः ।
कनकाद्यैर्दिव्यलोहैर्गर्भिता च समन्ततः ॥
तथापि भूगर्भसारात् क्वचित्स्वादुरसान्विता ।
क्वचिद्रसेन हीना च क्वचिदुष्णा च शीतला ॥
क्वचिद्भीकरसत्वाढ्या क्वचित्सत्वखगावृता ।
क्वचिदत्यन्तसुखदा क्वचिदुद्वेगकारिणी ॥
इत्येवं बहुधा जाता कालभेदेन भूरियम् ।
परीक्षयेद्वास्तुभूमिमतस्तल्लक्षणान्विताम् ॥
उत्तमा मध्यमा भूमिरधमा चेति सा त्रिधा ।
विभक्ता गुणभेदेन शास्त्रज्ञैः पूर्वसूरिभिः ॥
रसवर्णस्पर्शगन्धैरन्यैरपि च लक्षणैः ।
परीक्षयेदिमां भूमिं वास्तुयोग्यां बुधोत्तमः ॥
माधुर्यमृत्तिका भूमिर्देवविप्रहितप्रदा ।
तथोदुम्बरवृक्षाढ्या श्वेतवर्णा च भूरपि ॥
( उदीच्यां च जलोपेता भूरियं चोत्तमा मता ) ।
कषायमृत्तिका भूमी रक्तवर्णा च भूरपि ॥
पूर्वभागजलोपेता तथाश्वत्थद्रुमान्विता ।
विपुला लोहयुग्भूमिः क्षत्रियाणां हितप्रदा ॥
नातिकृष्णा न रक्ता च प्लक्षद्रुमसमन्विता ।
दक्षिणायां जलोपेता नातिनिम्नोन्नतस्थला ॥
भूरियं वैश्यजातानां बलसंपत्करा मता ।
( कटुमृत्स्ना कृष्णवर्णा वटवृक्षसमन्विता ॥
वारुण्यामुदकोपेता शूद्राणां क्षेमकारिणी) ।
इत्येवं जातिभेदेन कथितं भूमिलक्षणम् ॥
श्रीवृक्षैर्निम्बकाशोकै रसनैः क्रमुकैरपि ।
सौवीरैरिङ्गुदीभिश्च रसालैर्वञ्जुलैरपि ॥
केसरैस्सप्तपर्णैर्वा कुद्दालैः कोविदारकैः ।
आरग्वधैर्मधूकैर्वा प्लक्षैर्वा पाटलैस्तु वा ॥
श्रीपर्णैर्वा शिरीषैर्वा पूतिकैः खदिरैस्तथा ।
नदीभूर्जैर्नक्तमालैर्वेणुभिस्तिनिशैरपि ॥

नलदैर्वीरणैर्वासैर्नारिकेलैरथापि वा ।
मालत्या कुन्दलतया मुस्तादाडिममंजुलैः ॥
द्राक्षालतासमायुक्ता भूमिरेषा शुभप्रदा ॥
धेनुभिर्हरिणैर्वापि तुरगैर्वा विशेषतः ।
पारावतैः कोकिलैर्वा शुकैः कीरैस्थापि वा ॥
कारण्डैश्चक्रवाकैश्च मयूरै राजहंसकैः ।
गजैर्वा वृषभैर्वापि मेषसङ्घैर्विशेषतः ॥
भूमिरध्युषिता शस्ता सर्ववास्तुषु कीर्तिता ॥
लघुसैकतसंयुक्ता सुखस्पर्शयुतापि वा ।
निबिडा स्वादुतोयाढ्या समीपजलवर्षिणी ॥
मधुगन्धा पुष्पगन्धा सर्पिर्गन्धा च भूरपि ।
स्थिरवर्णा च भूश्शस्ता सर्ववास्तुषु कीर्तिता ॥
सा भूमिरुत्तमा ज्ञेया त्रिरात्राङ्कुरवर्धिनी ।
सा मध्यमा च विज्ञेया पञ्चरात्राङ्कुरप्रदा ॥
मन्दाङ्कुरप्रदा भूमिरधमा चेति गद्यते ।
सा वर्ज्या सर्वकार्येषु बीजानां क्षयकारिणी ॥
वर्ज्या कण्टकवृक्षैश्च तिग्मवृक्षैर्विदारकैः ।
वल्मीकेन समायुक्ता भूमिरस्थिगणैस्तु वा ॥
रन्ध्रान्विता च भूर्वर्ज्या गर्ताद्यैश्च समन्विता ।
वराहै रासभैर्व्याघ्रैस्सिंहाद्यैर्दुष्टजन्तुभिः ॥
भल्लूकैर्वनमार्जालैर्मूषकैर्वृश्चिकादिभिः ।
भूमिरध्युषिता वर्ज्या सर्ववास्तुषु हानिदा ॥
श्मशानभूसमीपस्था तुषभारैस्समन्विता ।
कम्पेन भेदिता भूमिरग्निदग्धा च सर्वतः ॥
भूमिरेवंविधा वर्ज्या कार्यज्ञैश्च शुभेप्सुभिः ।

स० सू०
भू-परीक्षा
गन्धाद्युचिता भूमिः
८. ४४-५१

कुङ्कुमागुरुकर्पूरस्पृक्कैलाचन्दनादिभिः ।
सुगन्धा मिश्रितैरेभिः पृथक्स्थैर्वा वसुन्धरा ॥
कल्हारपाटलाम्भोजमालतीचम्पकोत्पलैः ।
स्थलाम्बुप्रभवैश्चान्यैः सुगन्धा कुसुमैस्तथा ॥
गोमूत्रगोमयक्षीरदधिमध्वाज्यगन्धभाक् ।
समानगन्धा मदिरामाध्वीकेभमदासवैः ॥
शालिपिष्टकगन्धैश्च धान्यगन्धैश्च या तथा ।
प्रशस्ताखिलवर्णानामीदृग्गन्धा वसुन्धरा ॥
सिता रक्ता च पीता च कृष्णा चैव क्रमान्मही ।
विप्रादीनां हि वर्णानां सर्वेषामथवा हिता ॥

स्वादुः कषाया तिक्ता च कटुका चेत्यनुक्रमात् ।
वर्णानां स्वादतः शस्ता सर्वेषां मधुराथवा ॥
घर्मागमे हिमस्पर्शा या स्यादुष्णा हिमागमे ।
प्रावृष्युष्णहिमस्पर्शा सा प्रशस्ता वसुन्धरा ॥
मृदङ्गवल्लकीवेणुदुन्दुभीनां समा ध्वनौ ।
द्विपा (ब्द्वौ?य?श्वाब्धि) समस्वाना चेति स्युर्भूमयः शुभाः ॥

अप्रशस्ताभूमिः
स० सू०
४२-६२॥

इदानीमप्रशस्तानां भुवां लक्ष्माभिदध्महे ।
पुरादिसन्निवेशार्थं परित्याज्या भवन्ति याः ॥
भस्माङ्गारकपालास्थितुषकेशविषाश्मभिः ।
मूषकोत्करवल्मीकशर्कराभिश्च निर्भरा ॥
रूक्षा प्ररोहिणी निम्ना भङ्गुरा सुषिरोषरा ।
वामावर्तजलस्राविण्यसारा विषमोन्नता ॥
कटुकण्टकिनिःसारशुष्कनिष्फलपादपा ।
क्रव्यात्पक्षिसमाकीर्णा कृमिकीटवती च या ॥
सुकृतान्यपि भोज्यान्नभक्ष्यपानानि तत्क्षणात् ।
यस्यां विनाशमायान्ति सह तूर्यादिनिस्वनैः ॥
सरित् पूर्ववहा यस्यां पुरार्थं तामपि त्यजेत् ।
बहुनापि यतस्तत्र कालेनायाति सा पुनः ॥
वसासृङ्मज्जविण्मूत्रमलको (थ?श) पतत्रिणाम् ।
समगन्धां त्यजेदुर्वीं तैलस्य च शवस्य च ॥
सदैव धूम्रवर्णा या मिश्रवर्णाथवा मही ।
विवर्णा रूक्षवर्णा वा सा न स्यादिष्टदायिनी ॥
तिक्ताम्ललवणा चापि भूमिर्या स्वेदला भवेत् ।
तां लोकविद्वेषकरीं त्यजेत् पुरनिवेशने ॥
या रूक्षखरसंस्पर्शा सदैवोष्णा हिमाथवा ।
अनिष्टसुखसंस्पर्शा या स्यात् तामपि सन्त्यजेत् ॥
क्रोष्टूष्ट्रखरस्वाना या च निर्झरनिस्वना ।
भिन्नभाण्डसमक्रूरध्वनितापि च नेष्यते ॥
इति गन्धादिभिर्भूमिः कथितेयं शुभाशुभा ।

अ० पृ०
२१. १३-२२॥

भूमीनामष्टप्लवादि गुणदोषान् ब्रवीमि ते ।
पूर्वप्लवा धरा श्रेष्ठा ह्यायुःश्रीबलवर्द्धिनी ॥
सर्वसंपत्करी पुंसां प्रासादानां विभूतिदा ।
राज्यपूज्या सदानन्दा प्राक्प्लवाचेद्भवेन्मही ॥
आग्नेयप्लवका भूमिरग्निदाहभयावहा ।
शत्रुसन्तापदा नित्यं कलिदोऽग्निप्लवः स्मृतः ॥

नश्यन्ति पुरुषास्तत्र देवता च प्रणश्यति।
धनहानिकरो नित्यं रोगकृद् दक्षिणः प्लवः॥
प्रवर्तयेद् गृहे पुंसां रोगांश्च मृत्युदायकान्।
धनहानिं तथा नित्यं कुरुते नैऋतिप्लवा॥
पश्चिमप्लवका भूमिर्धनधान्यविनाशिनी।
शोकदाह्यं कुलं तत्र यत्र भूः पश्चिमप्लवा॥
शत्रुकर्त्री विरागा च गोत्रक्षयकरी तथा।
गृहे च कन्यकाहन्त्री सदा दुःखभयावहा॥
भुक्तं न जीर्यते तस्य मह्यां तत्र तु यो वसेत्।
एतान् दोषानावहति दोषदा वायुदिक्प्लवा॥
पूज्या लाभकरी नित्यं पुत्रपौत्रविवर्धिनी।
कामदा भोगदा चैव धनदा चोत्तरप्लवा॥
नरसौख्यसतीसत्यसौभाग्यादिविवर्द्धिनी।
धनार्थैश्वर्यसंपन्ना धर्मदेशानकप्लवा॥
सा विद्या धनसंपन्ना सर्वलोकहितावहा।
विनयाचारसम्पन्नपुत्रपौत्रादिसंकुला॥
नीरोगा दानशीला च विशिष्टजनसेविता।
पूर्वप्लवा तु या भूमिः शोभना सा प्रकीर्तिता॥
गृहप्रासादयोर्भूम्याः कथ्यतेऽनुक्रमोऽधुना।
मध्यप्लवा निकृष्टा स्यात् कनिष्ठा मध्यवर्तका॥
सर्वनाशकरी पुंसां सा भूमिस्तु निवासिनाम्।
वर्जयेद्विद्रुमां पमां तु करालां मस्तकोन्नताम्॥
चौरेभ्यो भयदा नित्यं द्रव्यनाशकरी स्मृता।
उच्छिन्ना च देवभूमी ऊर्ध्वसाधास्यतव्यही?॥
अजोष्ट्रखरसंसेव्यां वजयेत्तादृशीं महीम्।
सशल्या बहुभक्ता च ह्यूषरा शोककारिका॥
त्रिविधा स्फुटिता मृद्वी वृष्टिशुष्का रिक्ताङ्गिका।
कापदैः? अमगम्भीरा घटिका श्यत्तसिद्धिदा॥
वेणुगुल्मलताच्छाया द्विगुणा मध्यदूषिता।
त्रिगुणा पुन्नागवृक्षैः क्षीरवृक्षैश्चतुर्गुणा॥
पञ्चधाश्वत्थवृक्षैश्च षड्धा धात्री महीरुहैः।
सप्तधा पूर्णवृक्षैश्च लिङ्गच्छाया तथाष्टधा॥
एताश्छायाः परित्यज्य वेश्म कुर्यादथाभयम्।
वृक्षप्रासादयोश्छायां गृहे त्यक्ता शुभप्रदा॥
द्वयोः प्रहरयोश्छाया वृक्षप्रासादगुल्मजा।

हर्म्यगृहे तथैवं स्यादधस्तान्नैव निन्दिता ॥
अर्का अशोका अश्वत्थाः केतकीबीजपूरकाः ।
यस्मिन् गृहे प्ररोहन्ति तद् गृहं नैव वर्द्धते ॥
दाडिमं च हरिद्रां च श्वेतां च गिरिकर्णिकाम् ।
यदीच्छेदात्मनः श्रेयो गृहद्वारे न रोपयेत् ॥
त्यक्त्वा चोग्रवर्नं वृक्षं कटुकं कण्टकान्वितम् ।
अपि सौवर्णिकान्वृक्षान् गृहाश्रये न रोपयेत् ॥
न्यग्रोधोदुम्बरप्लाक्षांस्तथा वै कार्मुकादिकान् ।
वर्जयेद् गृहमाश्रित्य हर्म्यवृद्धिर्न विद्यते ॥
खर्ज्जूरी दाडिमी रम्भा कर्कन्धू बीजपूरिका ।
यस्मिन् गृहे प्ररोहन्ति तद् गृहं नैव वर्द्धते ॥
नकुलश्चोरगो यत्र क्रीडतः स्नेहत वभौ ।
तत्रस्थाने महीं खात्वा द्रव्यं तिष्ठति निश्चयम् ॥
बिडाला मूषकाः स्नेहाद्रमन्ते च परस्परम् ।
तत्र स्थाने महीं खात्वा द्रव्यं तिष्ठति निश्चयम् ॥
सर्पाश्च मूषकाः स्नेहात् क्रीडन्त्यानन्दरूपकाः ।
तत्र स्थाने महीं खात्वा द्रव्यं तिष्ठति निश्चयम् ॥
यत्र ना दृश्यते शल्यं द्रव्यं तत्र तथोच्यते ।
तत्र स्थाने महीं खात्वा द्रव्यं तिष्ठति निश्चयम् ॥
अष्ट पूर्वायता रेखा भिन्नाः पञ्च समुद्धरेत् ।
पदैरष्टाविंशतिभिर्ऋक्षसङ्ख्या तथैव च ॥
द्वारमध्ये कृत्तिका च शाखयोर्भरणीमवे ॥
चन्द्रे द्रव्यं तथा सूर्ये शल्यं चैव विनिर्दिशेत् ।
अहिबलचक्रे प्रोक्ता स्वसरो ध्याश्च केवलो ? ॥
अश्विन्यादि त्रिकं चैव आर्द्रादि पञ्चकं तथा ।
पूर्वाषाढा चतुष्कं च रेवती चोत्तरात्रयम् ॥
शशिभानि किलैतानि शिष्टानि रविभानि च ।
चन्द्रर्क्षे च स्थिते सूर्ये चन्द्रे सूर्यर्क्षसंस्थिते ॥
तत्र शून्यं भवेत्स्थानं द्रव्यशल्यविवर्जितम् ।
द्रव्यशल्यं विना त्वेवं शल्यद्रव्यादि कथ्यते ? ॥
चन्द्रः पूर्वं परं भानुस्तत्र शल्यं विनिर्दिशेत् ।
भानुः पूर्वं परं चन्द्रस्तत्र शल्यं विनिर्दिशेत् ॥
गतघटि ऋक्षहताः षष्टिहृते च शेषकम् ।
रविशशिभुक्तकालं रविचन्द्रर्क्षलग्नकम् ॥
श्वेता च ब्राह्मणी भूमी रक्ता वै क्षत्रिया स्मृता ।

पीतवर्णा भवेद्वैश्या शूद्री तु कृष्णवर्णिनी ॥
घृतगन्धा भवेद्विप्रा राज्ञी रक्तानुगन्धिनी ।
क्षारगन्धा भवेद्वैश्या शूद्री विष्टानुगन्धिनी ॥
ब्राह्मणी मधुरास्वादा कषाया क्षत्रिया तथा ।
क्षारास्वादा भवेद्वैश्या शूद्री स्यात्कटुका तथा ॥

मान०
४. १–१०

भूपरीक्षाविधिं (भूमिसंग्रहणं) वक्ष्ये शास्त्रे संक्षिप्यतेऽधुना ।
दक्षिणे पश्चिमे चैव चोन्नतं चतुरश्रकम् ॥
तद्वस्तु जायते वापि देवानां मनुजः (जां) क्रमात् ।
तुरङ्गं द्विरदं (द) वेणु (णु) वीणासाक (ग) रदुन्दुभिः ॥
धेनुभिश्च समायुक्तं (क्ता) किं च पुंनागजातिभिः ।
*सरसीरुहधान्यैश्च ,पाटलीपुष्पगन्धकैः ॥*
संयुक्तं (क्ता) सर्वबीजानां वर्धनं (ना) चैकवर्णयुक् ।
निविडा (ड) स्निग्धसंयुक्ता सुखसंस्पर्शना भवेत् ॥
श्रीवृक्षनिम्बसे (म्बा) शोकैः संयुक्तं (क्ता) सप्तपर्णकैः ।
सू (चू) तैश्चापि वृ (वि) षवृक्षैः संयुक्ता च समस्थले (ला) ॥
धवलं रक्तवर्णं च स्वर्णकृष्णं कपोतकम् ।
षडश्रैश्च समायुक्ता सर्वसम्पत्प्रदा धरा ॥
दक्षिणावर्तसलिला (प्र) दक्षिणाकारा वर्णनैः ।
मानवा जलिमानेन दृष्टिनीला मनोहरा ॥
कृमिवल्मीकरहिता निमूषी निष्कपालिनी ।
निरस्थि (स्थिः) सूक्तिसिकतारन्ध्रवर्जा शुभावहा ॥
पृथग्विधैश्च शूलैश्च स्थाणुभिश्च मही धृता ।
सकर्दमितवाराही विलेकं (का) सरसंयुतम् (युता) ॥
निस्तुषा निर्विभूतिश्च शर्करारहिता अपि (तापि च) ।
सा भूमिः ब्राह्मणादीनां वर्णानां संपदावहा ॥

मय०
३. ४–९॥

श्वेता रक्ता च पीता च कृष्णकापोतसन्निभा ।
तिक्ता च कटुका चैव काषायलवणाम्लका ॥
मधुरा षड्रसोपेता सर्वसम्पत्करी धरा ।
प्रदक्षिणोदकवती वर्णगन्धरसैः शुभा ॥
पुरुषा जलिमात्रे तु दृष्टतोया मनोरमा ।
निष्कपाला निरुपला कृमिवल्मीकवर्जिता ॥
अस्थिवर्ज्या न सुषिरा तनुवालुकसंयुता ।
अङ्कुरैर्वृक्षमूलैश्च शूलैश्चापि पृथग्विधैः ॥
पङ्कसङ्करकूपैश्च दारुभिर्लोष्टकैरपि ।
शर्कराभिरयुक्ता या भस्माद्यैस्तु तुषैरपि ॥

सा शुभा सर्ववर्णानां सर्वसम्पत्करी धरा।

(ब) मृत्तिकापरीक्षा

स० सू० करप्रमाणं कुर्वीत खातं तद्भूमिमध्यगम्॥
८. ६३॥–७४ ततस्तन्मृदमाकृष्य तद् तयैवानुपूरयेत्।
खाताधिकमृदुक्ता भूः श्रेष्ठा मध्या च तत्समा॥
प्रहीणखातमृत् क्षोणी हीना शस्ता न सा नृणाम्।
खन्यमाने यदा खाते तन्मृदोन्तर्विलोक्यते॥
मणिशङ्खप्रवालादि तदातिश्रेयसी क्षितिः।
सापि प्रशस्यते भूमिर्यस्यां स्युः खातपांसवः॥
तुषकेशोपलाङ्गारभस्मास्थिलववर्जिताः।
मृत्वाद्भिः खातमापूर्णं तस्मिन् पदशतं व्रजेत्॥
तावच्चेदागमेऽम्भः स्यात् तदा भूः सार्वकामिकी।
मध्यमात्रप्रहीणे स्यात् ततो हीनतरेऽधमा॥
खाते सितादिमाल्यानि यस्यां निश्युषितानि च।
यद्वर्णानि न शुष्यन्ति सा तद्वर्णेष्टदा मही
खातस्योदक्प्रभृतिषु दिक्षु प्रज्वालयीत वा।
दीपान् यस्यां चिरं तिष्ठेत् तद्वर्णेष्टप्रदा हि सा॥

अ० पृ० भूमेः परिग्रहं कृत्वा सद्भावनिमितिक्रमैः।
४१. ३–१२ दिव्यानि वीक्ष्य भौमानि शुभान्यशुभकानि च॥
शुभेषु प्रस्थिते सिद्धिर्विजयः स्यान्महोत्सवः।
अशुभेषु निवर्तेत न गच्छेत् पदमग्रतः॥
तन्मध्ये तथा धान्तं शकुनानि न लक्षयेत्।
चेष्टायुक्तिसमाख्यातं तत्फलं शकुनोत्तमैः॥
आचार्यैः सूत्रधारैश्च यजमानैश्च संयुतः।
त्रयश्च साधकैश्चैव कर्मकारादिसंयुताः॥
आचार्यश्च स्वयं ब्रह्मा शिल्पी चैव जनार्दनः।
यजमानस्तु शक्रः स्यात् त्रिभिः कर्म प्रवर्तते॥
तत्र भूमिं समीकृत्य त्रयः सह साहायकैः।
दिशाक्षेत्रबलिं दद्युः कुर्युः खातपरीक्षणम्॥
हस्तमात्रं खनेद् भूमिं तस्यान्तश्च तपांशुकम्।
ततः खातं समाशोध्य पूरयेत् पांशुना वृतम्॥
अधिके पांशुके श्रेष्ठा मध्यमा समपांशुके।
हीनपांशौ कनिष्ठा च ज्येष्ठा मध्याधमा त्रिधा॥
खातं तत्रोदकैर्भृत्वा शिल्पी शतपदं व्रजेत्।
अर्धे समे च पादोने कनिष्ठोत्तममध्यमाः॥

पुण्योदकैर्भृतं खातमूर्ध्वं वाणं समुत्क्षिपेत् ।
भृते मही चोत्तमा स्यान्मध्यमाङ्गुलहीनतः ॥
द्व्यङ्गुलोने कनिष्ठा स्यात् त्रिविधं भूमिलक्षणम् ।
अल्पोदकेऽतिहीना स्याद्वर्जयेदधमाधमम् ॥
ततः सम्पूरयेद्वत्स सुदिने सम्प्रधार्य ते ।
परीक्षयेच्च भूम्याद्यं वर्णगन्धैश्च स्वादतः ॥

मान० भूमिसंग्रहणं सर्वं (भूपरीक्षाविधानं च) शास्त्रे संक्षिप्यतेऽधुना ।

४. १–१८॥ तदुक्ताकारनादादिवर्णैर्युक्तं महीतलम् ॥

स्वीकृत्य शिल्पिकुशलो बलिं दत्वा यथाविधि ।
पुण्याहे वाचयेत्पश्चात्तूर्यमङ्गलनिस्वनैः ॥
गच्छन्तु सर्वभूतानि राक्षसा देवता अपि ।
अस्मात्स्थानान्तरं यायात्कुर्यात्पृथ्वीपरिग्रहम् ॥
जप्त्वा (पेन्म) मन्त्रमिमं पश्चाद्विहिते कुम्भपरिग्रहात् ।
स्थापयेत्सर्वबीजनि गोमयाक्तानि रूषिते ॥
प्रेक्ष्य सस्यात्पल्लवानि निविडानि निरवग्रहात् ।
तत्र धेनुवृषभनववत्सांश्चापि निवेशयेत् ॥
पश्चात्पादक्रमैर्वर्गैर्नासाग्राणैः समन्वितम् ।
संधुष्ट (ष्टं) वृषभध्वानै (र) धवले (लीं) भूतलूषितम् ॥
यवप्रस्थसमेतैश्च पततीवत्सक्रमतः ।
गोमयालेपितं पश्चादोष्ठकैश्च निषेवितम् ॥
रोमन्थोदारपुलकैः शोभितं गोष्पदैरपि ।
स्वच्छोदकसमाक्रान्त (न्तं) गोगन्धैश्च मनोहरम् ॥
एवं शुभदिनोपेतं तारकाविषयैरपि ।
सुमुहूर्ते सुकरणे सुलग्ने सुपिहितिस्वितैः (सुविपश्चिद्भिः) ॥
विप्रैश्च पश्चात्पुण्याहे कारयेत्सर्वमङ्गलम् ।
भूतलं (ल) खननं कुर्याद्व (द्वा) स्तुमध्ये लयावधि ॥
चतुरश्रं तूपहितो (तं) हस्तमात्रं तु निम्नकम् ।
ह (वा) रिक्षत्वारि परितः समं संक्षिप्य चोच्छ्रयम् (च्छ्रितम्) ॥
पूजयित्वा (येत्तु) यथाशास्त्रं प्रणम्य रू (पं) पाम्बिकाम् ।
सर्वरत्नजलैश्चैव गन्धपुष्पाक्षतैरपि ॥
पूजयेत्पायसान्नेन प्रभाते तु ततः सुधीः ।
वापीसमीपे नियतं (तः) समाहितमनाः शुचिः ॥
प्रांवीत्वरिक् (चदिक्) शिरस्ये (ए) दर्भास्तरणभूतले ।
महाक्षोणि विवर्धस्व धान्यैश्च साधनैरपि ॥
उत्तमं शुष्कमास्थाय मङ्गलं (ल) भवते (त्यै) नमः ।

मन्त्रमेतज् (तं) जपन्पश्चादुपवासमुपक्रमेत् ॥
प्रभाते तु परीक्ष्येमं (क्षेत) रूपं स्थपतिभिः सुधीः ।
किंचिच्छेषं जलं प्रेक्ष्य गृह्णेतं (ह्यतां) मङ्गलाय वै ॥
शोषितं धनधान्यानां क्षयं क्लिन्ने विनाशितम् ।
परितस्तु मृदा गर्ते पूरिते मध्यमा मही ॥
मही हीनं (ना) मृदा हीना चोत्तमा च (चापि) चाधिका ।
प्रेक्ष्य कर्तुं (कर्ता तु) तन्मध्ये प्रदक्षिणचरोत्तरम् (र उत्तमम्) ॥
कामधेनुसमां चोर्वीं स्वीकुर्यात्तु विभूतये ।
आकारवर्णशब्दादिगुणोपेतं भुवः स्थलम् ।
सङ्गृह्य स्थपतिः प्राज्ञो दत्वा देवबलिं पुनः ॥
स्वस्तिवाचकघोषेण जयशब्दादिमङ्गलैः ।
अपक्रामन्तु भूतानि देवताश्च सराक्षसाः ॥
वासान्तरं व्रजन्त्वस्मात् कुर्यां भूमिपरिग्रहम् ।
इति मन्त्रं समुच्चार्य विहिते भूपरिग्रहे ॥
कृष्ट्वा गोमयमिश्राणि सर्वबीजानि वापयेत् ।
दृष्ट्वा तानि विरूढानि फलपक्वगतानि च ॥
सवृषाश्च सवत्साश्च ततो गास्तत्र वासयेत् ।
यतो गोभिः परिक्रान्तमुपघ्राणैश्च पूजितम् ॥
संहृष्टवृषनादैश्च निर्धौतकलुषीकृतम् ।
वत्सवक्त्रच्युतैः फेनैः संस्कृतं प्रस्नवैरपि ॥
स्नातं गोमूत्रसेकैश्च गोपुरीषैः सलेपनम् ।
च्युतरोमन्थनोद्गारैर्गोष्पदैः कृतकौतुकम् ॥
गोगन्धेन समाविष्टं पुण्यतोयैः शुभं पुनः ।
तथा पुण्यतिथोपेते नक्षत्रविषये शुभे ॥
करणे च सुलग्ने च मुहूर्ते च बुधेप्सिते ।
अक्षतैः श्वेतपुष्पैश्च बलिकर्म विधीयते ॥
ब्राह्मणैश्च यथाशक्त्या वाचयेत् स्वस्तिवाचनम् ।
वस्तुमध्ये ततस्तस्मिन् खानयेद् वसुधातलम् ॥
अरत्निमात्रगम्भीरं चतुरश्रसमन्वितम् ।
दिग्भागस्थमसम्भ्रान्तमसंक्षिप्तसमुच्छ्रयम् ॥
अर्चयित्वा यथान्यायं तं कूपमभिवन्द्य च ।
चन्दनाक्षतमिश्रेण सर्वरत्नोदकेन च ॥
पयसा तु ततः प्राज्ञो निशादौ परिपूरयेत् ।
तस्य कूपस्य चाभ्याशे शुचिर्भूत्वा समाहितः ॥
भूमौ दर्भावकीर्णायां संविशेत् प्राक्शिरा बुधः ।

मय० ४. १–१९॥

अस्मिन् वस्तुनि वर्धस्व धनधान्येन मेदिनि॥
उत्तमं वीर्यमास्थाय नमस्तेऽस्तु शिवा भव।
उपवासमुपक्रामेदेतं मन्त्रं जपंस्ततः॥
दिनादौ परीक्षेत तं कूपं स्थपतिर्बुधः।
सावशेषं जलं दृष्ट्वा तद् ग्राह्यं सर्वसम्पदे॥
क्लिन्ने वास्तुविनाशाय शुष्के धान्यधनक्षयः।
पूरिते तन्मृदा खाते समता मध्यमा मता॥
उत्तमा भूर्मृदाधिक्या हीना हीना मृदा मही।
तन्मध्यावटसन्दृष्टप्रदक्षिणचरोदकाम्॥
सुरभिप्रतिमां भूमिं गृह्णीयात् सर्वसम्पदे।

एवं यथोक्तविधिना विविधं विदित्वा
ग्रामाग्रहारपुरपत्तनखर्वटानि।
स्थानीयखेटनिगमानि तथेतराणि,
यः संविविक्तुरवनीग्रहणं विदध्यात्॥

(स) प्लव-परीक्षा च

टि०—प्लवपरीक्षणं तत्र प्रथमे खण्डे दिङ्निर्णये दत्तमेव।

## द्वितीयः पटलः

### ग्राम-लक्षणम् ग्राम-विन्यासश्च

वि० वा० ७. ५-८॥

संप्राप्य चोत्तमां वास्तुभूमिं निर्माणकोविदः।
संप्राप्तद्रव्यराशिश्च यतेत पृथुकर्मणि॥

द्वादश ग्रामाः

आद्यस्तु मण्डकग्रामः प्रस्तरस्तदनन्तरम्।
वाहुलीकस्तृतीयस्तु पराकस्तु चतुर्थकः॥
चतुर्मुखः पञ्चमः स्यात् षष्ठः पूर्वमुखस्तथा।
सप्तमो मङ्गलग्रामस्त्वष्टमो विश्वकर्मकः॥
नवमो देवराड्ग्रामो विश्वेशो दशमो मतः।
एकादशस्तु कैलासो द्वादशो नित्यमङ्गलः॥
इत्येवं द्वादश ग्रामाः शिल्पशास्त्रे प्रकीर्तिताः।

८. २०-२७ (खेटादिवास्तु-भूमिर्यथा)

खेटस्य वास्तुभूमिस्तु प्रायः काननमध्यगा।
शबरैश्च पुलिन्दैश्च संयुता मांसजीविभिः॥
पर्णगेहान्विता विध्वगथ वेष्टिकगेहभाक्।
एकादिदशवीथ्यन्ताः क्षुद्रवीथ्यस्समन्ततः॥
वास्तुभूमिः खर्वटस्य नदीतीरगता मता।
रसालसालवकुलैस्तिन्त्रिणीवेणुपाटलैः ॥
कदम्बैर्नारिकेलैश्च श्रीपर्णैस्तिलकैरपि।
छायावृक्षसमाकीर्णा निष्कुटारामसंवृता॥
दशादिविंशद्वीथीभिरावृता च समन्ततः।
शतगेहा मुख्यवीथी तन्मध्ये कालिकागृहम्॥
वागुराजीविभिश्चान्यैर्भृतकैश्च कृषीवलैः।
मदिरागेहसंयुक्ता विपण्यादिभिरावृता॥
वनमध्यङ्गवा वापि गिरिसानुसमीपभाक्।
आरामभूमध्यगता पल्लीभूमिस्तु सौख्यदा।
मधूकैस्तिन्त्रिणीभिश्च रसालैर्नारिकेलकैः।
पनसैश्च शिरीषैश्च संवृता च समन्ततः॥
सङ्कीर्णा वहुभिर्वर्णैर्मेषगोवाजिरक्तकैः।
दशादिविंशद्भिर्भरिता च समन्ततः॥
वापीकूपादिभरिता विपण्या क्षुद्रया युता।

सह जनसङ्कीर्णा पल्लीभूमिरितीरिता ॥
घोषभूमिश्शैवलिनीतीरभाग्वा वनान्तभाक् ।
गिरिसानुगता वापि सर्वकालेषु सौख्यदा ॥
वानीरविल्वकुन्दाद्यैर्मालत्यादिभिरन्विता ।
चूतादि फलवृक्षैश्च सर्वतस्तु समावृता ॥
सस्यभूम्यावृता विष्वक्सुखग्राह्यजलान्विता ।
द्वात्रिंशद्वीथिकोपेता क्षुद्रवीथ्युपवीथियुक् ॥
गोभिर्गोपालकैश्चापि सर्वतस्संवृता शुभा ॥
आभीरिभूश्शैवलिनीतीरभाग्वा वनान्तभाक् ।
सर्वतस्सूक्ष्मसिकता पुष्पगन्धाद्यगन्धिनी ॥
मण्डलाख्यतृणैर्घासैरन्यैश्च बहुभिर्युता ।
नारिकेलरसालादिफलवृक्षैस्समन्विता ॥
सर्वतो हस्ततोयाढ्या भूमिरेवंविधा मता ।
त्रिंशद्वीथियुता क्षुद्रवीथियुक्च समन्ततः ॥
वापीकूपतटाकाद्यैरन्विता सुखदायिनी ।
ग्रामदेव्यालयोपेता वारुण्यां दिशि कालिका ॥
गोपनाथस्य सदनमथवा नृपमन्दिरम् ।
कारयेन्मध्यभागे स्वा निषधादींश्च सर्वतः ॥
गोपालभवनाधिक्यं गवामपि च कीर्तितम् ॥

मान० ६. १-२८॥

(ग्राम-लक्षणम्)

वक्ष्येऽहं ग्रामविन्यासं शास्त्रे संक्षेपतः क्रमात् ।
दण्डकं सर्वतोभद्रं नन्द्यावर्तं तु पञ्चकम् ॥
वक्ष्येऽहं ग्रामविन्यासं शास्त्रे संक्षेपतः क्रमात् ।
एवं चाष्टविधं ग्रामं तत्तद्रूपेण संज्ञितम् ।
प्रथमं ग्राममानं च द्वितीयं पद (दं) विन्यसेत् ।
तृतीयं तद्बलिं दत्वा चतुर्थं ग्राम (मं) विन्यसेत् ॥
पञ्चमं गृह (हं) विन्यस्य तत्र गर्भं विनिक्षिपेत् ।
षष्ठे गृहप्रवेशं च तन्मानमधुनोच्यते ॥
धनुर्ग्रहैश्च यद्दण्डं तद्दण्डेनार्पयेदधः ।
पञ्चविंशतिदण्डाद्यैः (द्यौ) द्विद्विदण्डविवर्धनात् ॥
एकाधिकशतान्तं स्यान्नवत्रिंशद्विशालकम् ।
एवं तु दण्डकं प्रोक्तं तस्यायाममि (म इ)होच्यते ॥
विस्ताराद्विद्विदण्डेन वर्धयेद्विगुणान्तकम् ।
यः (यतः) शुभायादिकसर्थं दण्डहीनाधिकं तु वा ॥
वानप्रस्थमिदं योग्यं क्षुद्रदण्डकमीरितम् ।
एकत्रिंशतिदण्डा (शद्दण्डमा द्ये) द्विद्विदण्डेन वर्धनम् ॥

सप्ताधिकशतान्तं स्यात्सप्तषष्टिविशालकम् ।
दीर्घं प्रागुक्तवत्कुर्यादेतद्दण्डक (कं) मध्यमम् ॥
सप्तत्रिंशतिदण्डादि (शद्दण्डमादौ) द्विद्विदण्डविवर्धनात् ।
त्रयोविंशद्दशाधिक्यशतदण्डावसानकम् ॥
दण्डकं चोत्तमं पञ्चचत्वारिंशद्विशालकम् ।
एतत्तु दण्डकं प्रोक्तं भूसुराणां तु योग्यकम् ॥
पञ्चाशद्दण्डमारभ्य द्विद्विदण्डविवर्धनात् ।
द्विशतं दण्डान्तकं स्यात् षट्सप्ततिविशालकम् ॥
षष्टे तु (षष्ट्यैकं) दण्डमारभ्य द्विद्विदण्डविवर्धनात् ।
सैकार्कत्रि (त्रि) शतं दण्डात् (ण्डं) त्रि (शत) सप्तद (त्रिं) शविस्तृतम् ।
युग्मायुग्मं तु दण्डेन सर्वतोभद्रमेव च ।
भूसुरामरयोग्यं स्यात्तदायामविशालकम् ॥
नन्दावर्त (न्द्यैकत्रि) ग्राम ग्राम (मे) द्विद्विदण्डविवर्धनम् ।
पञ्चषष्ट्याधिकं पञ्चशतदण्डावसानकम् ॥
एव (वं) पञ्च द्विशतं विशालं परिकीर्तितम् ।
विस्तारायामस्तत्तुल्यो (पादोनोऽर्धाधिकस्तथा ॥
(विस्ता) रं द्विद्विदण्डेन वर्धयेद्द्विगुणान्तकम् ।
नन्द्यावर्तमिदं प्रोक्तं वर्तव्यं (वस्तव्यं) देवभूसुरैः ॥
अथातः पञ्चकं ग्रामग्रामलक्षणमुच्यते ।
शतदण्ड (ण्डं) समारभ्य द्विद्विदण्डविवर्धनात् ॥
एकसहस्र-दण्डान्तं (न्तो) विस्तारं तत् समं मतम् (रस्तत्समो मतः) ।
परमाधिकपञ्चाशच्चतुःशतविशालकम् ।
विप्रयोग्यं तथा पञ्चमेवमुक्तं पुरातनैः ।
एतच्चत्वारि ग्रामविस्तारप्रमाणलक्षणम् ॥
अथ स्वस्तिकविन्यास (विस्तार) मानलक्षणमुच्यते ।
एकद्विशतदण्डादौ विंशद्दण्डविवर्धनात् ॥
द्विसहस्रे (स्रै) कदण्डान्तं (न्तो) विस्तारं (रः) परिकीर्तितम् (तः) ।
तस्माद्द्विंशतिदण्डेन वर्धयेत्तत्समाधिकम् ॥
तस्यायाममिदं (मो ह्ययं) प्रोक्तं (क्तः) स्वस्तिकं भूपयोग्यकम् ।
अतः परं प्रस्तरविन्यास (विस्तार) लक्षणमुच्यते ॥
त्रिंशद्दण्डमारभ्य शतदण्डविवर्धनात् ।
सहस्रद्वयदण्डांतं प्रस्तरं विस्तृतं भवेत् ॥
सपञ्चषष्टिदण्डादौ द्विद्विदण्डविवर्धनात् ।
युग्मायुग्मं तथा वापि दण्डं पञ्चशतान्तकम् ॥
एतत् (एष) कार्मुकविस्तारं त (रस्त) स्यायाममि (म इ) होच्यते ।

तस्मात्तु शतदण्डेन वर्धनाद्विगुणान्तकम् ॥
एवं तु वैश्यकानां तु योग्यं तत्कामुकं भवेत् ।
त्रिशद्दण्डं समारस्य त्रित्रि (द्विद्वि) दण्डविवर्धनात् ॥
शतदण्डावसानं (नः) स्याद्विस्तारं (रः) परिकीर्तितम् (तः) ।
तत्तत्रित्रिद्विदण्डेन वर्धयेद्विगुणान्तकम् ॥
एवं चतुर्मुखं प्रोक्तं शूद्राणामेव योग्यकम् ।

तेषु नन्द्यावर्तस्य सविस्तरं लक्षणं यथा ६, ८२-१४७॥

नन्द्यावर्तस्य विन्यासलक्षणं वक्ष्यतेऽधुना ।
पूर्वोक्तदण्डमानेन विस्तारायामकल्पनम् ॥
समविस्तारमायाममायाधिकमथापि वा ।
चण्डिताख्यपदं न्यासं वाऽपि मण्डूकं परिकल्पयेत् ॥
ग्रामे चायतविस्तारौ समे (मौ) चेत्कल्पयेत्सुधीः ।
आयाधिकं यथा ग्रामे नन्दनन्दपदं भवेत् ॥
अथवा स्थण्डिलं न्यस्य (सेत्) समायाममित्यपि वा ।
पदं च चण्डित (तं) तन्मध्ये ब्रह्मणश्च चतुष्पदम् ॥
तद्बहिः परितो भागे दैवकं च (द्वा) दशांशकम् ।
तद्बाह्ये विंशतिपदं परितो मानुषं भवेत् ॥
तद्बहिश्चावृतांशेन पशाचं चाष्टविंशति (तिः) ।
एवं तु चण्डितं प्रोक्तं परमशायिकमुच्यते ॥
मध्ये नवपदं बाह्ये दैवकं षोडशांशकम् ।
तद्बहिर्मानुषं चैव चतुर्विंशपदं भवेत् ॥
पैशाचं बाह्यमावर्तं तत्त्रिंशकं पदम् ।
स्थण्डिलं (ल) पदमध्ये च ब्रह्मणस्यै (ण ए) कमात्रकम् ॥
दैवकं चाष्टभागं स्यान्मानुषं षोडशांशकम् ।
तद्बहिश्च चतुर्विंशत्पदं पैशाचमेव च ॥
एषां पदैर्यथायोग्यं विन्यसेच्छिल्पि (ल्प) वित्तमः ।
तत्पैशाचपदं चोक्तं नन्द्यावर्ताकृतिर्भवेत् ॥
प्राचीरथ्योत्तरा (रमार) स्य स्याद्दक्षिणायत (तं) निर्गमम् ।
दक्षिणावीथीपूर्वादिपश्चिमायतनिर्गमम् ॥
पश्चिमवीथी (थ्याः) दक्षिण्या (णा) दुत्तरायत (तं) निर्गमम् ।
उदग्वीथी (थ्याः) प्रतीच्यादितत्पूर्वायत (तं) निर्गमम् ॥
नन्द्यावर्तावृतावीथी मे (ए) वमूह्यं (ह्या) विचक्षणैः ।
दक्षिणोदग्द्वयोर्वाऽपि प्राक्प्रत्यग्वि (ग्द्वि) तयो र पि (वा) ॥
अन्तर्वीथीनां मूलाग्रौ (ग्रयोः) चैकपक्षं प्रयोजयेत् ।
पार्श्वयोश्च द्विविधं स्याद्धि पक्षमुक्तं पुरातनैः ॥
एवं बाह्यवीथी स्यादन्तर्वीथिरि (थी) त्विहोच्यते ।

आयते दीर्घरथ्या स्याद्विस्तारे दीर्घमेव च ॥
एकत्रिपञ्चसप्तयो (सप्त) वीथी (थ्यः) पूर्वाद्विपक्षयुक् ।
एकद्वित्रिचतुष्पञ्चमार्गं वा परिकल्पयेत् ॥
एवं वहिर्गतं मार्गं तत्र पक्षं न कारयेत् ।
पक्षयुक्ता तु वीथी स्यात्पक्षहीनं तु मार्गकम् ॥
महामार्गं तु सर्वेषां (वासां) वीथीनां कर्करीकृतम् ।
मध्येषां तु (मध्य एषां) यथारज्जुः (ज्जु) क्षुद्रमार्गं प्रयोजयेत् ॥
त्रिचतुः (तुष्) पञ्चदण्डं वा वीथीनां विस्तृतिर्भवेत् ।
षट्सप्ताष्टदण्डं वा नन्दपङ्क्तीशभानुषु (नुं वा) ॥
केचि (काश्चि) द्रथ्या विशालाश्च सर्वेषां तत्समं तु वा ।
महामार्गविशालं (तु) यद्वीथीनन्दसमं तु वा ॥
महारथ्या (मार्ग) समं मध्ये वीथीविस्तारमिष्यते ।
मध्ये (वीथी) समं तु मध्ये च मार्गमेवं विशालकम् ॥
तदष्टांशोनमेवं वा त्रिपादं चार्धमेव वा ।
अन्यासां सर्ववीथीनां यथातत्सममेव वा ॥
तत्समं (सर्वासां) वा त्रिपादं वा महामार्गं (र्ग) विशालकम् ।
तत्त्रिपादार्धं तु विस्तारं क्षुद्रमार्गविशालकम् ॥
एवं विन्यासमुद्दिष्टं भूसुराणां तु योग्यकम् ।
अथाष्टाधिकं पञ्चाशदष्टोत्तरशतं तु वा ॥
त्रिंशतैर् (त्रिशत) वप्रसंख्या (विप्रसंधं) च अ (चाप्य) ष्टोत्तरसहस्रकम् ।
सहस्रत्रयव(वि)प्रं वा सहस्रैश्च चतुष्टयम् ॥
दे (दे) वमनुत (मानुष) पैशाचे भूसुरान् (सुरैः) परिपूर्णकम् ।
एवं मङ्गलमाख्यातं यस्तु वास्तुर् (स्तुं) विनिर्दिशेत् ॥
नृपवैश्यादिजातीनामेवं चेत् पुरमुच्यते ।
वैश्यशूद्रादीनां योग्यमग्रहारं प्रशस्यते ॥
एवं मर्त्यपदेनान्तः भूसुराणां गृहान्वितम् ।
देवमानुषपैशाचे यद्राजगृहमेव च ।
तत्पैशाचपदे वैश्यशूद्रजात्यादिकालयम् ।
पैशाचे च द्विरथ्या वा त्रिचतुष्पञ्चपडेव वा ॥
सप्तकं (काः) वा तथा रथ्या वा यथा विशालं तथा न्यसेत् ।
दक्षिणे प्रथमारथ्ये (मरथ्यायां) वैश्यकानां तु वेश्मानि ॥
वारुणे चक्रवर्ती स्यादेवमालयस्य विधिः ।
अथ मित्रपदे चैव जयन्ते रुद्रजये तथा ॥
एवं राजगृहं प्रोक्तं तत्रैवं (त्र) योधकालयम् ।
नैर्ऋत्ये च पदे देशे श्रीकराणां तु हर्म्यकम् ॥

सामन्तप्रमुखादीनामसुरे सोष्ट (शोष) केऽपि च।
तत्रैवामात्यहर्म्यं स्यात्स्वासिकालयमेव च॥
पुरोहितालयं सुग्रीवे पुष्पदन्तपदेऽपि च।
दौवारिकश्च सुग्रीवे रक्षकारालयं भवेत्॥
गन्धर्वरोगशोषे वा वाद्यकाद्यादेरालयम्।
तत्रैव गणिकादीनां नृत्तयोग्यादिरा (दिका) लयम्॥
वायव्ये वा नरे (नागे) वाऽपि स्थपतीनां तथालयम्।
नागे चाथवा मुख्ये वा नेत्ररत्नकरालयम्॥
उत्तरे शल्यशालाश्च (तत्र) कञ्चयासका (कञ्चुककारा)लयम्(यं वा)।
अदितिश्चादितिश्चैव वैद्यकादितथा (दीनामा) लयम्॥
ईशे वाऽथ जयन्ते वा ग्रामरक्षितकालयम् (च)॥
महेन्द्रे वाऽथ सत्ये वा कर्णिकारालयं भवेत्॥
भृशे वा चान्तरिक्षे वा अ (चा) ह्नयक्रम (कर्म) हर्म्यकम्।
एवं प्रथमावरणे द्वितीयावरणमुच्यते॥
तैलोपजीविनां वासश्रेणितो(त उ)त्तरवीथिके।
तत्रैव नानाहर्म्यं स्यात्कुलालालयमेव च॥
मत्स्योपजीविनां वास (सं) मांसव्यापारिकादीनां च।
पश्चिमे वालयश्रेणिः किरातानां तु दक्षिणे॥
आग्नेये वायवे वापि रजकस्यालयं भवेत्।
दक्षिणे पूर्वदेशे वा नृत्तकारालयं भवेत्॥
उत्तरे वा नैरृते वापि सूति (चि) कारालयं भवेत्।
एवं द्वितीयावरणे तृतीयावरणो(णमु) च्यते॥
दक्षिणे कर्मकारस्य तत्र श्रेण्यालयं भवेत्।
उत्तरे चाग्निदेशे वा पेटिकारालयं भवेत्॥
पश्चिमे पूर्वके वापि शस्त्रकर्मकरालयम्।
उत्तरे चर्मकारस्य तच्छ्रेण्यालयमेव वा॥
अन्यथा (दा) वरणाः (णम्) सर्वसन्यत् कर्मोपजीविनाम्।
एवं नरालयं प्रोक्तं देवानामधुनोच्यते॥
आयादिषु चतुर्दिक्षु ग्रामस्यापि चतुर्दिशि।
एवं यथेष्टदिग्देशे विष्णुधिष्ण्यं प्रकल्पयेत्॥
अथवा वहिरङ्गे तु चेष्टदिग्विष्णु (ष्णो) रालयम्।
इन्द्रादिषु चतुर्दिक्षु विष्णुस्थानं तु राक्षसे॥
पूर्वके श्रीधरं प्रोक्तं दक्षिणे वामनं तथा।
पश्चिमे वासुदेवं वा चादिविष्णुं जनार्दनम्॥
उत्तरे केशवं प्रोक्तं नारायणमथापि वा।

अन्तः प्रागुत्तरे देशे विष्णुमूर्तिर् (र्ति) यथेष्टकम् ॥
पितृदेवेशकोणे वा य (त) था नृसिंहालयं भवेत् ।
अग्निकोणे य (त) था रामं गोपालालयमेव वा ॥
मित्रे च त्रितलं कुर्यात्स्थानकं चादिभूमिके ।
द्वितीयं (ये) चासनं प्रोक्तं तृतीये शयनं भवेत् ॥
अथवा स्थानकं चोर्ध्वे शयनं मूलकस्थले ।
इष्टदिग्विष्णुहर्म्याणां द्वारं कुर्याद्विचक्षणः ॥
ग्रामस्याभिमुखं विष्णुं नरसिंहं पराङ्मुखम् ।
लक्ष्मी नृसिंहश्चैवापि ग्रामस्याभिमुखो भवेत् ॥
रुद्रं रुद्रजये वापि इ (रिव) न्द्रश्चेन्द्रजयेषु च ।
आपवत्स्या (त्सा) पवत्सयश्च साविन्द्र (त्र) श्चा (श्च) सान्द्रके (सवित्रके) ॥
ईशे वाथ जयन्ते वा पर्जन्यस्य पदेपि वा ।
गुवमीशालयं कुर्याद्ग्रामस्य तु पराङ्मुखम् ॥
पूर्वके पश्चिमे वापि तत्रैवाभिमुखं भवेत् ।
अन्यत् सकलरूपाणां हर्म्यद्वारं यथेष्टतः ॥
स्वकर्णे वाऽपि दौवारिके सुब्रह्मण्यालयं भवेत् ।
अथवा जिनालयं स्यात्सुगतालयमेव च ॥
चतुर्दिक्षु विदिक्वा (क्ष्व) वि मध्ये वैनायकालयम् ।
गन्धर्व (र्वे) भृङ्गराजे वा भार्गकारालयं भवेत् ॥
मुख्येवाथ च भल्लाटे सा (स) रस्वत्यालयं भवेत् ।
अदितौ वा मृगे वापि लक्ष्मीभवनकं स्मृतम् ॥
तत्रैव भुवनदेवीहर्म्यमेवं प्रकल्पयेत् ।
यद्वारस्य वहिरङ्गे रक्षार्थं भैरवालयम् ॥
राक्षसे पुष्पदन्ते वा दुर्गायाश्चापि चालयम् ।
तद्ग्रामस्य वहिः सौम्ये कालि (ली) कोष्ठं प्रकल्पयेत् ॥
ग्रामात्क्रोशावसानं स्यात्पूर्वं वा चोत्तरेऽपि वा ।
तत्र चण्डालवासः स्याच्चोत्तरे च श्मशानकम् ।
ग्रामस्य चोत्तरे वाह्ये प्रेतभूतांशदण्डकम् ।
ग्रामस्य परितो वाह्ये रक्षार्थं वप्रसंयुतम् ॥
तद्वहिः परिखायुक्तं परितो वप्रवेदिकैः ।
चतुर्दिक्षु चतुष्कोणे महाद्वारं प्रकल्पयेत् ॥
वृत्तं वा चतुरश्रं वा वास्तुस्वाकृतिवप्रयुक् ।
पूर्वद्वारमथैशाने चाग्निद्वारं तु दक्षिणे ॥
पितुर्द्वारं तु तत्प्रत्यग्वायोर्द्वारं तथोत्तरम् ।
पूर्वपश्चिमयोर्द्वारौ तत् (त्र) सूत्रं तु योजयेत् ॥

दक्षिणोत्तरयोर्द्वारौ तत्र देशे विशेषतः ।
दक्षिणोत्तरकं सूत्रं विन्यसेच्छिल्पवित्तमः ॥
तस्य सूत्रान्ततत्पूर्वे हस्तं तद्वार (रं) मध्यमे ।
पूर्वं दक्षिणतो द्वारं तद्धि वा (द्वा) रौ तथोक्तवत् ॥
उत्तरे द्वार (रं) तत्सूत्रात्प्रत्यग्हस्तावसानकम् ।
चतुर्दिक्षु चतुर्द्वारं युक्तं वा नेष्यते बुधैः ॥
पूर्वे पश्चिमके वाऽपि द्वारमेतत् (मेकं) द्वयोर (यम) पि ।
परितश्चतुरश्राग्रा द्वारं कुर्यात्तु सर्वदा ॥
एतत्सर्वं महाद्वारमुपद्वारमिहोच्यते ।
नागे वाऽदि मृगे वाऽ(प्य) श्रादितिश्चो (तौ चो, दितोऽपि वा ॥
पर्जन्ये वान्तरिक्षे वा पूषे (पूष्णि) वा वितथेऽपि वा ।
गन्धर्वे भृङ्गराजे वा सुग्रीवे वा सुरेऽथवा ॥
तथेष्टमेवमुपद्वारं कुर्यात्तल्लक्षणवित् (र्यादुक्तलक्षमवत्) ।
मुख्यके वाऽथ भल्लाटे मृगे चोदितोऽथवा ॥
जयन्ते वा महेन्द्रे वा सत्यके वाऽथ भृशेऽथवा ।
एवमेवं जलद्वारं कुर्यात्तत्र विचक्षणः ॥
ब्रह्मणे वाऽदग्निदेशे वा सावित्रे वा मण्डपं भवेत् ।
भूधरे चासुरे वाऽपि सभास्थानं प्रकल्पयेत् ॥
नन्द्यावर्तमिति प्रोक्तं तन्त्रविद्भिः पुरातनैः ।

म I०
ग्रामभेदाः
६. ३१—३४

एककुटुम्बिसमेतं कुटिकं स्या (त्त?) देवभोगमिति कथितम् ।
तस्य सुखालयमिष्टं शेषाणां दण्डकादीनि ॥
युग्मायुग्मविभागैर्द्विविधं स्यात् सर्ववस्तुविन्यासम् ।
युग्मे सूत्रपथं स्यादसमे पदमध्यमे च वीथी स्यात् ॥
अन्योन्यसङ्करश्चेदशुभं स्यात् सर्वजन्तूनाम् ।
दण्डकमपरं स्वस्तिकमित ऊर्ध्वं प्रस्तरं चैव ॥
पश्चात् प्रकीर्णकं स्यान्नन्द्यावर्तं परागमथ पद्मम् ।
स्याच्छ्रीप्रतिष्ठितेनैवाष्टविधं ग्राममुद्दिष्टम् ॥

ग्राम-विन्यासश्च
३५—४३

सर्वेषां ग्रामाणां मङ्गलवीथ्यावृता बहिस्त्ववहिः ।
ब्रह्मस्थानं ह्युदितं तस्मिन् देवालयं तु वा पीठम् ॥
एकद्वित्रिचतुर्भिः पञ्चभिरपि कार्मुकैश्च मार्गवतिः ।
प्राक्प्रत्यग्गतमार्गा ऋजुदण्डमहापथाख्यास्ते ॥
मध्यमयुक्ता वीथी ब्रह्माख्या सैव नाभिः स्यात् ।
द्वारसमेता वीथी राजाख्या च द्विपार्श्वतः क्षुद्रा ॥
सर्वाः कुट्टिमकाख्या मङ्गलवीथी तथैव रथमार्गम् ।
तिर्यग्द्वारसमेता नाराचपथा इति ख्याता ॥

उत्तरदिङ्मुखमार्गाः क्षुद्रार्गलवामनाख्यपथाः।
ग्रामावृता मङ्गलवीथिकाख्या पुरावृता या जनवीथिका स्यात्।
तयोस्तु रथ्याभिहिताभिधा स्यात् पुरातनैरन्यतमेष्वथैवम्॥
द्विजकुलपरिपूर्णं वस्तुयन्मङ्गलाख्यं,
नृपवणिगभियुक्तं वस्तुयत्तत्पुरंस्यात्।
तदितरजनवासं ग्राममित्युच्यतेऽस्मिन्,
मठमिति पठितं यत् तापसानां निवासम्॥
प्रागुदगग्रं मार्गं ककनीकृतदण्डवत्तु तन्मध्ये।
द्वारचतुष्टययुक्तं दण्डकमिति भण्यते मुनिभिः।
दण्डवदेका वीथी साप्येवं दण्डकं प्रोक्तम्॥
नवपदयुक्ते ग्रामे परितो मार्गं पदस्य तस्य बहिः।
तस्मात् प्रागुदगग्रात् प्राग्वीथी दक्षिणाग्रामा॥
तस्मात् प्राग्दक्षिणतो दक्षिणवीथी प्रतीचिमुखा।
तस्मादवागपरतः पश्चिमवीथ्यग्रमुत्तरतः॥
अपरोत्तरतस्तस्मादुत्तरवीथ्या मुखं प्राच्याम्।
एतत् स्वस्तिकमुदितं स्वस्त्याकृत्या चतुर्मार्गम्॥
प्राक्प्रत्यग्गतमार्गैस्त्रिभिरुदगग्रैस्त्रिभिश्चतुर्भिरथो ।
पञ्चभिरपि षट्सप्तभिरपि युक्तं प्रस्तरं पद्म च॥
प्रागग्रैस्तु चतुर्भिर्द्वादशशिवपङ्क्ति नन्दवसुमार्गैः।
उदगग्रैरभियुक्तं ह्येतत् प्रोक्तं प्रकीर्णकं पद्म च॥
प्राक्प्रत्यग्गतमार्गैः पञ्चभिरुदगग्रैस्त्रयोदशभिः।
द्विः सप्तभिरथ तिथिभिः षोडशभिः सप्तदशभिरपि मार्गैः॥
युक्तं नन्द्यावर्तं दिक्षु चतुर्द्वारसंयुक्तम्।
नन्द्यावर्ताकृत्या बाह्ये द्वारैरबाह्यतो मार्गैः॥
युक्तानेकैर्युक्तं नन्द्यावर्ताभमिदमुदितम्।
आद्यैरष्टादशभिर्द्वाविंशत्यङ्ककैरुदग्वक्त्रैः ॥
षड्भिः प्राङ्कदमार्गैर्युक्तं ह्य तत् परागमिति कथितम्।
प्राक्प्रत्यग्गतमार्गैः सप्तभिरुदगग्रैस्त्रिवेदशरैः॥
षट्सप्तभिरपि युक्तैर्विंशतिभिः पञ्चधा पद्मम्।
अष्टभिरथपूर्वाग्रैरुदगग्रैः साष्टविंशतिभिः॥
आद्यैर्द्विः षोडशभिर्मार्गगैरन्त्यैर्युतं यत्तु।
तच्छ्रीप्रतिष्ठितं स्यादष्टविधं ग्राममुद्दिष्टम्॥

शिल्प०
ग्रामविन्यासभेदाः
(वीथीःपुरस्कृत्य)

दण्डकः स्वस्तिकश्चैव प्रस्तश्च प्रकीर्णकः।
नन्द्यावर्तः परागश्च पद्मकः श्रीप्रतिष्ठितः॥
ग्रामादीनां तु सामान्यं विन्यासस्त्वष्टधा स्मृतः।

५. ५७–६८॥ तस्मिन्नेकैव वी (थ्या?थी) स्यात् प्राचीना सोऽपि दण्डकः ॥

प्राग्वीथिर्दक्षिणगा दक्षिणवीथिः प्रतीचिमुखा ।
पश्चिमवीथ्युत्तरगा प्रागग्रा चोत्तरा वीथिः ॥
एवं चेत् स्वस्तिकनाम्ना शिल्पशास्त्रेषु कीर्तितः ।
प्राक्प्रत्यगायतास्तिस्रः सौम्यास्तिस्रोऽथ वीथ्यः ॥
रुद्रदिङ्नन्दवसुभिर्मिता वापि प्रकीर्णकैः ।
प्रत्यग्गा वीथयः पञ्च सौम्यान्ताः स्युस्त्रयोदश ॥
शक्वर्यां चातिशक्वर्यामष्ट्यामत्यष्ट्या च सम्मितम् ।
नन्द्यावर्ते तु विन्यासे प्रासादो प्रभवन्ति हि ॥
प्राच्याष्टवीथयो यस्मिन् सौम्या षट्यादिसंख्यया ।
आकृत्यन्तं समा यत्र परागोऽसौ विधीयते ॥
प्राचीना वीथयः सप्त त्रयोविंशादितः क्रमात् ।
आ सप्तविंशतेः सौम्या विन्यासे पद्मके स्मृताः ॥
प्राचीना वीथयोऽष्टौ स्युरष्टाविंशतिकादितः ।
आद्वात्रिंशदुदीच्यः स्युर्विन्यासे श्रीप्रतिष्ठिते ॥
एकद्वित्रिचतुष्पञ्चदण्डैः स्याद् वीथिविस्तृतिः ।
प्रमुत्तराभ्यां वीथिभ्यां कर्करीवन्धमध्यमा ॥
चतुर्द्वारा भावयेयुर्ग्रामस्याद् दण्डकादयः ।
ग्रामपर्यन्तवीथिस्तु ख्याता मङ्गलवीथिका ॥

---

# तृतीयः पटलः

## नगर-लक्षणम् नगर निवेशश्च

### नगर निवेशे

विं० वा० आद्यस्तु निगमः प्रोक्तस्कन्धावारो द्वितीयकः ।
(अ) निगमादि- द्राणकस्तु तृतीयस्स्याच्चतुर्थः कुब्जको मतः ॥
नृपयोग्य-सप्तनगर- पट्टणं पञ्चमं षष्ठश्शिबिरस्तु प्रकीर्तितः ।
भेदाः ……………………चारस्सप्तमो वाहिनीमुखः ॥
८. ३८-४०॥ निगमादिनगर्यस्तु नृपभोग्या उदीरिताः ।
वनमध्यङ्गतो वापि गिरिसानुगतोऽपि वा ॥
सदातोयातीरभाग्वां रक्षकैरभिसंवृतः ।

(ब)सामान्यविंशति-पञ्चकस्सर्वतोभद्रो भद्रो विश्वेशपूर्वकाः ।
नगरप्रभेदाः कार्मुकः प्रस्तरश्चैव स्वस्तिकश्च चतुर्मुखः ॥
६. १-४ श्रीप्रतिष्ठा च नगरी बलिदेवपुरन्तथा ।
देवमानुषभेदेन द्विविधं नगरं मतम् ॥
वैजयन्तश्च नगरमन्यच्च पुटभेदनम् ।
गिरिवारिगुहाभेदान्नगरं तत्त्रिधा मतम् ॥
मुखाष्टकञ्च नगरं नन्द्यावर्तमथोत्तरम् ।
प्रसिद्धा राजधानी च कीर्तिता नगरोत्तमा ।
लोकानन्दकरास्सर्वे यशस्सम्पद्विवृद्धिदाः ॥

स० सू० नगरं मन्दिरं दुर्गं पुष्पकं साम्परायिकम् ।
नगरोपभेदाः निवासः सदनं सद्म क्षयः क्षितिलयस्तथा ॥
१८. १-७ यत्रास्ते नगरे राजा राजधानीं तु तां विदुः ।
शाखानगरसंज्ञानि ततोऽन्यानि प्रचक्षते ॥
शाखानगरमेवाहुः कर्वटं नगरोपमम् ।
ऊनं कर्वटमेवेह गुणैर्निगम उच्यते ॥
ग्रामः स्यान्निगमादूनो- ग्रामकल्पो गृहस्त्वसौ ।
गोकुलावासमिच्छन्ति गोष्टमल्पं तु गोष्ठकम् ॥
उपस्थानं भवेद् राज्ञां यत्र तत् पत्तनं विदुः ।
वहुस्फीतवणिग्युक्तं तदुक्तं पुटभेदनम् ॥
विधाय कुटिका यत्र पत्रशाखातृणोपलैः ।
पुलिन्दाः कुर्वते वासं पल्ली स्वल्पा तु पल्लिका ॥

नगरं वर्जयित्वान्यत् सर्वं जनपदः स्मृतः।
नगरेण समं कृत्स्नं राष्ट्रं देशोऽथ मण्डलम्॥

राष्ट्र-निवेशे-ग्राम-निवेशपुरस्सर एव नगराणां निवेशः
१०. ७६–८७

नगरस्य विभागोऽयं यथावत् समुदीरितः।
खेटं तदर्धविष्कम्भमाहुर्ग्रामं तदर्धतः॥
योजनेन पुरात् खेटं खेटाद् ग्रामं प्रचक्षते।
गव्यूतिपरिमाणेन ग्रामाद् ग्रामं प्रचक्षते॥
द्विक्रोशाद् विषये सीमा तदर्धेन पुरस्य सा।
खेटके पुरसीमाधग्रामे खेटार्धतः स्मृता॥
त्रिंशद्धनूंषि विष्कम्भः पुरे दिग्वर्त्मसु स्मृतः।
विंशतिः खेटके मार्गा ग्रामे दश च दर्शिताः॥
नव ग्रामसहस्राणि नवति (श्र?ञ्च) प्रचक्षते।
चतुःषष्टिमपि ग्रामान् ज्यायो राष्ट्रं विदुर्बुधाः॥
दशार्धं च सहस्राणि ग्रामाणां त्रिशती तथा।
ग्रामाश्चतुरशीतिश्च मध्यमं राष्ट्रमीरितम्॥
सहस्रमेकं ग्रामाणां तद्वच्च शतपञ्चकम्।
ऊना च ग्रामपञ्चाशत् कनीयो राष्ट्रमुच्यते॥
अप्यर्धसंख्ययैतेषां ज्येष्ठमध्यकनीयसाम्।
विधाय नवधैकैकं विभजेद् विधिवत् सुधीः॥
राष्ट्रेष्वेवं विभक्तेषु यथाभागं विधानवित्।
निवेशयेत् पुराण्येषु सप्त सप्त यथागमम्॥

अ० पृ०
विंशति-पुरप्रभेदाः
७२. १–४

वक्ष्ये पुरस्य चाकारं साम्प्रतं लक्षणं पुनः।
प्रशस्तं दोषरहितं पुरनामानि विंशतिः॥
माहेन्द्रं सर्वतोभद्रं सिंहावलोकवारुणे।
नन्द्यावर्तं च नन्दाख्यं पुष्पकं चैव स्वस्तिकम्॥
पार्श्वदण्डं जयन्तं च श्रीपुरं रिपुमर्दनम्।
स्नाहं दिव्यमुत्तरं च धर्मं कमलशक्रदे॥
महाजयं पौरुषं च साम्प्रतं कथितं बुधैः।
पुराणां विंशतिश्चैव ख्याता भुवनमण्डनम्॥

तेषां विशेषाश्च
५–१७

महेन्द्रं चतुरश्रं च सर्वतोभद्रमायतम्।
सिंहावलोकनं वृत्तं वृत्तायतं च वारुणम्॥
मुक्तकोणं च नन्दाक्षं नन्द्यावर्तं च स्वस्तिकम्।
पुष्पकमष्टदलाख्यं स्वस्तिकं तु चाष्टाश्रकम्॥
यवाकृति जयन्तं च दण्डं स्यादतिदीर्घकम्।
श्रीपुरं चैकमाकारे द्वाभ्यां तु रिपुमर्दनम्॥
शैलकुक्षौ तथा स्नाहं दिव्यकं शैलमस्तके।

नैऋते च सौम्याख्यं सरिद्याम्ये तु धर्मकम् ॥
पौरुषं पुरुषाकारं नद्योश्चैवं महाजयम् ।
पुरं विंशतिसङ्ख्याकं रम्यं सुरनरोरगैः ॥
स्वस्तिशान्तिकरं नित्यं गोब्राह्मणधराभुजाम् ॥
माहेन्द्रं चतुरश्रं च प्रतापकीर्तिवर्धनम् ।
वृद्धिदं सर्वतोभद्रं नित्यं तद्भद्रशान्तिदम् ॥
सिंहावलोकनं रम्यं हरे (तै) रिपुरिषाव (त) धी (वी) ? ।
वारुणे तु प्रजावृद्धिर्नन्दाख्ये नन्दनं चिरम् ॥
नन्द्यावर्तं मङ्गलाख्यं त्रिदशानां च पुष्पकम् ।
स्वस्तिकृत्स्वस्तिकं प्रोक्तं जयन्तं च जयावहम् ।
वृद्धिदं पार्श्वदण्डं च श्रीप्रदं श्रीपुरं तथा ।
रिपुमर्दनं रिप्वन्तं स्नाहं चैवाभयप्रदम् ॥
दिव्यकं देवभवनमुत्तरं चोत्तमोत्तमम् ।
धर्मं धर्मकरं नित्यं कमलं शान्तिदायकम् ॥
इन्द्रराज्योदयं शक्रं पौरुषं भीमविक्रमम् ॥
महाजयं पुरं नाम सर्वदानन्दकारकम् ॥
इत्थमाकृतयो गुणाः कथितास्तव मयाधुना ।
शुभानां सुप्रशस्तानां पुराणां विंशतिस्तथा ॥

मान० नगर-भेदाः १०, १९-२१॥

सर्वेषां नगरादीनां भेदं (दो) लक्षणमुच्यते ।
नगरं राजधानीयं केवलं नगरं तथा ॥
पुरं य नगरी चैव खेट (टं) खर्वटमेव च ।
कुब्जकं पत्तनं चैव शिबिरं वाहिनीमुखम् ॥
स्थानीयं द्रोणकं चैव संविद्धं कोलकं ततः ।
निगमं स्कन्धावारं च दुर्गं चाष्टविधं भवेत् ॥
नगरादीनि (दि) सङ्ग्रामं च प्रोक्तं दुर्गं च सप्तमम् ।

तेषां विशेषाश्च १०, २२-३३

राष्ट्रमध्ये नदीतीरे बहुपुण्यजनावृतम् ॥
मध्ये राजयुतं चैव नगरं कृतमिष्यते ।
तत्रागते नगर्यन्तं यदि विष्णवाजयं भवेत् ॥
राजधानीति तन्नाम विद्वद्भिर्वच्यते सदा ।
चतुर्दिक्षु चतुर्द्वारं गोपुरैश्च समन्वितम् ॥
रक्षागृहैः समाकीर्णं विष्वक्सेनालयान्वितम् ।
वणिग्भिश्च समाकीर्णमापणैश्च समावृतम् ॥
अन्तर्बहिर्जनैः पूर्णा (र्णं) नानादेवालयैरपि ।
केवलं नगरं प्रोक्तं यदेतं (तत्) तन्त्रपारगैः ॥
काननोद्यानसंयुक्तं नानाजनगृहान्वितम् ।

क्रयविक्रयविद्भिश्च वैश्यवेश्यसंमि(संयु)तम् ॥
देवसद्मसमायुक्तं पुरमेतत्प्रकथ्यते ।
अस्यान्ते राजनिलयं नगरीति तमि (दि) ष्यते ॥
नदीपर्वत(व) प्रान्ते (च) शूद्रालयसमन्वितम् ।
महाप्रावृतसंयुक्तं खेटमुक्तं पुरातनैः ॥
परितः पर्वतैर्युक्तं नानाजातिगृहैर्वृतम् ।
सर्वप्रचारसंयुक्तमेतत्खर्वटमीरितम् ॥ ॥
खेटखर्वटयोर्मध्ये सर्वमध्या (र्या) लयान्वितम् ।
वप्राभावस्वते (त्वे तु) तत्तु कुब्जकमुदाहृतम् ॥
अब्धितीरप्रदेशे तु नानाजातिगृहैर्वृतम् ।
वणिग्जातिभिराकीर्णक्रयविक्रयपूरितम् ॥
रत्नैर्द्वीपान्तरैर्नित्यैः (रानीतैः) क्षौमैः कर्पूरकादिभिः ।
एतत्पत्तनमाख्यातं वप्रायतसमन्वितम् ॥

मय० मानादिपरिखादिपुरस्सरनगरप्रभेदाः १०. १-२९॥

नगरादीनां मानं विन्यासं च क्रमादहं वक्ष्ये ।
आद्यं धनुषां त्रिशतं तस्माच्छतदण्डवर्धनादुपरि ॥
साष्टकसप्ततिभेदाश्चाष्टसहस्रान्तकं यावत् ।
नगराणां विपुलं हि प्रोक्तं पूर्वोक्तमानेन ॥
शतदण्डादिदशद्ध्या त्रिःसप्तत्रिशतदण्डान्तम् ।
क्षुद्राणामिदमुदितं नगराणामेव सर्वेषाम् ॥
चातुःसहस्रकान्तं पञ्चशतोनाद्भि पञ्चपञ्चधा मानम् ॥
त्रिशतादिचतुःशतकं यावद् वृद्ध्या तु विंशतिभिः ।
षड्भिरर्धमुक्तं खेटं श्रेष्ठे मध्ये परे विपुलम् ॥
तस्मात् त्रिरष्टवृद्ध्या द्रोणमुखे पञ्चधा मानम् ।
(स?) षण्णवतिचतुः शतकं यावत् तावत्तु विस्तारम् ॥
द्विशतादि चतुःशतकं यावत् पञ्चाशदभिवृद्ध्या ।
पञ्चप्रमाणमेवं खर्वटविस्तार उद्दिष्टः ॥
द्विशतादिपङ्क्ति वृद्ध्या चत्वारिंशत्रिशतदण्डं स्यात् ।
यावन्निगमे विपुलाः प्रोक्तास्त्रिः पञ्चभेदाश्च ॥
शतदण्डे शतवृद्ध्या पञ्चशतं यावदुद्दिष्टम् ।
स्यात् कोत्मकोलकानां विपुलं पञ्चैव भेदेन ॥
तावन्मानं प्रोक्तं पुरविपुले सूरिभिः प्राज्ञैः ।
यावत् पञ्चशतान्तं द्विशतादारभ्य सप्तधा मानम् ॥
पञ्चाशद्धनुवृद्ध्या विपुलं कथितं विडम्बस्य ।
प्रागुपदिष्टं मानं ह्येतन्मानं तु वैतेषाम् ॥
द्विगुणं त्रिपादमर्धं पादं तेषां मुखायतं विपुलात् ।

विपुले तु षडष्टांशे भागेनैकेन वायतं पुरतः ॥
चतुरश्रमायताश्रं वृत्तं वृत्तायतं च पुनः ।
स्याद् गोलवृत्तमेषां वप्राकारास्तु पञ्चैव ॥
षडष्टसप्तपञ्चकचतुरंशैस्तत्कृते विपुले ।
मुनिरसशरयुगशिखिभिर्भागैर्वप्रावधिः प्रोक्तः ॥
द्वित्रिचतुर्हस्तं स्याद् विपुलं सालस्य तुङ्गे तु ।
सप्तदशैकादशभिर्हस्तैरग्रं त्र्यंशोनम् ॥
परितः परिखा बाह्ये बाह्ये देवालयादीनि ।
पेचकभागाद्यासनभागान्तं चण्डितं प्रोक्तम् ।
सूत्रादीन्यश्रविषमस्थानानि च वर्जयेन्मतिमान् ।
प्रागुदगग्रं मार्गं तत्र यथेष्टं न्यसेद् विधिना ॥
दण्डादिसप्तदण्डं यावद् दण्डार्धवृद्ध्या तु ।
मार्गविशालाश्चैते त्रयोदशभेदाः समुद्दिष्टाः ॥
राष्ट्रस्य मध्यभागे सज्जनबहुले नदीसमीपे च ।
नगरं केवलमथवा राजगृहोपेतराजधानी वा ॥
दिक्षु चतुर्द्वारयुतं गोपुरयुक्तं तु सालाढ्यम् ।
क्रयविक्रयकैर्युक्तं सर्वजनावाससङ्कीर्णम् ॥
सर्वसुरालयसहितं नगरमिदं केवलं प्रोक्तम् ।
प्रत्यगुदग्दिशि गहना परितः साला बहिः सपांसुचया ॥
परितः परिखा बाह्ये शिबिरयुतानेकमुखरक्षा ।
पूर्वायां दक्षिणतश्चाभिमुखा राजबलयुक्ता ।
उन्नतगोपुरयुक्ता नानाविधमालिकोपेता ।
सर्वसुरालयसहिता नानागणिकान्विता बहूद्याना ॥
हस्त्यश्वरथपदातिबहुमुख्या सर्वजनयुक्ता ।
द्वारोपद्वारयुताभ्यन्तरतोऽनेकजनवासा ॥
या नृपवेश्मसमेता सा कथिता राजधानीति ।
काननवनदेशे वा सर्वजनावाससङ्कीर्णम् ॥
क्रयविक्रयकैर्युक्तं पुरमुदितं यत् तदेव नगरमिति ।
शूद्रैरधिष्ठित यन्नद्यचलावेष्टितं तु तत् खेटम् ॥
परितः पर्वतयुक्तं खर्वटकं सर्वजनसहितम् ।
खर्वटखेटकमध्ये यज्जनताढ्यं जनस्थानकुब्जम् ॥
द्वीपान्तरागतवस्तुभिरभियुक्तं सर्वजनसहितम् ।
क्रयविक्रयकैर्युक्तं रत्नधनक्षौमगन्धवस्त्वाढ्यम् ॥
सागरवेलाभ्याशे तदनुगतायामि पत्तनं प्रोक्तम् ।
परनृपदेशसमीपे युद्धारम्भक्रियोपेतम् ॥

सेनासेनापतियुतमिदमुदितं शिबिरमिति च वरैः ।
सर्वजनैः सङ्कीर्णं नृपभवनयुतं तदेव तथा ॥
बहुरक्षोपेतं यत् सेनामुखमुच्यते तज्ज्ञैः ।
नद्यद्रिपार्श्वयुक्तं नृपभवनयुतं सबहुरक्षम् ॥
यन्नृपतिस्थापितकं तत् स्थानीयं समुद्दिष्टम् ।
नद्यब्धिदक्षिणभाग् वणिगादिसंयुक्तम् ॥
सर्वजनावासं यद् द्रोणमुखं प्रोक्तमाचार्यैः ।
ग्रामसमीपे जनतालयमिदमुदितं विडम्बमिति ॥
वनमध्ये जनवासं यत् कोत्तकोलकं प्रोक्तम् ।
चातुर्वर्ण्यसमेतं सर्वजनावाससङ्कीर्णम् ॥
बहुकर्मकारयुक्तं यन्निगमं तत् समुद्दिष्टम् ।
नद्यद्रिवनसमेतं बहुजनयुक्तं सनृपवासम् ॥
एतत् स्कन्धावारं तत्पार्श्वे चेरिका प्रोक्ता ।

## नगर-निवेशे मार्ग-विन्यासभेदाः

वि०वा०

| | |
|---|---|
| ६.४३॥–४४ | मुखद्वारान्निर्गता या राजवीथीति कथ्यते । |
| पञ्चप्रतोलीपुरस्सर- | शतद्वयं प्रतोलीनां सङ्ख्या चात्र प्रकीर्तिता । |
| राजवीथ्यादिवीथयः | वीथीनां क्षुद्रवीथीनां सङ्ख्यानेका समन्ततः ॥ |
| सर्वतोभद्रे यथा | नात्रोपवीथीरिशिल्पज्ञः क्षुद्रवीथीश्च कल्पयेत् । |
| ६. ५०॥–५१॥ | समसूत्रा राजवीथीः कल्पयेत्ताश्च सर्वतः ॥ |
| | प्रतोलीनां पञ्चशतं संख्या चात्र निगद्यते । |
| प्रस्तरे यथा | सर्वा वीथ्यो द्विपक्षास्स्युरेकपक्षा बहिः स्थिताः । |
| ६. ६६–६६॥ | शतसंख्यां प्रतोलीनामन्यवीथीश्च कल्पयेत् ॥ |
| | वल्लीभिः पण्डवीथीभिर्न्यायशालादिकैर्वृतम् । |
| चतुर्मुखे यथा | प्रतोलीनां शतैर्युक्तमुपवीथीशतेन च । |
| ६. ८२ | वल्लीभिः क्षुद्रवीथीभिस्संयुतं च समन्ततः ॥ |
| इति दिक् | |
| स० सू० | चतुरश्रीकृते क्षेत्रे प्रागुदीच्यन्तभागतः । |
| १०. ९–१४॥ | चतुर्भागान्तरा वंशाः कार्यास्तस्य त्रयस्त्रयः ॥ |
| (सप्तदश मार्गाः | वंशषट्कविभक्तेऽस्मिन् पदषोडशकान्विते । |
| तेषां संज्ञा | राजमार्गः शुभः कार्यो मध्यमं वंशमाश्रितः ॥ |
| विन्यासाश्च) | कार्यो ज्यायसि(च)ज्यायांश्चतुर्विंशतिकः करैः । |
| | विंशत्या मध्यमे मध्योऽधमे षोडशकोऽधमः ॥ |
| | बलस्य चतुरङ्गस्य पौराणां पार्थिवस्य च । |
| | असम्बाधसमश्चैष कार्योऽयं कारमशर्करः ॥ |

महारथ्याद्वयं कार्यं तदुपान्तस्थवंशयोः।
तद् द्वादश दशाष्टौ स्यात् करान् ज्येष्ठादिकं त्रिषु॥
पदमध्यगतं कार्यं यानमार्गचतुष्टयम्।
ज्येष्ठादिषु पुरेष्वेवं तत्पद्यं च चतुःकरम्॥
उपरथ्या महामार्गस्यार्धं वा द्विशताधिकम्।
शेषा रथ्यास्तदर्धेन विधातव्याः प्रमाणतः॥
यानमार्गचतुष्कस्य कार्यौ पार्श्वद्वयाश्रितौ।
पदाष्टकपदान्तस्थौ द्वौ द्वौ जङ्घापथावपि॥
पुरे ज्येष्ठे त्रिहस्तौ तौ मध्यमेऽर्धकरोज्झितौ।
मध्यमादर्धहस्तेन हीनौ स्यातां कनीयसि॥
पुरस्यान्तर्गतौ कार्यौ घण्टामार्गौ तथापरौ।
राजमार्गगुणोपेतौ प्रमाणेन च तद्विधौ॥
प्राक्प्रत्यगायताः सप्तदश मार्गा इतीरिताः।

मय०
नगर-विधाने मार्ग-संख्या
१०. ४२-४३॥

प्राक्प्रत्यग्गतमार्गा द्वादश दश वाष्ट षट्चतुर्युगलम्।
तावदुदीचीनास्ते तत्रैवायुग्मसङ्ख्या वा॥
एकादशनवसप्तकपञ्चगुणा वैकमार्गा वा।
युग्मायुग्मपदेषु ह्येकत्रिभिरंशकैरजांशाः स्युः॥

मार्गभेदन पुरभेदाः
१०. ४४-७६॥

नगरादीनामेवं मार्गाण्युदितानि सर्वेषाम्।
दण्डवदेका वीथी तद्दण्डकमित्यभीष्टं स्यात्॥
उत्तरदिङ्मुखमेकं तन्मध्ये संप्रयुक्तं चेत्।
कर्तरिदण्डकमुदितं प्राचीनौ कुट्टिमौ तर्हि॥
तद्बाहुदण्डकं स्याद् दिक्षु चतुर्द्वारसंयुक्तम्।
बहुकुट्टिमसंयुक्तं मध्ये वीथ्या द्विपार्श्वे तु॥
शेषं पूर्ववदिष्टं कुटिकामुखदण्डकं प्रोक्तम्।
प्राचीनोदीचीनैर्मार्गैस्त्रिभिरेव संयुक्तम्॥
तत् कलकाबन्धदण्डमिति तज्ज्ञैः समुद्दिष्टम्।
प्राङ्मुखवीथ्यस्तिस्रश्चोत्तरमार्गास्त्रयश्चैव॥
एकैकान्तरितास्ते कुट्टिममार्गास्त्वनेकाश्च।
वेदीभद्रकमुदितं नगरादीनामिदं शस्तम्॥
स्वस्तिकमुदितं ग्रामे यथा तथा स्वस्तिकं विद्यात्।
प्रागुत्तरमुखमार्गाः षट्षडभीष्टास्तु तद्बाह्ये॥
प्रागिव मार्गोपेतं वीथिपदं स्वस्तिकं चैव।
प्राचीनोदीचीनाश्चत्वारश्चैव मार्गाः स्युः॥
ब्रह्मावृतपथमेकं कुट्टिममार्गास्त्रयः प्राच्याम्।
एतद् भद्रकमुदितं नाम्ना नगरादिविन्यासम्॥

प्राङ्मुखमार्गाश्चैवोत्तरमार्गास्तथैव स्युः ।
बहुकुट्टिमसंयुक्तं भद्रमुखं नाम वस्तु स्यात् ॥
प्राचीनास्तुपड्वैवोत्तरवक्त्रास्तथा मार्गाः ।
यद् बहुकुट्टिमयुक्तं तद्वस्तु भद्रकल्याणम् ॥
पूर्वापरमुखमार्गाः सप्तैवोदङ्मुखाश्च तथा ।
शेषं प्रागिव सर्वं विन्यासं तन्महाभद्रम् ॥
अष्टौ पूर्वमुखास्ते मार्गाश्चाष्टावुदग्वक्त्राः ।
द्वादशमार्गोपेतं बह्वर्गलकुट्टिमैर्युक्तम् ॥
यद् तद् वस्तुसुभद्रं नाम्ना विन्यासमुद्दिष्टम् ।
नवनवमार्गाश्चैते प्राचीनाश्चाप्युदीचीनाः ॥
द्वारोपद्वारयुतं कुट्टिममार्गार्गलैर्युक्तम् ।
राजगृहोपेतं यन्नगरं नाम्ना जयाङ्कः स्यात् ॥
प्राचीना दश मार्गाश्चोत्तरमार्गास्तथैव स्युः ।
नृपमन्दिरसंयुक्तं युक्त्यानेकार्गलोपेतम् ॥
बहुकुट्टिमसंयुक्तं विजयं नाम्ना वरैः प्रोक्तम् ।
प्राचीनास्त्वेकादश मार्गा रुद्रा उदीचीनाः ॥
ब्रह्मांशादपरांशो यदभीष्टं तत्र नृपवासम् ।
तन्मुखतोदङ्महाङ्गणकं स्यादिष्टभागे तु ॥
तत्रान्तः पुरवासं शेषं सर्वं समुन्नेयम् ।
तत्प्रागुन्नतमार्गा सा कथिता राजवीथीति ॥
तस्या द्विपार्श्वयोः स्यात् सैश्वर्याणां मालिकापङ्क्तिः ।
तत्पार्श्वयोर्निवासो वणिजां स्यात् तस्य दक्षिणतः ॥
स्यात् तन्तुवायवासं ह्युत्तरतश्चक्रिणां वासम् ।
तत्तज्जात्यन्तरगृहमथ तत्सामीप्यतः कुर्यात् ॥
शेषं प्रागिव सर्वं योग्यं तत् सर्वतोभद्रम् ।
एवं षोडश भेदा ह्युदिताश्चाद्यैर्मुनीन्द्रैस्तु ॥
मार्गच्छेदं नेष्टं पदमध्ये चत्वरं न स्यात् ।
शेषं युक्त्यानुक्तं सम्यग् योज्यं नृपेच्छया तज्ज्ञैः ॥
क्षुद्राणामपि चैषां मध्यानां चापि सर्वेषाम् ।

मार्गचतुष्पथाः मार्गेषु जलभ्रमाश्च

टि०—समराङ्गणादिवास्तु-शास्त्रेषु शुक्रनीतिसारादिसमाज-शास्त्रेषु च सुनिर्दिष्टाः सन्त्ये
यथावसरं ग्रन्थग्रन्थिताइति नात्रोपश्लोकिताः ।

## पुर-निवेशे (नगर-निवेशे ग्राम-निवेशे वा) जातिवर्णाधिवासः—

| वि० वा० | |
|---|---|
| मण्डके ७. ११ | विप्रैरधिकसंख्याकैर्मण्डकग्राम ईरितः ॥ |
| प्रस्तरे ७. १५ | विप्रैरधिकसंख्याकैस्स युक्तः प्रस्तरो मतः ॥ |
| बाहुलिके ७. १८ | नानाजातिभिराकीर्णो ग्रामपालालयान्वितः । |
| | सस्यभूमिसमायुक्तो ग्रामो बाहुलिकः स्मृतः ॥ |
| पराके ७. १६ | सहस्रजनता यत्र विप्रहीना च भण्यते । |
| पूर्वमुखे ७. २५ | प्राच्यां मुखद्वारयुतः परिखावृतवास्तुकः । |
| | वैश्यसंख्याधिक्ययुतः पण्यवीथीभिराकुलः ॥ |
| विश्वकर्मणि ७.३६-४० | षट्सहस्रावधिजनैरावृतञ्च समन्ततः । |
| | नरपालालयोपेतं न्यायविस्तनयायुतम् ॥ |
| | ग्रामकार्यकरैस्सर्वैरन्वितञ्च वणिग्गणैः । |
| | पण्यवीथीभिराकीर्णं धनिकैश्च समन्वितम् । |
| | वास्तुचिह्नमिदं नाम्ना विश्वकर्मेति चोदितम् ॥ |
| नगरेषु- | भूधरे रुचके भागे भृङ्गे मीने च सोमके ॥ |
| सर्वतोभद्रे यथा | आपोविवस्वद्भागेषु सावित्रेषु यथाक्रमम् । |
| ६, ५२-५३ | ब्राह्मणक्षत्रसद्मानि स्थापयेच्छिल्पकार्यवित् ॥ |
| स० सू० | विभागश्च प्रमाणं च लक्षणं चादिमस्य यत् । |
| १०, ८८-१०१ | जातिवर्णाधिवासश्च यथावत् तदिहोच्यते ॥ |
| | सुवर्णकारानाग्नेय्यां तथा वह्न्युपजीविनः । |
| | निवेशयेत् कर्मकरानन्यानपि विधानवित् ॥ |
| | वैश्यानामक्षधूर्तानां चक्रिकाणां च दक्षिणे । |
| | नटानां नर्त्तकानां च गृहाणि विनिवेशयेत् ॥ |
| | निवेशयेत् सौकरिकान् मे (पी?षी) कारान् मृगच्छिदः । |
| | कैवर्तान् नैर्ऋताशायां दमनाधिकृतांस्तथा ॥ |
| | रथेषु कौशलं येषां येषां स्यादायुधेषु च । |
| | वारुण्यां दिशि तान् सर्वान् पुरस्य विनिवेशयेत् ॥ |
| | कर्मस्वधिकृता ये च ये चापि परिकर्मिणः । |
| | शौण्डिका ये च तान् सर्वान् वायोर्दिशि निवेशयेत् ॥ |
| | यतीनामाश्रयान् ब्रह्मवरसानां तथा सभाम् । |
| | प्रपाश्च पुण्यशालाश्च कुर्याद् दिशि धनेशितुः ॥ |
| | घृतविक्रयिणो ये च फलविक्रयिणश्च ये । |
| | निवेशिताः प्रशस्यन्ते पुरस्यैशानदिग्गताः ॥ |
| | पूर्वभागे बलाध्यक्षान् राज्ञो मुख्यांस्तथा बले । |

निवेशयेत् तथाग्नेय्यां बलं नानाविधं सुधीः ॥
श्रेष्ठिनो दक्षिणशालायां तथा देशमहत्तरान् ।
याम्येकहारान् (अ) कुर्वीत तथा ककुभि नैर्ऋते ॥
कोशपालमहामात्रादेशिकान् कारुकानपि ।
नियामकांश्च कुर्वीत सलिलाधिपतेर्दिशि ॥
वायोः ककुभि कुर्वीत दण्डनाथान् सनायकान् ।
पुरोहितज्योतिषिकानुत्तरस्यां निवेशयेत् ॥
विप्राः सौम्या दिशो भागे क्षत्रियाः शक्रदिग्गता ।
वैश्यशूद्रास्तु कर्तव्या दक्षिणापरयोः क्रमात् ॥
निवेश्या वणिजो वैद्या मुख्याश्चापि चतुर्दिशम् ।
चतुर्दिशं विशेषेण स्थापयीत बलानि च ॥
नगरस्य बहिः प्राच्यां लिङ्गस्थान् विनिवेशयेत् ।
श्मशानानि तथा तत्स्थान् याम्यायां स्थपतिः सुधीः ॥

अ० पु०
७२. ४१-४८
(ब्राह्मणाद्यधिवासः)

ब्राह्मणः पूर्ववास्तव्याः क्षत्रियाश्चैव दक्षिणे ।
प्रशस्ताश्चोत्तरे शूद्रा वैश्या मध्ये च सङ्कुलाः ॥
पुरे पुरे च विप्राश्च क्षत्रिया वैश्यशूद्रकाः ।
तद् बाह्यतस्तथा चान्यास्तथा स्थपतिसङ्कुलाः ॥
विप्रक्षत्रियवैश्यानां प्राकारा वै निवासिनाम् ।
वणिक्कर्मकराणां च मध्यानां च सुखावहाः ॥
विदिक्षु दिक्षु पै कार्या नगरस्वस्तये यथा ।
अष्टभिरष्टद्वात्रिंशद्धमा मध्यमोत्तमाः ॥
चतुर्वर्णांश्च प्रकृतीरेकैकेषु पुरेषु च ।
सर्वत्र वासयेच्चैव नागरांश्च सुखावहान् ॥
पूर्वे ब्राह्मणलोकाश्च क्षत्रियाश्चैव दक्षिणे ।
निवेश्याश्चोत्तरे शूद्राः पश्चिमे तु जलाश्रयाः ॥
पूर्वयाम्योत्तरे शस्तं हट्टमार्गादिचत्वरम् ।
ईशाने शिल्पिनः सर्वे रजकाश्छिपकाः परम् ॥
चर्मकाराश्च वरुटा आग्नेय्यां दिशमाश्रिताः ।
नैर्ऋत्ये शौण्डिका ज्ञेया वायव्ये तन्तुवायकाः ॥

७२. ३२-४०
(क्रयविक्रययुतौक-विन्यासः)

क्रय्यवस्तुयुतौकश्च तदग्रे विक्रयादिकम् ।
यतश्चागम्यते लोकैर्वर्तते जनसङ्कुलम् ॥
स्वर्णकारं सुगन्धं च गन्धिकं च तृतीयकम् ।
दन्तकर्म धान्यगृहमेतत्कुर्यात्तु पूर्वतः ॥
ताम्बूलफलसङ्कीर्णं पुष्पमालादिसङ्कुलम् ।
राजद्वाराग्रतश्चैव यतः स्याच्च जनाकुलम् ॥

मञ्जिष्ठरङ्गशोभाढ्यं नारिकेलसमाकुलम् ।
त्रिगणोपस्कराद्यं च राजद्वारोत्तरे शुभाः ॥
आयसोपस्करं सर्वं शस्त्रादि विविधं तथा ।
व्यजनच्छत्रमायूरं शाश्वतं दक्षिणे शुभम् ॥
ईशाने च वस्त्रहर्यं पट्टिनेत्रपट्टाद्यकम् ।
स्वल्पवस्त्राद्याग्न्येय्यां च वस्त्रबन्धस्तदग्रतः ॥
रक्तकाद्युत्तरे शस्तं कृष्णरङ्गादि दक्षिणे ।
पूर्वतः श्वेतवस्त्राद्यं राजवेश्माग्रकल्पितम् ॥
अष्टादशानां धान्यानां सर्वदिक्षु च विक्रयः ।
ताम्बूलानां च पूगानां विक्रयो देवताग्रतः ॥
(तां) दलाक्षं? चित्रलेखाद्या गृहेषु पुरवासिनाम् ।
छिंपिका रजकास्त्रैणाः स्वदेवादिपुरे स्थिताः ॥

मय०
(अन्तरापणिकं यथा)
१०, ७६॥–६१॥

तत्र कुटुम्बावलिकं वक्ष्येऽहं चान्तरापणकम् ॥
परितो रथपथयुक्तं मध्ये वणिजां गृहश्रेणी ॥
तद्दक्षिणतः पार्श्वे गेहं स्यात् तन्तुवायानाम् ॥
उत्तरतस्तद्वासावलिकं स्याच्चक्रिकाणां तु ।
कर्मोपजीवेनां स्याद् वासं रथपथ्यनेकानाम् ॥
ब्रह्मावृतपथमेकं तत्रान्तरापणं कार्यम् ।
ताम्बूलादि फलं च प्रोक्तं सारान्वितं द्रव्यम् ॥
ईशानादिमहेन्द्रद्वारान्तं चान्तरापणकम् ।
तत्रैव मत्स्यमांसं शुष्कं शाकं च विज्ञेयम् ॥
महेन्द्राद्यग्न्यन्तं भक्ष्यं भोज्यं च निर्दिष्टम् ॥
अग्न्यादिक्षतगृहपर्यन्तं तत्र भाण्डानि ॥
तस्मान्निर्ऋतिपदान्तं कंसादिकमत्र विज्ञेयम् ।
स्यात् पुष्पदन्तभागान्तं पितृभागादि वस्त्रं स्यात् ॥
तस्मात् समीरणान्तं तण्डुलधान्यादिकं च कटम् ।
स्याद् भल्लाटपदान्तं वाय्वादिकं वल्कादीनाम्(?) ॥
तत्रैव लवणादिद्रव्यं तैलादिकं ज्ञेयम् ।
तस्मादीशपदान्तं गन्धं पुष्पादिकं विहितम् ॥
एवं नवान्तरापणमुदितं तत्परितस्तु मध्ये ।
अभ्यन्तरगतमार्गेष्वथ रत्नं हाटकं वस्त्रम् ॥
माञ्जिष्ठं तु मरीचं पिप्पलकं चापि हारिद्रम् ॥
मधुघृततैलादिकमथ भैषज्यं सर्वतः कार्यम् ॥
आर्यपदे च विवस्वति मित्रे पृथिवीधरे च पदे ।
शास्ता दुर्गा गजमुखलक्ष्म्यौ चात्रैव विज्ञेयाः ॥

देवालयमथ परितो ग्रामे यथा तथा विहितम् ।
परितः सर्वजनालयमुदितं किञ्चित् ततो दूरे ॥
नगराद् द्विशतं दण्डं नीत्वा प्राच्यां तु वाग्नेय्याम् ।
चण्डालकुटीराणि तत्रैव तु कौलिकानां तु ॥
अस्मिन् सर्वमनुक्तं ग्रामे तु यथा तथा विहितम् ।
पत्तनमृजुवीथियुतं नैव स्यादन्तरापणं तत्र ॥
शेषाणामपि तत्तद्योग्यवशात् तत्र विज्ञेयम् ॥

## पुरनिवेशे देवतायतनानि आरामोद्यानादीनि च—

(अ) देवागाराणि:—

वि० वा० श्रीप्रतिष्ठिते यथा ६ ६४–६५

मध्येलक्ष्म्यादिदेवीनां मन्दिरं कारयेद्बुधः ।
तटाकमण्टपारामप्राकारमुखगोपुरैः ॥
संयुक्तं शुभदं प्रोक्तं प्राङ्मुखं सर्वजीविनाम् ।
तन्मन्दिरं तु परितो विप्रवीथीः प्रकल्पयेत् ॥

स० सू० १०. ११०–१४१

निवेशनानि कुर्वीत त्रिदशानां यथाक्रमम् ।
नगराभिमुखं चित्रवनभाञ्जि शुभानि च ॥
याम्योत्तरायतं वंशं विकल्पपुरमध्यगम् ।
वहिरन्तश्च कुर्वीत देवानां विनिवेशनम् ॥
प्राच्यां प्रत्यङ्मुखान् कुर्यात् प्राङ्मुखांश्चाम्बुभृद्दिशि ।
याम्योदक्पार्श्वयोस्तस्य प्रादक्षिण्येन वंशगान् ॥
दक्षिणस्यां न कुर्वीत त्रिदशानप्युदङ्मुखान् ।
चैत्यशान्तिसभा यक्षमातृप्रथमयान्विताः (?) ॥
इत्यमी कथिताः सम्यग् ये यथादिङ्मुखाः सुराः ।
दिक्षु दिक्षु बहिर्ये स्युस्तानिदानीं प्रचक्ष्महे ॥
विष्णोर्दिनाधिनाथस्य सहस्रनयनस्य च ।
धर्मस्य च विधातव्यं दिशि प्राच्यां निकेतनम् ॥
सनत्कुमारसावित्र्योर्मरुतां मारुतस्य च ।
पूर्वदक्षिणदिग्भागे विदधीत निकेतनम् ॥
गणेशमातृभूतानां याम्ये प्रेतपतेर्गृहम् ।
भद्रकाल्याः पितॄणां स्याद् वेश्म चैत्यं च नैर्ऋते ॥
सागरस्य नदीनां च शिल्पिभर्तुः प्रजापतेः ।
निलयं पश्चिमाशायां विदध्याद् वरुणस्य च ॥
फणिनां भवनं कार्यमपरोत्तरदिग्गतम् ।
शनैश्चरस्य चात्रैव कात्यायन्याश्च मन्दिरम् ॥

विशाखस्कन्दसोमानां तथा यक्षाधिपस्य च।
पृथक्पृथग् विधातव्याः प्रासादाः सौम्यदिग्गताः॥
जगद्गुरोर्महेशस्य श्रियो वह्नेश्च मन्दिरम्।
पूर्वोत्तरस्यां ककुभि प्रविवेयं मनोरमम्॥
नदीनामम्बुधीनां च समस्तान्नगरस्य च।
कान्तारेष्वद्रिषु स्थानं सर्वत्रेष्टमुमापतेः॥
निवेश्यन्ते स्वदिग्भागेष्वेवं यस्मिन् सुरोत्तमाः।
सम्यक्तन्तु क्ष्मामासाद्य चिरं नन्दति तत्पुरम्॥
नगरस्य विदूरेऽपि ककुप्सु निखिलास्वपि।
बाह्यतोऽभिमुखा देवाः शस्यन्ते न पराङ्मुखाः॥
क्रियते यदि भूभागे वंशेन स पराङ्मुखः।
विधिमेनं तदा तस्मिंस्तज्ज्ञः शास्त्रोक्तमाचरेत्॥
तद्वेषवर्णभूषास्त्रवाहनैरन्वितं सुरम्।
तद्भित्तौ प्रकटाकारं नगराभिमुखं लिखेत्॥
वैकङ्कतशमीविल्वैः क्षीरकण्टकिभिर्द्रुमैः।
उदपानान्यगारेषु स्यान्न दोषोऽन्तरस्थितैः॥
अर्चाश्रितेष्वयं प्रोक्तो विधिर्नालेख्यवर्तिषु।
कर्तव्याः सर्वतोवक्त्रास्तस्माच्चित्रगताः सुराः॥
विधानं यद् यथा प्रोक्तं सुरधाम्नां पुराद् बहिः।
तद् तथाभ्यन्तरेऽपि स्यात्कार्यं स्वस्वदिगाश्रयम्॥
मध्ये पुरस्य कर्तव्यं गृहमम्भोजजन्मनः।
निवेशनं तथेन्द्रस्य तथैव हलिकृष्णयोः॥
मातृयक्षगणाधीशान् शिवकान् भूतसङ्घकान्।
विनापि वेश्मभिः कुर्याद् पुरे चत्वरमार्गगान्॥
राज्ञा वर्णाश्रमकलापण्यशिल्पोपजीविनः।
स्वदिक्पदस्थाः कर्तव्यास्ते देवाश्चेच्छता श्रियम्॥
प्रासादे सति भक्तिश्रद्धाशक्तियुक्तो यदापरम्।
प्रासादं कारयेत् पूर्वं न तदा पीडयेत् सुधीः॥
प्रतिवेश्म प्रतिग्रामं प्रतिदेवकुलं तथा।
कुर्याद् प्रतिपुरं चापि न प्राङ्मानगुणाधिकम्॥
पूर्वप्रासादतो रुद्रसोमयोर्ब्रह्मणोऽथवा।
प्रासादे विहितेऽभ्यस्मिन् भवेद् पीडाग्रजन्मनाम्॥
कृते धाम्न्यधिकेऽन्यस्मिन् वह्नेर्वाचस्पतेरथ।
पुरोधसां भयं विद्याद् ध्रुवं ज्योतिर्विदां तथा॥
धनाधिपामरावीशयमानां वरुणस्य वा।

अधिके विहिते धाम्नि भयं विद्यान्महीपतेः ॥
स्कन्दधाम्नोऽधिकेऽन्यस्मिन् विहिते तस्य वेश्मनि ।
सेनापतेर्बलानां च पीडा सञ्जायते ध्रुवम् ॥
प्रजापतेरप्यधिकं हरेर्वान्यत् कृतं गृहम् ।
कर्तुः कारयितुश्च स्याद् बन्धाय च विनष्टये ॥
गणेशयक्षफणिनामधिकोऽन्यः कृतो यदि ।
प्रासादः स्यात् तदा नित्यं सेनाङ्गानां महोदयम् ॥
स्त्रीनाम्न्यो देवतास्तासां पीड्यन्ते यदि वेश्मभिः ।
मुख्यानां पुरनारीणां तदा कुर्वन्त्युपद्रवम् ॥
पूर्वामरेषु सर्वेषु पीडितेष्वमरालयैः ।
अन्यैस्तल्लिङ्गिनां पीडा चैत्यैर्वा चैत्यपीडितैः ॥
हीनाधिकप्रमाणेषु दुर्निविष्टेषु धामसु ।
कर्तुः कारयितुः पीडा स्यान्न पूजा तथास्य च ॥
पुरं चानाश्रितं कुर्याद् वेधभागाश्रितं न च ॥
ज्येष्ठमध्यकनिष्ठानि नवषट्त्रिपदान्तरे ।
सुरवेश्मानि कुर्वीत दोषाणापरथा पुनः ॥
कथितोऽयं विधिः स्वैः स्वैस्त्रिदशानां निवेशने ।
बहिर्निवेशनात् स्वेच्छं विदध्यादमरालयम् ॥
नगरेषु समग्रेषु ग्रामेषु निखिलेषु च ।
खेटकेषु च सर्वेषु सामान्योऽयं विधिः स्मृतः ॥

अ० पु० ७२. १३-२१

आनन्दश्च तथोत्कण्ठो जयन्तो रिपुमर्दनः ।
कर्णालयश्च चत्वारो वृत्ताकारेण संस्थिताः ॥
सिंहावलोकनाश्चैव योधविद्याधरीयकाः ।
एकान्तरप्रभेदेन क्रमेणापि सुसंस्थिताः ॥
षट्त्रिंशत्तश्च षड्वृद्धौ विदुरष्टोत्तरं शतम् ।
पुरे प्रासादसंख्याभिर्देवस्थानानि चत्वरे ॥
पुर्मानानि द्वादशैव चत्वरं देवसङ्ख्यया ।
अनुक्रमेण कर्त्तव्यं पुरच्छन्दानुरूपतः ॥
नोत्तराभिमुखाः कार्या न देवा दक्षिणामुखाः ।
पूर्वापरमुखाः कार्या वास्तुशास्त्रेषु गीयते ॥
पुरप्राकारवासे तु देवा यत्र च संस्थिताः ।
नगराभिमुखास्तेव मध्यमे च पराङ्मुखाः ॥
पराङ्मुखाः स्थिता ये तु शिवः सूर्यो विधिर्हरिः ।
हन्यते तत्पुरं राष्ट्रं राज्यध्वंसश्च जायते ॥
प्राकारोच्छ्रयाद् द्विगुणं तदन्ते परिखात्रयम् ।

अम्भो ? विमार्गशस्तादिग्विदिक्षु च जलाश्रयाः ॥
कनिष्ठे च पुरे पादात् मध्यमे च पदार्धतः ।
षोडशांशात् पुरे ज्येष्ठे ह्यरितिक्ते च बाह्यतः ॥
प्रतोली राजगेहाग्रे राजमार्गस्तदग्रतः ।
विस्तीर्णा विंशतिकरैर्द्विरद्वष्टादशाधमा ॥
हट्टश्रेणिस्ततः कार्या षोडशांशेन मार्गतः ।
बलिकर्मसमस्तानां हट्टोपरि गृहोत्तमम् ॥
विदिशासु पुरं कार्यं जगत्यास्त्रिगुणं शुभम् ।
युग्मगृहाश्च कर्त्तव्याः पक्षयोश्चैव सन्मुखाः ॥
प्रासादस्य प्रमाणेन पादोनेनाथवोच्यते ।
प्रासादार्धेतु कर्त्तव्या ज्येष्ठमध्यकनिष्ठिकाः ॥
एकभौमा द्विभौमा वा शाला निर्गमभूषिता ।
मत्तवारणसंयुक्ता निर्गताश्चित्रशालकाः ॥
जगत्यग्रे वामनं स्याद् भिट्टं तद्भुवि संस्थितम् ।
महोत्सवे च वासन्ते कुर्याद्धिन्दोलकं त्विह ॥
देवस्य परतः कार्या निगूढा नृत्यशालिकाः ।
पूर्वस्यामथवाग्नेय्यां वायव्ये वारुणे शुभम् ॥
शेषासु ह्यप्रशस्ताश्च आग्नेय्यां सत्रमण्डपम् ।
वास्तुवेदीसंस्थितं तन्मठः स्थाप्यस्तु दक्षिणे ॥
गृहं पञ्चारिकायुक्तं मैत्रस्थानसमाश्रितम् ।
यतिध्यानालयं कुर्यात् प्रलीना यत्र शासने ॥
पुरसीमान्तप्राकारे प्रतोलीहट्टमार्गयोः ।
जलाश्रयं जगत्यन्ते घटिमालासमुद्भवम् ॥
तीर्थान्ते तटिनीतटे जलनिधेस्तीरे सरित्सङ्गमे,
शैलाग्रेऽद्रितटे वनोपवनयोरुद्यानदेशे तथा ।
सिद्धाद्यायतनेषु वा गुरुवरो ग्रामे पुरे पत्तने,
वान्यत्रापि मनोरमे सुरसमिज्यायै क्षितिं कल्पयेत् ॥
प्राचि प्रतीचि च हरौ निजदिश्युमेशे
वायौ निसुम्भजिति तारकजित्युदीच्याम् ।
ग्रामादिकेषु निऋ‍र्तौ गणपार्ययोश्च ।
गृह्णातु भूमिमखिलेष्वपि मध्यतो वा ॥
परिघं तु त्रिदण्डादि यावद् द्वात्रिंशतिदण्डकम् ।
तदेव चाष्टदिशि च कर्तव्यं शिवमन्दिरम् ॥
परिघाभ्यन्तरे वापि पैशाचिकपदे गुरुः ।
मानुषे तु पदे वाथ कर्तव्यं शिवमन्दिरम् ॥

शिल्प०
६. १-१६

पैशाचिकपदे कुर्यादालयं तु पराङ्मुखम् ॥
मध्येऽजः स्वपदे धनेशतरणी प्रागीशमध्येषु मा।
शर्वाणीरमयोर्महेन्द्रदिशि गोशालेन्दुरक्षोग्निषु।
काली दण्डधराशरेन्दुषु जनन्यो + विधौ भारती
स्याद्वा क्षेत्रप ईश्वरेन्द्रशशिषु ज्येष्ठानिलाब्धीशयोः ॥
सूर्ये सूर्यो भृशे विष्णुस्तथाब्धीशे + + + + + ॥
+ + + + + + + + + सुग्रीवेशास्तुरालयम्।
भृङ्गे जनन्यो ज्येष्ठायां वायौ चण्डास्तु मुख्यके ॥
कुबेरे च महाकाल्यौ मातॄणां च निशाकरे।
अदितौ वास्तु चामुण्ड्याः शस्तमैशे शिवालयम् ॥
निर्ऋतौ वा जयन्ते वा गोशाला च वनेऽथवा।
देवतानां तु विन्यासमपरे जगुरन्यथा ॥
तद्ग्रामपुरराष्ट्राणां स्यान्मध्ये ब्रह्मणो गृहम्।
प्राच्यां वा पश्चिमे विष्णोर्ग्रामादीनां च सम्मुखम् ॥
पराङ्मुखं स्यादैशान्यां मानुषे शिवमन्दिरम्।
स्वयंभूर्दैवतं चार्षं यत्र तत्रैव शोभनम् ॥
प्राच्यामैशेऽथवा मध्ये गौर्याः सूर्यस्य च श्रियः।
मातॄणां दक्षिणे धाम शास्तुः काल्याश्च नैर्ऋते ॥
षण्मुखस्य च वारुण्यां ज्येष्ठायास्तदनन्तरम्।
वायौ सौम्ये च दुर्गाया लोकेशानां स्वगोचरे ॥
इन्द्रेशसौम्यमध्ये वा क्षेत्रपालनिवेशनम्।
गोशाला दक्षिणे प्राच्यामनुक्तानां तथैव च ॥
मन्दिरं कारयेत् तत्र युक्त्या (सर्वं) महामतिः।
उग्राः पराङ्मुखाः शस्ता नृणां सौम्यास्तु संमुखाः ॥
ईशादिम्रितेशपर्यन्तदिक्स्थाः ।
प्रासादा ग्रामादिकेषु ध्वजोत्थाः ॥
गोयोन्युत्थाः शेषदिक्संस्थितास्युः ।
स्तत्स्थाप्यार्चा चेच्यते तत्तयोनिः ॥

## (ब) आरामोद्यानानि

टि० --पुरनिवेशमधिकृत्य आरामोद्यानानां यः विलासः समुज्जृम्भतेऽसौ देशस्या प्राचीनां पादपारोपणपरिपाटीं पुष्णाति। सूत्रग्रन्थेषु पुराणेषु आगमेषु धर्म-शास्त्रेषु च पादपारोपणस्य पूर्तधर्मे महन्महत्वम्। तथाहि "दशपुत्रसमस्तरुः"।

स० सू० एवं संशोध्य परिखात्रितयं परितोऽश्मभिः।
१०, २२-२४ विधेयमिष्टकाभिर्वा सम्यग्बद्धतलं स्थिरम् ॥

सिरावारिभिरापूर्णं पूर्णं वागामिनाम्भसा ।
विचित्राब्जमनोहारि ससंग्राहाम्बुनिर्गमम् ॥
सर्वपार्श्वेष्वथैतस्य गन्धान्धमधुपाङ्गनान् ।
सुमनोविटपारामान् कुर्याद् वासान् समुत्सुकान् ॥
बाह्यभागं पुनस्तस्य विदध्यात् सर्वतोदिशम् ।
द्रुममूलैर्लताजालैः कण्टकैरपि संवृतम् ॥

१०. ४१-४२ दृष्ट्वा दृष्ट्वोपभोगार्हान् सरिद्गिरिजलाशयान् ।
पक्षद्वाराणि कुर्वीत स्वेच्छया तत्र तत्र च ॥
जलभ्रमान् पुरे कुर्याच्छिलादारुतिरोहितान् ।
द्विकरान् करमात्रान् वा साम्भसोऽस्मिन् प्रदक्षिणान् ॥

स० सू० ग्रामादिष्वथ पर्जन्ये जलमार्गस्तथैन्द्रगः ॥
४. ६९-७० ईशार्गलान्तराले वा प्रागुदीचिप्लवो यथा ।

## पुराणां प्रकारादिविन्यासः

स० सू० घण्टामार्गप्रमाणेन घण्टामार्गस्य बाह्यतः ।
१०. १६-४१ समन्ततो वप्रभुवं स्थापयेत् तद्विधानवित् ॥
महारथ्याप्रमाणेन तद्भूमेर्बाह्यतस्ततः ।
व्यासखातान्तरैः सार्धं विधेयं परिखात्रयम् ॥
खातोदूपादोज्झितं कार्यं स त्र्यंशेनार्धतोऽपि वा ।
व्यासतः स्यादशेषेण मूलतस्तद्वदेव तत् ॥
कुर्याद् वप्रं स्वभूभागे परिखोत्खातया मृदा ।
सोत्सङ्गं गजपृष्ठं वा गोत्रीयपदताडितम् ॥
खातोद्वृत्तमृदा वप्रनिर्माणाधिकया ततः ।
भूप्रदेशान् पुरा निम्नानापूर्य समतां नयेत् ॥
एवं संशोध्य परिखात्रितयं परितोऽश्मभिः ।
विधेयमिष्टकाभिर्वा सम्यग्बद्धतलं स्थिरम् ॥
सिरावारिभिरापूर्णं पूर्णं वागामिनाम्भसा ।
विचित्राब्जमनोहारि ससंग्राहाम्बुनिर्गमम् ॥
सर्वपार्श्वेष्वथैतस्य गन्धान्धमधुपाङ्गनान् ।
द्रुममूलैर्लताजालैः कण्टकैरपि संवृतम् ॥
वप्रोर्ध्वभागगं मध्यं स्थूलोपलशिलाचितम् ।
कुर्यात् प्राकारमुद्दामं यद्वा पक्वेष्टकामयम् ॥
ज्यायान् करैर्द्वादशभिर्दशभिर्मध्यमः स्थितः ।
कनीयानष्टभिर्हस्तैर्विस्तारः स्यात् त्रिधेत्यसौ ॥
उच्छ्रायः सप्तदशभिः करैर्ज्यायान् प्रशस्यते ।

मध्यमः पञ्चदशभिस्त्रयोदशभिरन्तिमः ॥
ऊर्ध्वं न सप्तदशकान्न त्रयोदशकादधः ।
प्राकारोच्छ्रयमिच्छन्ति नापि युग्मकरोन्मितम् ॥
हस्तेहस्तेऽङ्गुलद्वन्द्वमायतः सम्यगुच्छ्रयात् ।
यस्य वा द्वादशकरा मूले भवति विस्तृतिः ॥
चतु (रस्रो?र्हस्तो) च्छ्रितिस्तस्य शिरः स्याद् दशविस्तृतम् ।
हस्तोच्चं कपिशीर्षं स्याद् द्विहस्ता काण्डवारिणी ॥
कार्याः कर्णाश्रितैर्द्वारकर्णान्तस्थैश्च संयुताः ।
प्राकारेऽट्टालकास्तस्मिन् दिक्षुदिक्षु चतुर्दिशम् ॥
द्विभौमांश्चरिकोर्ध्वं च प्राकारोच्छ्रायविस्तृतीन् ।
तदर्धं निर्गमान् कुर्यात् ससालाट्टालकानथ ॥
शतं शतं स्याद्धस्तानां मिथश्चाट्टालकान्तरम् ।
इत्थं पुरमगम्यं स्यात् पत्त्यश्वरथदन्तिनाम् ॥
चरिकां संचरद्वारां सुखारोहां सवेदिकाम् ।
ससोपानां सनिर्यूहां कुर्यात् सकपिशीर्षकाम् ॥
राजमार्गमहारथ्यासंश्रितानि चतुर्दिशम् ।
त्रीणि त्रीणि विधेयानि पुरे द्वाराणि तद्विदा ॥
राजमार्गमहाद्वारचतुष्कं विस्तरान्नव ।
अष्टौ सप्त करानोच्चा द्विगुणं त्रिकरोज्झितम् (?) ॥
महारथ्याश्रयं द्वारं तत् षट्पञ्चचतुष्करम् ।
उच्छ्रयात् सार्धसार्धैकहस्तोनं विस्तरेण तत् ॥
कुर्यात् प्रतोलीः सर्वेषु महाद्वारेष्वथो दृढाः ।
दृढार्गलाश्चेन्द्रकीलाः कपाटपरिघान्विताः ॥
राजमार्गसमा शाला स्यात् प्रतोलीविनिर्गमा ।
तदर्धं कोष्ठकान्तः स्याद् व्यासोऽध्यर्धं तयोः स्मृतः ॥
चतुरश्रमिति न्यस्य प्रतोली वदनायताम् ।
व्यासतस्त्र्यंशविन्यस्तमार्गां मूषाद्वयान्विताम् ॥
अन्तर्भित्तौ चतुर्द्वारं महाद्वारेण सम्मितम् ।
विकल्पकोष्ठकान्तेषु दारुभिस्तद् विभूषयेत् ॥
द्वारे चोभयतः शाले द्वे द्वे द्वारे च मूषयोः ।
ते कार्ये सम्मुखे व्यासाद् द्विकरे द्विगुणोच्छ्रिते ॥
(प?त) दारुमूषयोः पट्टमध्यं पञ्चकरोच्छ्रितम् ।
तद्वत् कार्या द्वितीया भूर्द्वारशेषोदयोच्छ्रिता ॥
बहिर्द्वारविनिर्मुक्तां पूर्ववत् तां प्रकल्पयेत् ।
पुरःसंरोधनसहैर्गवाक्षैरग्रतो युताम् ॥

दलं ततो महाद्वारस्योर्ध्वं बद्ध्वा तृतीयकम् ।
शेषमट्टालसुहर्म्यसंयुक्तं सपरिक्रमम् ॥
सन्त्यक्तस्तत्समवेधम्यधूर्ध्वं तत्सांप्रकल्पयेत् ।
व्यालजालशतस्पन्दच्छराम्बयन्त्रादिभिर्वृतम् ॥
वृद्धिशोभाभिपुष्ट्यर्थं पुरस्य प्रविकल्पयेत् ।
बृहद्द्वाराणि परिच्छिन्नताभिः प्रतोलिभिः ॥
प्रतोल्या दक्षिणाद् भागादुच्छ्रितो वामतो गतः ।
यावद् द्वितीयं तस्यान्तर्नैकः कार्यो बहिः स्थितः ॥
द्वितीयो वामभागात् तु निर्गत्यास्यैव वेष्टकः ।
कार्यः स्यात्तदनुत्थानात् प्राकारस्तस्य बाह्यतः ॥
पुरयोरन्तरालं च राजमार्गेण सम्मितम् ।
कर्तव्यं स्यादिहैवं तु वप्रद्वारकमुत्तमम् ॥
दृष्ट्वा दृष्ट्वोपभोगार्हान् सरिद्गिरिजलाशयान् ।
पक्षद्वाराणि कुर्वीत स्वेच्छया तत्र तत्र च ॥

नगर-निवेशे वर्ज्याः निवेशाः

गर्हितपुराणि ।

स० सू०
१०. ५३-६८

छिन्नकर्णं विकर्णं च वक्रं सूचीमुखं तथा ।
वर्तुलं व्यजनाकारं चापाकृतिधरं च यत् ॥
शकटद्विसमं यच्च विस्ताराद् द्विगुणायतम् ।
विदिङ्मुखं सपंचकं च तत् पुरं निन्दितं भवेत् ॥
छिन्नकर्णे वसंल्लोकः पुरे तस्करतो भयम् ।
व्याधिभ्यो वापरेभ्यो वा प्राप्नोतीति विनिर्दिशेत् ॥
विद्विष्टस्वामिता सर्वलोकगर्हानपत्यता ।
जायते स्वल्पमायुष्यं विकर्णपुरवासिनाम् ॥
स्त्रीजयं विषरोगांश्च भेदांश्च विविधांस्तथा ।
जनो वसन्नवाप्नोति वक्राकृतिधरे पुरे ॥
व्रजन्ति प्राणिनो नाशं क्षुद्व्याधिपरिपीडिताः ।
निवसन्तः सदा सूचीमुखाकारवरे पुरे ॥
स्वामिना सह हीयन्ते सर्वतः सञ्चयोज्झिताः ।
स्वल्पायुषश्च जायन्ते जना वृत्तपुराश्रयाः ॥
असत्यवादिनः स्वल्पायुषः पवनपीडिताः ।
जनाः स्युश्चलचित्ताश्च नगरे व्यजनाकृते ॥
दुश्चरित्राङ्गनायुक्तस्तथा बहुनपुंसकः ।
चापाकारे पुरे लोको निवसन् भवति ध्रुवम् ॥

रोगशोकानलस्तेनभयं तत्र प्रजायते ।
शकटद्विसमाकारं पुरं यद् विनिवेश्यते ॥
आरम्भासिद्धिदं विप्रभयदं ज्ञातिभेदकृत् ।
पौराणां स्वामिनश्च स्याद् गजवाजिक्षयावहम् ॥
परैराक्रम्य भुज्येत तत् पुरं बलशालिभिः ।
द्विगुणायतसंस्थानं यत् क्वचिद् विनिवेश्यते ॥
जनक्षयोऽग्निदाहश्च स्त्रीकृतानि भयानि च ।
पुरे भवति दिङ्मूढे न च निर्योगमेति तत् ॥
शास्त्रानिलपिशाचाग्निभूतयक्षभयार्दिताः ।
रुक्पीडिताश्च नश्यन्ति भुजङ्गकुटिले जनाः ॥
पुराणामप्रशस्तानि संस्थानानीदृशानि यत् ।
एकस्मिन्नपि तेनैषां न पुरं विनिवेशयेत् ॥
संस्थानमेकमप्येषां प्रमादात् क्रियते यदि ।
तदा राष्ट्रं निपीड्येत क्षुद्व्द्विषद्भीतिमृत्युभिः ।

अ० पृ० ७३. १८–२५

अग्निदं वायवं चैव शकटं युग्मशाकटम् ।
वज्रं त्रिशूलमाख्यातं कर्णिकं चैव सप्तमम् ॥
एताः सप्तपुरश्चैव महादोषभयावहाः ।
तासां रूपं तथाकारं कथये तव साम्प्रतम् ॥
अग्निदं च त्रिकोणाख्यं षट्कोणं चैव वायवम् ।
शकटं शकटाकारं युग्मं द्विशकटाकृति ॥
वज्रकं वज्रसङ्काशं त्रिशूलं त्रिशूलाकृति ।
कर्णिकारविकर्णं तु चाकाराः कथितास्तव ॥
अग्निदेऽग्निभयं घोरं वायवं बहुक्लेशदं ।
शकटं तु पुरं चैव प्रजाक्लेशावहं स्मृतम् ॥
पुरे द्विशकटाकारे तस्करादिभयं भवेत् ।
वज्राकृति पुरं यत्र वज्रपातस्तदोद्भवेत् ॥
त्रिशूले च पुरे चैव सदा युद्धं समुद्भवेत् ।
कर्णिकारे च दुर्भिक्षं प्रजा तत्र न नन्दति ॥
इत्यादिसप्तदोषांश्च वर्जयेत् पुरदोषदान् ।
विंशतिः सुखदाः ख्याता दोषदाः सप्त एव च ॥

टि०—प्राचीनपुर - निवेशे राजहर्म्यादीनां सभान्यायालयवाजिशालागजशाल शालादीनां निवेशस्तु सर्वप्रधान आसीत् परमेतेषां समेषां निवेशनमत्रलक्षणे न दीयते लक्षणे तेषां प्रसङ्गत्वादिति ।

# चतुर्थः पटलः

## दुर्गलक्षणं-दुर्गनिवेशश्च ।

वि० वा० दुर्गाणां स्थापनं प्रायो भूपानामात्मरक्षकम् ।
दुर्गस्थापनम् तस्माच्छिल्पिगणैः कार्यं न तत्र नगरादिकम् ॥
१०.१–२ क्वचिद्यदि कृते तस्य निर्माणं रचयेत्क्रमात् ।
गिरिकाननभेदेन तद्द्वादशकमीरितम् ॥

१. गिरिदुर्गम् गिरिसानौ गिरेर्मध्ये मूर्ध्नि वा यत्प्रकल्प्यते ।
१०.३–५ गिरिदुर्गमिति प्रोक्तं मुनिभिश्शास्त्रपारगैः ॥
मध्यस्थदेवप्रासाददेवमन्दिरभूषितम् ।
मन्त्र्यादिपरिवाराणां भवनाद्यैस्समन्वितम् ॥
प्राचीमुखं प्रकर्तव्यमथवोत्तरदिङ्मुखम् ।
भटैः खड्गधरैरन्यैस्समन्तात्संवृताङ्गणम् ॥

२. वनदुर्गम् वनमध्यगतं दुर्गं वनदुर्गमुदीरितम् ।
१०.६–११ ऊर्ध्वस्थं भूमिभागस्थमन्तस्थं चेति तत्त्रिधा ॥
ऊर्ध्वस्थं तुङ्गभूमिस्थं भूमिस्थं भूतलाश्रितम् ।
सुरङ्गाश्रितमन्तस्थं बोध्यं शिल्पपरायणैः ॥
शिलापरम्परातुङ्गभागस्थे दृढभित्तिके ।
रक्षाकैर्यामिकैरन्यैः परीते च समन्ततः ॥
दुर्गे प्रागानने स्थाप्यं भूमिपालस्य मन्दिरम् ।
मन्त्र्यादिपरिवाराणां भवनानि प्रकल्पयेत् ॥
सुरङ्गादुर्गके स्थाप्यं योधायुधधनादिकम् ।
तलाश्रितं तु यद्दुर्गं तुङ्गप्राकारसंयुतम् ॥
नलीकस्थानभाक्कोणेष्वन्तर्द्वाराश्रितं तथा ।
प्रस्तरोक्तप्रमाणेन कारयेदन्यकल्पनम् ॥

३. जलदुर्गम् पारावारेण नद्या वा संवृतं स्थलमुत्तमम् ।
१०.१२–१५ कथितं शिल्पशास्त्रज्ञैर्नाम्ना सलिलदुर्गकम् ॥
भूपालस्येच्छया कर्मन्तद्दुर्गप्रकल्पनम् ।
दुर्गभित्तेरुभयतस्तूपकुड्यासमन्वितम् ॥
मध्यस्थराजभवनममात्यादिस्थलोज्ज्वलम् ।
स्थलानुकूलतः स्थाप्यमन्यवासादिकं पुनः ॥
सेनावासं ससम्भारं स्थापयेच्च समन्ततः ।
ससालं सहितं वीरैर्यामिकैस्तटरक्षकैः ॥

४. इरिणदुर्गम् सलिलैस्तरुषण्डैश्च लताद्यैश्च विवर्जिते ।
१०.१६–२० दुष्प्रवेश्ये स्थले तुङ्गे सोपानालिसमन्विते ॥
निम्ने वाऽथ स्थले क्लृप्तमिरिणं दुर्गमिष्यते ।

पर्वतावृतं तन् मध्ये (च) पर्वतस्य समीपके ॥
पर्वताग्रप्रदेशे तु गिरिदुर्गमिति त्रिधा ।
तलपर्जन्यान्तरो (र) युक्तं गगनं च प्रवेशनम् ॥
एतत्तु वनदुर्गं स्याज्जलदुर्गमिहोच्यते ।
समुद्रैश्च नदीभिश्च संवृतं जलदुर्गकम् ॥
पर्वतं (त) कन्दरैर्युक्तं दुष्प्रवेशं च शत्रुभिः ।
दुर्गं तु कृत्वा नृपतिस्तिष्ठेत्तत्पङ्कदुर्गकम् ॥
वनाभावे जलाभावे सर्वशून्यादिदूषकम् ।
चोरैश्च सङ्कुलस्थानं निर्ग्रामं रथदुर्गकम् ॥
ब्रह्मराक्षसवेतालं (ल) भूतप्रेतादिभैरवैः (वाः) ।
शिलावर्षं प्रवर्षन्तीरा (न्त्या) लोकय वेशनिर्गमे ॥
मन्त्रतन्त्रादिसामर्थ्यैः कृतान्तं देवदुर्गकम् ।
अनेकपर्वतोपेतं नानावनसमिश्रकम् ॥
तत्रास्थितं तु तद्दुर्गं मिश्रदुर्गमिति स्मृतम् ।
सर्वेषामपि दुर्गाणां वप्रैश्च परिवै (खाभि) वृतम् ॥
प्रवेशनिर्गमस्थाने द्वारैरपि समन्वितम् ।
इष्टकादिकृतं वप्रं हस्तद्वादशकोच्छ्रितम् ॥
तदर्धभित्तिमूले तु संचारैः सह विस्तृतम् ।
नगराणां तु सर्वेषां वक्ष्ये विन्यासलक्षणम् ॥
प्राक् प्रत्यग्गतमायामं दक्षिणोत्तरसमन्वि (संयु) तम् ।

मय० १०. २६–४१

गिरिवनजलपङ्करिणदेवतमिश्राणि सप्त दुर्गाणि ॥
गिरिमध्यं गिरिपार्श्वं गिरिशिखरं पार्वतं दुर्गम् ।
अजलं तरुवनगहनं वनदुर्गं तदुभयं तु मिश्रं स्यात् ॥
दैवं तु सहजदुर्गं पङ्कयुतं पङ्कदुर्गं स्यात् ।
नद्यब्धिपरिवृतं यज्जलदुर्गं निम्नोन्नमिरिणं स्यात् ॥
अक्षयजलान्नशस्त्रं ह्यतिविपुलोत्तुङ्गघनसालम् ।
सर्वं हि दुर्गजालं सप्राकारं त्वनेकमुखरक्षम् ॥
बहिरुदकं रहितवनं छन्नपथं दुष्प्रवेशं च ।
गोपुरमण्डपयुक्तं सोपानच्छन्नमच्छन्नम् ॥
द्विकवाटचतुष्परिघार्गलहस्तोन्नतेन्द्रकीलयुतम् ।
सस्थूणमध्यमालयमिण्ठकसहितं सगूढसोपानम् ॥
द्वाराणि मण्डपसभाशालाकाराणि कार्याणि ।
द्वादश सालाकाराश्चतुरं वृत्तं तदायतं च पुनः ॥
चक्रं वृत्तं कौक्कुटमिह कुम्भं नागवृत्तं च ।
भग्नचतुरं त्रिकोणमष्टाश्रं नेमिखण्डं च ॥

प्राकाराश्चेष्टकया द्वादशहस्तोच्छ्रिताहीनाः ।
उत्सेधार्धविशाला मूले भित्तिः ससञ्चारा ॥
सर्वस्याभ्यन्तरतः पांसुचयोपर्यनेकयन्त्रयुतम् ।
परितः परिखोपेतं पांसुचये संहताट्टालम् ॥
परितः शिविरोपेतं नानाजनवाससङ्कीर्णम् ।
नृपभवनसमोपेतं हस्त्यश्वरथपदातिबहुमुख्यम् ॥
धान्यैस्तैलैः क्षारैः सलवणभैषज्यगन्धविषम् ।
लोहाङ्गारस्नायुत्रिषाणवेणिवन्धनैर्युक्तम् ।
तृणचर्मकारयुक्तं सवल्कलं सारदारुयुतम् ।
दुर्गं दुर्गमयुक्तं दुर्लङ्घ्यंदुरवगाहं च ॥
रक्षार्थं च जयार्थं ह्यरिभिरभेद्यं च दुर्गमिष्ट स्यात् ।
इन्द्रश्च वासुदेवो गुहो जयन्तश्च वैश्रवणः ॥
अश्विन्यौ श्रीमदिरे शिवश्च दुर्गा सरस्वती चेति ।
प्राकारान्तर्दिव्या दुर्गनिवेशे च विज्ञेयाः ॥
एवं दुर्गविधानं सम्यक् प्रोक्तं पुरातनैर्मुनिभिः ।
सर्वेषां विन्यासं संक्षेपाद् वक्ष्यते क्रमशः ॥
शिल्प० पर्वते वा वने वाब्धौ दुर्गं स्याद्वा जलावृतम् ।
दुर्गं तु पार्वतं वन्यमौ(द)कं चैरणं तथा ।
५. ८-२४ दैवकं धावनं चैव कृतकं चेति सप्तधा ।
नृपभवनसमोपेतं हस्त्यश्वरथपदातिबहुलमुख्यम् ।
धान्यस्नेहक्षारलवणभैषज्यगन्धविषयुक्तम् ॥
लोहाङ्गारस्नायुविषाणवेणिवन्धनादिसर्वयुतम् ।
तृणचर्मशाकयुक्तं वल्लूरकसारदारुसंयुक्तम् ॥
दुर्गं दुर्गमयुक्तं दुर्लङ्घ्य दुरवगाहमतिमात्रम् ।
रक्षार्थं च जयार्थं त्वरिभिरभेद्यं च दुर्गमिष्टं स्यात् ॥
गिरिमध्यं गिरिपार्श्वं गिरिशिखरं पार्वतं दुर्गम् ।
निर्जल (तल?) तरुवनगहनं वनदुर्गं तदुभयमिश्रं स्यात् ॥
तदेव सह(ज)जलं चेज्जलदुर्गं पङ्कयुक्तं वा ।
नद्यब्ध्यावृतकं यज्जलदुर्गं निगदितं पूर्वैः ॥
अक्षयजलत(रु)विपुलैरणगहनसालमैरणं प्रोक्तम् ।
इन्द्रश्च वासुदेवो गुहो जयन्तश्च वैश्रवणः ॥
अश्विन्यौ श्रीमन्दिरशिवौ च दुर्गा सरस्वती चेति ।
प्राकारस्थास्त्वेते यस्मिंस्तद् दिव्यदुर्गं स्यात् ॥
धावनकृतकौ दुर्गौ विज्ञेयौ स्वस्वनामसदृशतरौ ।
एकोनविंशतिविधं दुर्गं प्रायेण कथितं स्यात् ॥

अक्षयजलान्नभक्षमतिविपुलोर्थगहनसालम् (?)।
सर्वं हि दुर्गजातं सप्राकारं च सुखरक्षम्॥
बहिरुदकरहितवनच्छन्नपथं दुष्प्रवेशं च।
गोपुरमण्डपयुक्तं सोपानं छन्नमच्छन्नम्॥
द्विकवाटचतुष्कुटिकाद्व्यर्गलकं करमानद्विकीलम्।
सस्थूणमध्यमालं त्विष्टकसहितं च सुदृढसोपानम्॥
द्वाराणि मण्डपसभाशालागाराणि कार्याणि।
पांसुचययुक्तमार्गं विधिवत् कार्यं हि सर्वत्र।
परितः शिविरोपेतं नानाजनवाससङ्कीर्णम्॥
द्वादशसालायुक्तं चतुरं वृत्तं तदायतं वापि।
नन्द्यावर्तं कौक्कुटमिभकुम्भनागवृत्तं च॥
नेमिच्छिन्नं च त्रिकोणं षट्कोणाष्टाश्रनेमिखण्डं च।
प्राकारं चेष्टकया द्वादशहस्तोच्छ्रयाद्धीनम्॥
उत्सेधार्धविशालं कार्यं स्यात् सर्वदुर्गेषु।

## ग्राम-नगर-शोभायाम्

टि०—ग्राम-नगर-शोभायां प्राचीन-शिल्पग्रन्थेषु बहु निर्दिष्टमस्ति। तथाहि कुत्रचिन् द्वाराणां विलासः, कुत्रचिद्गोपुराणां प्रसारः, कुत्रचित्प्राकाराणां शोभा, कुत्रचिद्वापीतटाकका दीनामभिख्या तु सुतरां तत्र तत्र दर्शनीया आसन्नेव परं ततोऽपि दर्शनीयतरआसीत् केन्द्र-विन्य वैभवः तथाहि चतुष्पथेषु सभाशाला-मण्डप-देवागाराणां सुनिवेशं मुहुर्मुहुर्कीर्त्यमानाः प्राचीनान न कदापि विरमन्तिस्म। ग्राम-शोभायाञ्च वाटिकारोपणन्तु बहुशःकीर्त्यमानं दृश्यते तथाहि बृहद्व मालायाम्—

वाटिका वा तडागो वा कूपो वा यदि निर्मितः।
गृहात्पूर्वे कुवेर्यां च वारुणे शम्भुकोणके॥
सदा सवित्री भविता सदा दानं प्रयच्छति।
सदा यज्ञं स पूज्येत यो रोपयति पादपम्॥
आम्राणां वाटिका चैव द्वितीयाश्वत्थवाटिका।
तृतीया वटवृक्षाणां चतुर्थी प्लक्षवाटिका॥
पञ्चमी निम्ब वृक्षाणां षष्ठी जम्बुकवाटिका।
चिञ्चिणीवृक्षसम्भूता सप्तमी परिकीर्तिता॥
एतासां वाटिकानाञ्च प्रशस्ता चाम्रवाटिका।
फलदा पुण्यदा चैव पापं संहरते ध्रुवम्॥
न तत्करोत्यग्निहोत्रं न पुत्रा योषितोद्भवाः।
यत्करोति वनच्छायः पादपः पथि रोपितः॥

---

# तृतीयः खण्डः

## ( भवन-वास्तु )

### प्रथमः पटलः

टि०—भवनं द्विविधं मानववास्तु देववास्तु च । तत्र देववास्तु त्वग्रिमे प्रासाद-पटले वक्ष्यमाणमित्यत्र मानव-वास्तु-भवनलक्षणे प्रथमस्यैव नाना वर्गाः समापतन्ति । तेषां साधारण-भवनानि (समराङ्गणदिशा शाल-भवनानीत्यर्थः ) राज-भवनानि च द्वौ वर्गौ सविशेषमुपश्लोकनीयौ । अन्य-वर्गेषु सभा-शाला-वाजिशाला-गजशाला-न्यायशालादीनां समावेशः । भवन-लक्षणे वापी-कूप-तट कादीनामपिविशिष्ट-भवनेष्वन्तर्भावो भविष्यतीति तेषमपि लक्षणं दास्यते ।

**प्राथमिकेषु भूखननं हलकर्षणं माङ्गलिकञ्च**

वि० वा० ६. १–२६

परीक्षकैश्शास्त्रविद्भिर्नानोपायैः परीक्षिताम् ।
उत्तमां मध्यमां वापि भूमिं प्राप्य बुधोत्तमः ॥
श्वेतमाल्याम्बरधरैः श्वेतगन्धानुलेपनैः ।
भृत्यैराप्तैश्शुद्धवाग्भिस्सल्लक्षणसमन्वितैः ॥
शुभे मुहूर्ते सल्लग्ने खनित्रादीनथार्चयेत् ।
नवा भूरथवा पूर्वं प्रजाध्युषितभूर्यदि ॥
नरेन्द्रैर्ग्रामनिर्माणकार्यार्थं स्वीकृता भवेत् ।
वास्तुनाथार्चनं शस्तं श्रोत्रियैर्वेदपारगैः ॥
पुण्याहं वाचयेत्पूर्वं विप्रैरागमवेदिभिः ।
प्रोक्षयेत्तज्जलैर्दिव्यैश्शान्तिहोमं च कारयेत् ॥
वास्तुस्वरूपं विज्ञाय हेमगन्धाक्षतादिभिः ।
वास्तुनाथार्चनं कुर्यात्कारयेद्वा द्विजोत्तमैः ॥
भूदेवीमर्चयेत्पश्चाद्गन्धपुष्पाक्षतादिभिः ।
तदनुज्ञां समासाद्य शुभकाले प्रसन्नधीः ॥
भूसमीकरणं कार्यं महोक्षैश्श्वेतवर्णकैः ।
बलिकर्मविधानञ्च राष्ट्रक्षेमकरं भवेत् ॥
ब्राह्मणान्भोजयेत्पश्चात्तोषयेद्दक्षिणादिभिः ॥
समीकृते स्थले पूर्वमैशान्यां खननं शुभम् ।
वारुण्यामथवा कार्यं शुभकाले विशेषतः ॥
इष्टिकान्यसनात्पूर्वं पूरयेद्गर्भमादरात् ।
स च विप्रादिभेदेन चतुर्धा सन्निगद्यते ॥

ब्राह्मं गर्भं पूरयेत्तु पुस्तकैर्यज्ञसूत्रकैः ।
क्षात्रं गर्भं पूरयेच्च खड्गच्छत्रादिभिर्दृढम् ॥
वैश्यं गर्भं पूरयेच्च तुलाद्रव्यादिकैरपि ।
शूद्रं गर्भं पूरयेच्च सीरकैर्वस्त्रकैरपि ॥
देवालये दैवगर्भे रत्नन्यासो विशेषतः ।
दैववास्तुषु सर्वेषु सौवर्णं भाजनं शुभम् ॥
सौवर्णं राजतं वापि ब्रह्मक्षत्रियवास्तुषु ।
शूद्रजानां विशां शस्तं राजतं भाजनं मतम् ॥
अन्येषां वास्तुभूमौ तु ताम्रजे भाजनं शुभम् ।
भाजनं पट्टिका वापि पृथुपट्टमथापि वा ॥
स्त्रीगर्भेण यथा जीवो वर्धते भुवि नित्यशः ।
तथा भूगर्भमाहात्म्यात् जीवराशिस्तु वर्धते ॥
तत्रत्यानां सुखं दिव्यं यावद्गर्भो न नश्यति ।
तस्माद्गर्भं शिल्पिवरैश्शाश्वतं कारयेद्भुवि ॥
तच्च चिह्नं लिखेत्पट्टे गन्धपुष्पार्चनं तथा ।
तत्पट्टं भाजने न्यस्य तन्मञ्जूषागतं नयेत् ॥
वास्तुभूमध्यदेशे तां मञ्जूषां स्थापयेद्बुधः ।
गन्धमाल्यार्चनं शस्तं जयशब्दपुरस्सरम् ॥
आच्छाद्य तां मुदा शिल्पी वास्तुनाथं हृदि स्मरेत् ।
ब्राह्मणांस्तोषयेत्पश्चाद्भोजनाद्यैर्विशेषतः ॥
सर्ववास्तुष्विदं शस्तमीरितं शास्त्रपारगैः ।
समीकृतस्थले पूर्वमैशान्यां खनने कृते ।
वारुण्यामथवा शस्ते लग्नकाले विशेषतः ॥
इष्टिकान्यसनं कार्यं स्वस्तिघोषपुरस्सरम् ।
पुरन्ध्रीभिश्च कन्याभिरवटे जलसेचनम् ॥
कारयेत्कार्यकालज्ञश्शिल्पी सर्वेषु वस्तुषु ।
दीपारोपं हेमवर्षं नानादानानि कारयेत् ॥
सर्वमङ्गलघोषैश्च स्वस्तिशब्दैश्च शिल्पिराट् ।
वास्तुं प्रदक्षिणीकृत्य वरवस्त्रोत्तरीयकः ॥
मङ्गलाचरणं कृत्वा प्राक्स्वर्गादिदक्षिणः ।
कङ्कणं च करे धृत्वा ज्ञापयेत्कशतक्षकौ ॥
सम्यक्कप्तं वक्रहीनं ककशं कुङ्कुमान्वितम् ।
सूत्रप्रसारे कलिते वास्तुनिर्माणभूमिषु ॥
ऐशान्यां विन्यसेत्प्राज्ञः ककशं तं प्रसन्नधीः ।
स्मृत्वा मनसि कार्यज्ञो देवता मङ्गलप्रदाः ॥

अधोभित्यादिकं कृत्वा दृढीकुर्याच्च तद्बुधः ।
रक्षयेच्च यथा तत्र दूषणं न प्रसज्यते ॥
दृढीकृतेऽथ भित्यादिकर्म कुर्याद्यथाविधि ।
इत्येवं तक्षकमुखैः कार्यज्ञैर्ज्ञेयमीरितम् ॥

मान० ९. १८॥—४३

कामधेनुसमां क्षोणीं स्वीकुर्यात्तु विभूतये ।
कर्षणार्थं बलीवर्दलक्षणं वक्ष्यतेऽधुना ॥
श्वेतकं कपिलं चैव रक्तपीतं तथैव च ।
बलीवर्दस्य चै(र्दानामे)तेषामेकैकं तु शुभावहम् ॥
एकस्य(कं च)वर्णसाङ्कर्यं वर्जयेद्दण्डलाञ्छनम् ।
अधो (धः) श्रृङ्गमतिश्रृङ्ग (ङ्गं) विपरीतं (तु) विवर्जयेत् ॥
अतिबालं च वृद्धं तु वर्जयेद्योनने (द्योजने) मतम् ।
बलि(ली)वर्दं दृष्टविन्दुं दुष्टदृष्टिं च वर्जयेत् ॥
ह्रस्वपुच्छं चक्रखुरं बलहीनं च वर्जयेत् ।
छिन्नश्रोत्रं भग्नदन्तं पङ्गुपादं च वर्जयेत् ॥
चतुष्पादाग्रयोः(ग्रे च)श्रृङ्गं मूल(श्रृङ्गमूले)मध्यललाटके ।
स्वभावेन श्वेतवर्णमाबद्धतिलकं तथा ॥
पुष्पनेत्रं च रक्तं च बन्धं चायतेक्षणम् ।
अनस्पान(नड्वाहं न)त्यजेद्विद्वान्सूत्रं कुर्याद्विलक्षणम् ॥
श्रृङ्गाग्रे खुराग्रे च कुर्यात्स्वर्णेन गोलकम् ।
फा(भा)लपट्टं तथ कर्णं कनकैश्चाप्यलङ्कृतम् ॥
कर्षणात्पूर्वदिवसे अनस्वाश्चैव(नड्वाहं च)लाङ्गलम् ।
कौतुकं बन्धनं चादौ कर्षणार्थम(णाया)धिवासितम् ॥
कुर्यात्तदुक्तवद्विद्वान्वक्ष्ये लाङ्गललक्षणम् ।
बन्धुरं खादिरं चैव निम्बं च सरलं तथा ॥
सरक्तक्षीरिणी चैव लाङ्गलं(ल)वृक्षमि(क्ष इ)ष्यते ।
एकहस्तं तु दीर्घं स्यात्सपादाद्यर्धमेव च ॥
त्रिचतुष्पञ्चमात्रं वा लाङ्गलं(ल)मूलविस्तृतम् ।
तस्यायामार्धं तन्मध्ये(र्धमध्ये च)किंचिद्वक्रं सकर्णकम् ॥
मूलमष्टाश्रकं चार्धत्रिपट्टं वेणुपत्रवत् ।
तस्य मूले तदुपरि वेणुश्रृङ्गं प्रवेशयेत् ॥
वेणुदण्डं त्रिहस्तं स्याद्दीर्घतारां(रं)यथाबलम् ।
पुच्छायाम(म)ध्यर्धकरं मूलतारं शराङ्गुलम् ॥
अथवा सपादहस्तं च हस्तं वा पुच्छदीर्घकम् ।
पुच्छाग्रं तु द्विमात्रं तु हलमूलावसानकम् ॥
एकाद्यर्धाङ्गुलं वाऽपि युक्त्या पुच्छं घनं भवेत् ।

पुच्छमूल(लं)विशेषेण पद्मपत्रेण भूषितम् ॥
त्रिचतुष्पञ्चयवमात्रं पुच्छाग्रैः पट्टदीर्घकम् ।
उत्सेधं द्वित्रिमात्रं वा सर्वालङ्कारसंयुतम् ॥
अयष्कीलं तत्र कुक्षौ योजयेत्तदकेन तु ।
सार्धद्विहस्तमानेन युगायामं प्रकल्पयेत् ॥
त्रिचतुष्पञ्चमात्रं वा मध्यपट्टविशालकम् ।
तद्द्वयोरग्रविस्तारं द्वित्रिय(न्य)ङ्गुल(क)मेव च ॥
एतद्यु(तद्धि यु)गमानं स्यान्मध्याग्रान्तक्षयं(य)क्रमात् ।
तस्यार्धं च द्वयोश्छिद्रैरनड्वन्(द्विच्छिद्रान्तेऽनडुद्)बन्धार्थकं भवेत्
युगमध्ये द्वयोर्वापि लाङ्गलं चापि बन्धयेत् ।
सुमुहूर्ते सुलग्ने च कर्षणं तु समारभेत् ॥
अनडूवाहौ स्थपतिश्चोभौ(तिश्च)गन्धपुष्पैः स्वलंकृतौ(ताः) ।
पञ्चाङ्गभूषण (णः) शिल्पी श्वेतवस्त्रोत्तरीयवान् ॥
आदित्यचन्द्रौ ध्यायेत्तद्बलीवर्दद्वयं बुधः ।
वाराहं लाङ्गलं ध्यायेच्छिल्पिनं तु पितामहम् ॥
ब्राह्मणैश्च यथाशक्ति वाचयेत्स्वस्तिवाचनम् ।
सर्वमङ्गलघोषैश्च स्थपतिः कर्षयेत्तदा ॥
शूद्रोऽपि कृषिकाले तु शुद्धो भूत्वा समाहितः ॥

(व) गृहारम्भ-काल-लक्षणम्

वि० वा० ३. १–६

आदौ कालं परीक्षेत सर्वकार्यार्थसिद्धये ।
कालो हि सर्वजीवानां शुभाशुभफलप्रदः ॥
कालातिक्रमणे दोषो द्रव्यहानिश्च जायते ।
देवानामपि देवीनां विप्रादीनां विशेषतः ॥
प्रासादभवनारम्भे स्तम्भस्थापनकर्मणि ।
द्वारस्थापनवेलायां भवनानां प्रवेशने ॥
वापीतटाकनिर्माणे गोपुरारम्भकर्मणि ।
विमानमण्डपारामगर्भगेहोद्धृतौ तथा ॥
कालं शुभं परीक्षेत मङ्गलावाप्तिसाधकम् ।
देशभेदेन कालोऽपि भिन्नतां प्रतिपद्यते ।
इष्टिकान्यसनं शस्तं शुभकाले विशेषतः ।
तस्मात्सर्वप्रयत्नेन शुभं कालं न लङ्घयेत् ॥

स० सू० सूत्रपातविधौ निषिद्धाः मासाः २६. १–११॥

इदानीमभिधास्यामः सूत्रपातविधेः क्रमम् ।
शस्ते मासि सिते पक्षे विदध्यात् तं शुभेऽहनि ॥
चैत्रे शोकाकुलो भर्ता वैशाखे च धनान्वितः ।
ज्येष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ ॥

श्रावणे धनवृद्धिः स्यान्नभस्ये न वसेद्गृहे।
कलहश्चाश्विने मासि भृत्या नश्यन्ति कार्तिके॥
मार्गशीर्षे धनप्राप्तिः सहस्ये कामसम्पदः।
माघे वह्निभयं चैव फाल्गुने श्रीरनुत्तमा॥
द्वितीया पञ्चमी मुख्यसप्तमी नवमी तथा।
एकादशी त्रयोद(श्यस्ति?)श्यौ तिथयः स्युः शुभावहाः॥
चन्द्रताराबलं भर्तुरनुकूलं च शस्यते।
इयं हि सूत्रपाताख्या क्रिया प्रासादकर्मणि॥
कार्या पुरनिवेशे च प्रारम्भे भवनस्य च।
शिलानिवेशने द्वारस्तम्भोच्छ्रायादिकेषु च॥
आद्रियेत सिते पक्षे शोभने लग्न एव हि।
रवौ कन्यातुलालिस्थे गृहं वरुणदिङ्मुखम्॥
न कुर्यात् तद्धि शून्यं स्यान्न च वृद्धिर्भवेत् प्रभोः।
न दक्षिणमुखं कुम्भमृगधन्वि स्थिते रवौ॥
कुर्वीत निष्फलं तत् स्यान्नृपदण्डवधादिकृत्।
न मीनवृषमेषस्थे कुर्वीत प्राङ्मुखं रवौ॥
तद् धनघ्नं कलिक्षुद्राजचौरार्तिकृद् यतः।
रवौ मिथुनसिंहस्थे न कर्किस्थेऽप्युदङ्मुखम्॥
कुर्यात् तद्धि दरिद्रत्वं दद्याच्च रणदासताम्।

अ० पु० ६३. १-८

इदानीमभिधास्यामः सूत्रपातविधिक्रमम्।
शस्ते मासे सिते पक्षे सुलग्ने च शुभे दिने॥
चैत्रे शोकाकुलो भर्ता वैशाखे च धनान्वितः।
ज्येष्ठे गृहा निपद्यन्ते आषाढे पशुनाशनम्॥
श्रावणे धनवृद्धिश्च भाद्रे तु न वसेद् गृहे।
कलहश्चाश्विने मासे भृत्यनाशश्च कार्तिके॥
मार्गशीर्षे धनप्राप्तिः पौषे वै कामसंपदा।
माघे चाग्निभयं कुर्यात् फाल्गुने श्रियमुत्तमाम्॥
तृतीया पञ्चमी चैव सप्तमी नवमी तथा।
एकादशीत्रयोदश्यौ तिथयश्च सुखावहाः॥
चन्द्रताराबलं भर्तु राजमानं हि शस्यते।
सूर्यपाततिथिं दद्याद् विष्टिगण्डान्तवर्जितम्॥
इह वै सूत्रपातैश्च क्रियाः प्रासादकर्मणि।
कार्याः पुरनिवेशे तु प्रारम्भे भवनस्य च॥
भूम्यारम्भे शिलान्यासे द्वारस्तम्भोच्छ्रयादिषु।
आदित्ये चोत्तरस्थे च शोभने लग्न एव च॥

वास्तुराज०
१. ६-९

सिद्ध्यै गृहारम्भमुशन्ति वृद्धा यथोदिते मासि वलक्षपक्षे।
शशाङ्कवीर्ये सुदिने निमित्ते शुभे रवौ सौम्यगते प्रवेशम् ॥
चैत्रे शोककरं गृहादिरचितं स्यान्माधवेऽर्थप्रदं,
ज्येष्ठे मृत्युकरं शुचौ पशुहरं तद्वृद्धिदं श्रावणे।
शून्यं भाद्रपदे त्विषे कलिकरं भृत्यक्षयं कार्तिके,
धान्यं मार्गसहस्ययोर्दहनभीर्माघे श्रियं फाल्गुने ॥
आदित्ये हरिकर्कनक्रघटगे पूर्वापरास्यं गृहं,
कर्तव्यं तुलमेषवृश्चिकवृषे याम्योत्तरास्यं तथा।
द्वारं भिन्नतया करोति कुमतिर्द्रव्यप्रणाशस्तदा,
कन्यामीनधनुर्गते मिथुनगे चास्मिन्न कार्यं गृहम् ॥
कन्यादित्रिषु पूर्वतो यमदिशि त्याज्यं च चापादितो
द्वारं पश्चिमतस्त्रिके जलचरात् सौम्ये रवौ युग्मतः।
तस्माद् व्यस्तदिशामुखं तु भवनद्वारादिकं हानिकृद्
सिंहे चाथ वृषे च वृश्चिकघटं याते हितं सर्वतः ॥

## (ख) कीलक-सूत्रपातादि-लक्षणम्

स० सू०
३७. १-८१॥

वर्णानां यानि दारूणि कीलकार्थं नियोजयेत्।
इदानीं तानि वक्ष्यामि श्रेयः कीर्त्तिहिताय च ॥
खदिरोदुम्बराश्वत्थशालशाकधवार्जुनाः ।
अञ्जनः कदराशोकतिनिशारुणचन्दनाः ॥
शिरीषसर्जन्यग्रोधवेणवः कीलकर्मणि।
पुन्नामानो द्रुमाः शस्ताः स्त्रीनामानो विगर्हिताः ॥
अश्वत्थः खदिरश्चैतौ विप्राणां वृद्धिकारकौ।
रक्तचन्दनवेणुस्थकीलौ क्षत्रस्य पूजितौ ॥
शाकश्च खदिरश्चेति सामन्तानां हिताविमौ।
कीलौ शालशिरीषोत्थौ वैश्यानां कीर्तितौ शुभौ ॥
शूद्रजातेस्तु तिनिशधवार्जुनसमुद्भवाः।
वैश्यवेश्मसु सौभाग्यकार्ये च स्युरशोकजाः ॥
न्यग्रोधो वणिजां धाम्नि भूमिकर्मण्युदुम्बरः।
महामा (त्र?त्रो) स्ववैद्यानां कीलाः सर्जार्जुना गृहे ॥
विप्राणां सर्ववर्णोत्थाः क्षत्रियाणां त्रिवर्णजाः।
वर्णद्वयोक्ता वैश्यानां शूद्राणां स्वानुलोमतः ॥
प्रतिलोमा न कर्त्तव्याः कीलका भूतिमिच्छता।
प्रमाणान्यथ कीलानां निगद्यन्ते पृथक् पृथक् ॥
द्वात्रिंशदङ्गुलाः कीला विप्राणां स्युः शुभावहाः।

क्षत्रियाणां पुनश्चाष्टाविंशत्यङ्गुलसम्मिताः ॥
चतुर्विंशत्यङ्गुलाश्च वैश्यानां शुभदायिनः ।
विंशत्याद्यङ्गुलैः कीलाः शूद्रजातेस्तु ते हिताः ॥
षडङ्गुलपरीणाहाः सर्वेष्वेते शुभावहाः ।
ब्राह्मणक्षत्रियविशां वेदाष्टाश्रषडश्रयः ॥
षडश्रयस्तु शूद्रस्य प्रकृतेस्तु यदृच्छया ।
दार्भमौञ्जौर्णकार्पासं विप्रादीनां यथाक्रमम् ॥
अर्धपर्वपरीणाहं दृढं सूत्रं तु वर्तितम् ।
अलाभे स्वस्य सूत्रस्य प्रोक्तादन्यतमं बुधः ॥
गृह्णीयात् सूत्रमन्ये तु गृह्णीयुः स्वेच्छयैव ते ।
इत्थं संभृत्य सम्भारान् गृहभर्ता शुभेऽहनि ॥
शुक्लपक्षे शुचिः स्नातः स्थपतिश्च सिताम्बरः ।
गृहस्थाननिमित्तात् तु देवस्थानानि लक्षयेत् ॥
कुसुमाक्षतमाल्यैश्च कर्तव्या गृहदेवताः ।
आदौ स्थानानि संकूनां परीक्षेत समन्ततः ॥
तेषु सर्वेषु कर्तव्यमर्चनं तु यथाविधि ।
गृहस्य मध्ये सिक्त्वा तु निरूप्य ब्रह्मणः पदे ॥
गोमयेन समालिप्तां कुर्याद् वेदीं सुलक्षणाम् ।
चतुरश्रां चतुर्द्वारामक्षतैः सुप्रतिष्ठिताम् ॥
तस्या मध्ये प्रतिष्ठाप्यः कुम्भो हैमोऽथ राजतः ।
ताम्रको मृन्मयो वापि पूर्वालाभे परः परः ॥
अकालमूलः सोऽव्यङ्गो जलपूर्णः स्वलंकृतः ।
मणिरत्नप्रवालैश्च स्वर्णरूप्येण गर्भितः ॥
प्रतिष्ठा (प्या?प्यो) क्षतैः पुष्पफलबीजसमन्वितः ।
श्वेतेन चन्दनेनैनमर्चयित्वा समन्ततः ॥
तस्योपरिष्टाद् विन्यस्येत् क्षीरवृक्षस्य पल्लवम् ।
सुगन्धिनाथ धूपेन धूपयित्वा चतुर्दिशम् ॥
वेष्टयेदहतेनैनं शुक्लवस्त्रेण सर्वतः ।
वास्तुमध्ये यतो ब्रह्मा कुम्भरू (पं?पः) स तिष्ठति ॥
कुम्भस्योत्तरभागे तु कीलकान् स्थापयेद् बुधः ।
कीलानष्टौ परीक्षेत स्थापयेच्च यथाविधि ॥
श्वेतचन्दनलिप्तांस्तान् श्वेतपुष्पैर्विभूषयेत् ।
सालक्तकान् सुरभिणा धूपेन च सुधूपितान् ॥
ऊर्णामयेन सूत्रेण त्रिवर्णेनाभिवेष्टयेत् ।
मधुसर्पिर्दधिक्षीरैर्मूलभागे लेपयेत् ॥

अर्चयेत् परशुं सूत्रमष्टीलादीनि सर्वतः।
अथोपकरणान्यत्र धूपपुष्पाक्षतादिभिः॥
ततः पूर्वोत्तरे वास्तोर्भागे महार्चिषः पदे।
गोमयेन समालिप्ते कुशास्तरणमास्थितः॥
अग्निकार्यं प्रकुर्वीत पुरोधाः शान्तिमेव च।
सांवत्सरः शुचिः स्नातः कृतस्नानः (?) समाहितः॥
शङ्कुना साधयेल्लग्नं सम्यक् तद्घटिकाथवा (?)।
रात्रिलग्नं तु नक्षत्रैर्मध्यास्तोदयसंश्रितैः॥
एवं संसाधयेल्लग्नं यदीच्छेत् सिद्धिमात्मनः।

**स्थपत्यादीनां पूजनम्**

पूजया तुष्टिकारिण्या पूजयेच्च पुरोहितम्॥
अभ्यर्चिते यतस्तस्मिन् ब्रह्मा भवति पूजितः।
सांवत्सरस्य कर्तव्या ततः पूजा यथाविधि॥
सांवत्सरेऽर्चिते यस्मात् पूजितः स्याद् बृहस्पतिः।
स्थपतिं पूजयेत् पश्चात् त्वष्टृतुष्टिचिकीर्षया॥
तदधीनं यतः कर्म शुभं वा यदि वाशुभम्।
श्वेतचन्दनदिग्धांस्तान् श्वेतपुष्पैश्च पूजितान्॥
सदशैरहतैर्वस्त्रैरङ्गुलीयैः प्रपूजयेत्।
परिकर्मकरा ये च तान् यथाशक्ति पूजयेत्॥
हेम्ना वस्त्रादिदानैश्च वाग्भिर्वा परितोषयेत्।
यथा सुमनसस्ते स्युस्तथा कर्तव्यमादरात्॥

**बलिकर्म**

ततः स्थपतिराचम्य बलिकर्म समाचरेत्।
सूत्रपाते बलिं धीमान् सार्वभौतिकमाचरेत्॥
तस्यालाभे बलिः कार्यो यो भवेत् सोऽभिधीयते।
विदधीत च श्वेतरक्तपीतासितान् पृथक्॥
पायसं कृसरं क्षीरं निष्पावान् श्वेतमोदनम्।
पालिकादधिरूपांश्च पललोल्लापिकावृतम्॥
दध्योदनं च संमिश्रं देवताभ्यो निवेदयेत्।
तिलचूर्णेन सहितैर्दैवमग्निं च पूजयेत्॥
ततश्च पायसं दत्त्वा ब्रह्मस्थाने निवेदयेत्।
ततश्चानुक्रमेणैव देवताभ्यो बलिं हरेत्॥
बलिकर्म यथान्यायं कृत्वा च द्विजवाचनम्।
स्वशाखीयान् शुचीन् प्राज्ञान् पूजयेद् दक्षिणाफलैः॥
ओङ्कारस्वस्तिपुण्याहैर्गीतवादित्रनिस्वनैः ।
ततो विप्रैः सह स्वामी कुर्यात् तस्य प्रदक्षिणम्॥
अक्षतान् प्रथमं कुम्भे दापयित्वा द्विजोत्तमैः।

ततो दक्षिणपूर्वेण गत्वा पुण्याहवाचकैः ॥
अहताम्बरसंवीतः शुचिः स्थपतिरासने ।
शङ्कु-ताडनम्
निषद्य प्राङ्मुखः शङ्कुं धृत्वा दक्षिणपाणिना ॥
पश्चादादाय वामेन प्रतिष्ठाप्य च भूतले ।
मन्त्रानमूल् जपन् वीरो हन्यात् परशुना ततः ॥
विशन्तु ते तलं नागा लोकपालास्तथैव च ।
प्रतिष्ठन्तु गृहे चास्मिन्नायुर्बलकरं भवेत् ॥
प्रहारान् सुस्थिरानष्टौ दद्यात् कीलस्य मूर्धनि ।
हन्यमाने ततः कीले निमित्तान्युपलक्षयेत् ॥
गोविप्ररथनागाख्याः कन्या नृपवरस्त्रियः ।
शङ्खदुन्दुभिवंशानां तथा गीतस्य च ध्वनिः ॥
आविर्भवति यद्यस्मिन् हन्यमाने प्रभुस्तदा ।
सततं सुखमाप्नोति शान्त्यैश्वर्यैश्च वर्धते ॥
हतं क्षतं विपन्नं वा निषेधः सूत्रकीलयोः ।
पाषण्डिनां च सर्वेषां दर्शनं न सुखावहम् ॥
दृष्ट्वा शुभनिमित्तानि ततः शङ्कुं निवेशयेत् ।
हन्यमानो यदा कीलो विशेद् भूमौ शनैः शनैः ॥
कर्मसिद्धिर्भवेत् तत्र गृहं रत्नपरिच्छदम् ।
हन्यमानोऽपि न विशेद् धरित्रीं कीलको यदा ॥
न तत्र कर्मसिद्धिः स्यादनिमित्तं च लक्षयेत् ।
एकेनापि प्रहारेण यत्र कीलो विशेन्महीम् ॥
न सिद्धिं याति तत्रौकः कृतं वा नोपभुज्यते ।
आयस्याष्ठीलया हन्यान्न काष्ठेन कथञ्चन ॥
काष्ठेन ताडितः कीलो वह्निदोषकरो भवेत् ।
अश्मना यदि ताड्येत तदा व्याधिं प्रयच्छति ॥
ऐन्द्रीं प्रतिनतः कीलो धनसम्मानकारकः ।
आग्नेय्यां प्रणते कीले भवत्यग्निभयं महत् ॥
याम्यायां मरणं राज्ञां दिशि राक्षसतो भयम् ।
धननाशस्तु वारुण्यां वायव्यां रोगतो भयम् ॥
सौम्यं सौम्यानते राजप्रसादायेशतो गतः ।
कीलके कूर्चके जाते पुत्रपौत्रान्वयैर्गृहे ॥
परमामृद्धिमाप्नोति धनधान्यैश्च वर्धते ।
हन्यमानो यदा यत्नात् कीलः कश्चिदपि स्फुटेत् ॥
नाशं विद्यात् तस्य पत्न्या ज्येष्ठस्य तनयस्य वा ।
यदि भज्येत कीलः स्यात् स्वामिनो जायते वधः ॥

यदा कीलः पतेद्धस्ताद् भ्रंशः स्यात् स्थपतेस्तदा ।
हस्तभ्रष्टश्च (?) स भवेदष्टीले हस्तविच्युते ॥
सुखेन हन्यमानश्चेत् कीलः स्वस्थो न जायते ।
अष्टौ प्रहारानपरांस्तस्य दद्यात् तदा पुनः ॥
स्रग्गन्धधूपोपहारैः कुर्याच्च परिषेचनम् ।
इदं साम महापुण्यं परिचिन्त्य समासतः ॥
त्रैशोकं तु जपेद् विद्वान् यावच्छङ्कभिषेचनम् ।
गत्वाथ नैऋतीमाशां ततः शङ्कुं निवेशयेत् ॥
ऊर्णायवेन साम्नास्य सम्यक् स्नपनमाचरेत् ।
वायोर्दिशं ततो गत्वा तत्र शङ्कुं निवेशयेत् ॥
अभिषेकं महारत्नसाम्ना तस्य समाचरेत् ।
अथैशानीं दिशं गत्वा शङ्कुं तस्यां निवेशयेत् ।
भोग्रेण साम्ना कुर्वीत प्राग्वत् तस्याभिषेचनम् ।
ततोऽनुसूत्रं बध्नीयात् सव्यं द्विगुणवेष्टितम् ।
प्रदक्षिणं प्रसार्यैतदुक्तः शङ्कुक्रमो यथा ।
(म?ब) ध्यमानं यदा सूत्रं शङ्कुः किमपि मुञ्चते ॥
तदा पुत्रवधं विद्याच्छिन्नं स्वस्वामिमृत्यवे ।
तस्माद् यत्नः प्रकर्तव्यो यावत् सूत्रं प्रसार्यते ॥
चतुर्णामपि बाहूनां पोषं (?) छिन्नं न दुष्यति ।
सूत्रं प्रसार्य वितरेच्चरून् पूर्वं प्रकल्पितान् ॥
स्वेषु स्वेषु ततःस्थानेष्वनेन विधिना बुधः ।
शङ्कुस्थानेषु दातव्याः सिताद्याश्चरवः क्रमात् ॥
प्राग्दक्षिणस्य विदिशो मन्त्रं चेमं हृदा जपेत् ।
मारुतानां च सर्वेषां मानवानां तथैव च ॥
बलिं तेषु प्रयच्छामि मन्त्रेण परिमन्त्रितम् ।
रक्तं बलिमुपादाय नैऋत्यभिमुखस्तथा ॥
नैऋत्यधिपतिश्चैव नैऋत्यां ये च राक्षसाः ।
बलिं तेषु प्रयच्छामि रक्तमोदनमुत्तमम् ॥
कृष्णं बलिमुपादाय गत्वा च दिशमानिलीम् ।
नमस्ते नागराजाय ये चान्ये तं समाश्रिताः ॥
बलिं तेषु प्रयच्छामि कृष्णमोदनमुत्तमम् ।
बलिमुद्धृत्य हारिद्रमैशानीमाश्रयन् दिशम् ॥
यमो रुद्रेषु सर्वेषु ये चान्ये तान् समाश्रिताः ।
प्रयच्छामि बलिं तेषां हारिद्रौदनमुत्तमम् ॥
एवमेतान् बलीन् सर्वान् यथावत् प्रतिपादयेत् ।

ततः कुम्भोदकं पुण्यं साम्ना दिव्येन मन्त्रयेत् ॥
वामदेव्येन कुर्वीत प्रोक्षणं तेन वास्तुतः ।
द्रुमा विप्रादीनामिति निगदिताः शङ्कुघटने ,
फलं यच्छङ्कोश्च स्फुटमिह निमित्तानि बहुशः ।
तथा सूत्राताने विधिरनु च मन्त्रैः प्रतिदिशं
बलिः कीलेपूक्तस्त्रिदशपरितोषाय विधिवत् ॥

## ( द ) बलिदानविधिलक्षणम्

| | |
|---|---|
| स० सू० | इदानीमभिधास्यामो बलिरूपविधेः क्रमम् । |
| मण्डलकरणम् | येन येनार्चिता देवास्तुष्यन्ति समहेश्वराः ॥ |
| कलशन्यसनञ्च | मण्डलं वास्तुनो मध्ये गोमयेन प्रकल्पयेत् । |
| ३६. १–२ | कलशं तत्र विन्यस्येत् सप्रसूनं सकाञ्चनम् ॥ |
| वास्तुदेवता-कल्पनम् | वास्तुदेवास्ततः कल्प्या यथास्थाननियोगतः । |
| अर्घ्य-निवेदनं च | सधूपैर्विविधैमाल्यैरर्घ्यं पश्चान्निवेदयेत् ॥ |
| ३६. ३ | अर्चयेद् विश्वकर्माणं माल्यैर्धूपैर्विलेपनैः । |
| विश्वकर्मणोवास्तु- | भक्ष्यैः फलैर्बहुविधैः पूजयेत् सुसमाहितः ॥ |
| देवानां च पूजा- | आज्येन पयसा दध्ना पूजयेच्छिखिनं पुनः । |
| विधिः ३६. ४–२६ | शालिगोधूममुद्गाद्यैर्धान्यैः पर्जन्यमर्चयेत् ॥ |

जयन्तं पूजयेदाम्रद्राक्षाखर्जूरिकादिभिः ।
मालतीमल्लिकाभिश्च पूजयेत् त्रिदशाधिपम् ॥
पुष्पै रक्तैस्तथा धूपै रक्तचन्दनलेपनैः ।
ततः सूर्यं जगन्नाथं पूजयेल्लोकचक्षुषम् ॥
जम्बीरैर्बीजपूरैश्च नारङ्गैः पीतकैः फलैः ।
पूजयेत् सत्यनामानं देवं तेन स तुष्यति ॥
मत्स्यमांसैश्च तुष्यन्ति सर्वे रक्षःपुरोगमाः ।
सितैः फलैर्नारिकेलैर्भृशश्च परितुष्यति ॥
गन्धैर्धूपप्रयोगैश्च नभोनामानमर्चयेत् ।
पुष्पैः सुगन्धिभिः शुक्लैर्मारुतः परितुष्यति ॥
कृसरं मधुसंयुक्तं पूष्णे भक्त्या निवेदयेत् ।
वितथं तु शुभैरन्यैर्मद्यमांसविवर्जितैः ॥
पूजितस्तुष्टिमायाति विवस्वांश्च महामुनिः ।
पुष्पैः सपुष्पकैस्तुष्टिमवाप्नोति गृहक्षतः ॥
मत्स्यमांसयुतैर्भक्ष्यैर्यमतुष्टिः सदा भवेत् ।
पुन्नागागुरुधूपेन गन्धर्वानार्चयेद् बुधः ॥
मृगमांसयुतैर्भक्षैर्भृङ्गराजं च तर्पयेत् ।

राजजम्बूफलैर्बिल्वैर्देवमध्यर्चयेन्मृगम् ॥
पायसैर्मधुसंयुक्तैर्मांसैर्भक्तैश्च शोभनैः ।
कर्पूरसुरभिद्रव्यगर्भैः संपूजयेत् पितॄन् ॥
सपुष्पैर्मोदकैर्लाजैः पललैश्च विमिश्रितैः ।
दौवारिकं प्रयत्नेन पूजयेद् विघ्नकारकम् ॥
अपूपैः शोभनैर्गन्धैर्धूपैर्माल्यैरनुत्तमैः ।
पुष्पैः कण्टकजातीनां सुग्रीवं पुजयेत् सदा ॥
सपुष्पैर्ला(प?ज)कैर्भक्ष्यैर्दधियुक्तान्नपायसैः ।
अर्चयेत् पुष्पदन्तं तु यशोवीर्यान्वितं सुरम् ॥
मांसैश्च सूकरादीनां वैनतेयं सदार्चयेत् ।
वरुणं च महासत्त्वं पूजयेद् धूपचन्दनैः ॥
राहुं च मांससंयुक्तैस्तर्पयेद् भक्ष्यभोजनैः ।
रुधिरेण प्रदत्तेन तुष्टिमेति शनैश्चरः ॥
मांसेन तु क्षयस्तुष्टिं रोगाणामधिपो व्रजेत् ।
मेदसा पूजयेद् रोगं सर्वलोकभयङ्करम् ॥
वासुकिं क्षीरदानेन पूजयेत् सततं नरः ।
पूर्ववत् पूजयेद् देवं विश्वकर्माणमीश्वरम् ॥
सितप्रसूनविन्यासैर्भल्लाटं पूजयेद् बुधः ।
दधियुक्तेन चान्नेन सोमं सर्वत्र पूजयेत् ॥
कुबेरं धूपदानेन पूजयेत् सततं नरः ।
अदितिं च सुवर्णेन पुनरपि च पूजयेत् ॥
अर्कमन्दारमालाभिर्वृषभं च समर्चयेत् ।
अन्येषामपि देवानामर्चनं धूपसाम्प्रतैः (?) ॥
सर्वपुष्पफलैश्चैषां कार्यं बुद्धिमता सदा ।
इत्येते बलयः सर्वे शान्त्यर्थं परिकल्पिताः ॥

शान्तिबलिकर्मार्हाणि वास्त्वादीनि ३६. २७-२८॥

शोधने कर्षणे भूमेः साधने रूपकल्पने ।
गृहे प्रवेशने रम्ये तिथिमभ्युदयेषु च (?) ॥
स्कन्धावारनिवेशेषु पुरग्रामनिवेशने ।
देवालयक्षितिपवेश्मनिवेशनेषु प्रोक्तान् बलीन् प्रवितरेत् प्रयतः सुरेभ्यः।
प्रारम्भमन्यमपि वास्तुगतं चिकीर्षुः कुर्वन्निमं विधिमभीप्सितभाजनं स्यात्

## (य) शिलान्यास-लक्षणम्

स० सू० विहितायनपक्ष-तिथिनक्षत्रादिः ३५. १-५

अथ ब्रूमः शिलान्यासविधिमत्र यथागमम् ।
तथोदगयने पुण्ये शुक्लपक्षे शुभेऽहनि ॥
स्थिरग्रहस्य दिवसे करणे च गुणान्विते ।
तिष्येऽश्विनीषु रोहिण्यामुत्तरेष्वपि च त्रिषु ॥

रेवत्यां श्रवणे हस्ते शिलाविन्यासमाचरेत् ।
स्थिरस्य राशेरुदये सौम्यमित्रावलोकिते ॥
सम्यङ्निमित्तशकुनस्वस्तिपुण्याहवार्चिते ।
हर्षोदये च मनसः कुर्याद् वास्तोर्निवेशनम् ॥
भद्रः प्रकृत्या शास्त्रज्ञः शुभः स्नातः समाहितः ।
कर्मारभेत स्थपतिः कृतदेवार्चनक्रियः ॥

प्रथमेष्टिका-लक्षणम् ३९. ६–८

पूर्णां समामविकलां चतुरश्रामनिन्दिताम् ।
शिलामाद्यां चये साध्वीं परीक्षेत विचक्षणः ॥
कुम्भाङ्कुशध्वजच्छत्रमत्स्यचामरतोरणैः ।
दूर्वानागफलोष्णीषपुष्पस्वस्तिकवेदिभिः ॥
नन्द्यावर्तैः सचमरैः कूर्मपद्मनिशाकरैः ।
वज्रैः प्रशस्तैः प्राकारैर्भूषिताः कर्मणो हिताः ॥

वर्जनीयाः शिलाः ३९. ९–१०॥

दीर्घा ह्रस्वाल्पविषमाच्छाभध्मातापरीक्षिता ।
दिङ्मूढा चाङ्गहीना च सास्थ्यङ्गारा सशर्करा ।
खण्डा दुःपक्वनिर्भिन्ना कृष्णा दोषभयावहा ।
नृणां पशुतुरङ्गाणां पदाङ्काः स्वस्तिवृद्धये ॥
ऋव्यान्मृगविहङ्गानां पादैः स्पृष्टास्तु वर्जयेत् ।

नन्दादिकाश्चतस्रः शिलास्तद्देवता वेदीकल्पनञ्च ३९. १०–१३

नन्दाभद्राजयापूर्णाश्चतस्रः स्युरिमाः शिलाः ॥
वाशिष्ठी काश्यपी तद्वद् भार्गव्याङ्गिरसीति ताः ।
तत्र प्रागुत्तरे देशे संनिवेशस्य वास्तुनः ॥
नैर्ऋत्यां वा सकुसुमां समां गोचर्मसम्मिताम् ।
वेदीं सगन्धकलशां चतुरश्रां प्रकल्पयेत् ।

नन्दाप्रतिष्ठापन-विधिः ३९. १४–२९

आग्नेय्यामादितो नन्दां स्थापयेत् क्रमशः शिलाम् ।
अकालमूलैरव्यङ्गैः सपद्मोत्पलपल्लवैः ॥
सर्वौषधिहिरण्याद्यैर्हैमराजतमृन्मयैः ।
कुम्भैस्ताम्रमयैश्चापि मन्त्रैस्तामभिषेचयेत् ॥
तीर्थप्रस्रवणाम्भोभिः सरलाक्षतपङ्कजैः ।
सुगन्धिभिः सपुण्याहमभिषेकं प्रयोजयेत् ॥
जाह्नवीयमुनारेवासरस्वत्यादिसम्भ(वैः?वम्) ।
महानदीजलं शस्तं शुभतीर्थभवं तथा ॥
तथाद्रिवनदेशान्तदेवायतनानि च ।
अभिषेकार्थमम्भांसि यथालाभमुपाहरेत् ॥
मन्त्रेणानेन चैतासामभिषेकं समाचरेत् ।
हिरण्यवर्णाः पावन्यः शुभयो दुरितच्छिदः ॥
पुनन्तु शान्ताः श्रीमत्य आपो युष्मानमयुच्युतः ।

मन्त्रपूतेन पयसा स्नापयित्वा ततः शिलाम् ॥
स्थपतिर्गन्धकल्केन मङ्गल्येनानुलेपयेत् ।
हिमचन्दनपूर्णेन व्यवकीर्य सुगन्धिना ॥
तरसा छादयेदेनां सलाजैः पुष्पदामभिः ।
धूपमाल्योपहारैश्च दधिमांसाक्षतादिभिः ॥
पूजयेदिष्टकां देवीं वस्त्रयुग्मैश्च पुष्कलैः ।
निवेशनान्ते नैरृत्यां तदा विप्रानवस्थितान् ॥
समस्त्वयाज्ञ शुचीन् प्राज्ञानर्चयेद्दक्षिणाफलैः ।
ओङ्कारस्वस्तिपुण्याहगीतवादित्रनिस्वनैः ॥
कर्ता जनितरोमाञ्चस्तेभ्यः कुर्यान्नमस्क्रियाम् ।
निवेद्य वास्तोष्पतये भूतेभ्यश्च ततो बलिम् ॥

उपशिलान्यसनम्
३५. २६

तासां चतसृणामन्याः कुर्यादुपशिलाः पृथक् ।
प्राकारस्वस्तिकाङ्के द्वे तथा श्रीवत्सलक्षणा ॥

शिलाङ्काः प्रतिष्ठापनमन्त्रादिकञ्च
३५. २७-४३

नन्द्यावर्तस्तु पूर्णायां भवे (देको?दङ्को) यथाक्रमम् ।
कर्णे प्राग्दक्षिणे नन्दां वास्तुनः स्थापयेदधः ॥
अन्याः क्रमेण भद्राद्याः कोणेष्वन्येषु च त्रिषु ।
प्रतिष्ठापनमन्त्राश्च तासां चतसृणामपि ॥
चत्वार ऋषिभिर्गीताः शाश्वतारम्भदर्शनाः ।
वीर्येणादिवराहस्य वेदार्थैस्त्वभिमन्त्रि (ताः?ताम्) ॥
वसिष्ठनन्दिनीं नन्दां प्राक् प्रतिष्ठापयाम्यहम् ।
सुमुहूर्ते सुदिवसे सा त्वं नन्दे! निवेशिता ॥
आयुः कारयितुर्दीर्घं श्रियं चाश्यामिहावह ।
भद्रासि सर्वतोभद्रा भद्रे! भद्रं विधीयताम् ॥
कश्यपस्य प्रियसुते! श्रीरस्तु गृहमेधिनः ।
जये! विजयतां स्वामी गृहस्यास्य महात्मनः ॥
आचन्द्रार्कं यशश्चास्य भूम्यामिह विरोहतु ।
त्वयि सम्पूर्णचन्द्राभे! न्यस्तायां वास्तुनस्तले ॥
भवत्येष गृहस्वामी पूर्णे । पूर्णमनोरथः ।
इति मूलच (यो?यं) मन्त्रैः कुर्यात् स्वस्तिकवाचनैः ॥
ताभिर्हिरण्यवर्णाभिः शिलाभिः सममद्भुतम् ।
प्रागुदक्प्लवना धन्या न प्रत्यग्दक्षिणाप्लवा ॥
इष्टकाश्चैत्यभवनप्राकारपरकर्मसु ।
विताने चितिविन्यासे चतुर्मुखनिकेतने ॥
पुरोधाः शान्तिवेदीषु प्रतिमास्थापनेषु च ।
याज्ञिकेन विधानेन क्रमशः स्थापयेच्छिलाः ॥

ऐशोकौण्यासभा (सैर्व्यै) स्ताः सामभिः स महाप्रतैः।
गायत्र्युष्णिगनुष्टुब्भिर्बृहत्या च यथाक्रमम्॥
चयान् समस्तांश्चिनुयाच्चतुरो विरमेत् ततः।
ज्ञात्वा भित्तिप्रमाणं च चितेश्चयचतुष्टयम्॥
समाण्यमादिकमेवं कनिष्ठं च यथोत्तरम्।
प्रतिष्ठितास्ताः प्रथमं भूतले सुस्थिताः समाः॥
न चालयेच्चालने स्याद् गृहभर्तुर्महद् भयम्।
कम्पने च भयं विद्यादेतासां स्थिरतां पुनः॥
स्थपतेर्गृहभर्तुश्च मङ्गलं परमं विदुः।
प्राग्दक्षिणायां चलने गृहभर्तुर्महद् भयम्॥
भार्याविनाशो नैर्ऋत्यां शून्यं (?) भीतिर्मरुद्दिशि।
गुरोश्च भयमैशान्यामपचारेऽपि तद् भवेत्॥
प्रथमं स्थापि (तेनै?ताने) वं स्तम्भानपि न चालयेत्।
नोद्धरेत प्रगृह्याद्य विधिस्तुल्यो यतोऽनयोः॥
विन्यासं प्रथमं तस्मात् कुर्यात् सम्यक् समाहितः।
शिलानां स्थपतिस्तद्वत् स्तम्भानामपि सर्वथा॥
द्वारप्राकारशालानां नगराणां च वेश्मनाम्।
तत्प्रमाणो विधिर्यस्मात् तस्मात् तत्रादृतो भवेत्॥

(र) द्रव्यसंग्रहलक्षणम्

| | |
|---|---|
| निर्माणद्रव्योपोद्घातः | सर्वनिर्माणकार्याणां द्रव्यमाद्यस्तथा मतः। |
| वि० व० ४. १ | तस्मात्संपादयेद्विद्वान्सद्द्रव्यं शुभवर्धनम्॥ |
| द्रव्यं द्विविधम् | धनवस्तुप्रभेदेन तद्द्रव्यं द्विविधं स्मृतम्। |
| ४. २-३ | धनेन मानयेद्भृत्यान् शुभवाक्यैश्च नित्यशः॥ |
| | इष्टिका च सुधा श्लक्ष्णा पारिभद्रादिदारवः। |
| | अयःकीलादयश्चान्ये वस्तुसंज्ञा उदीरिताः॥ |
| द्रव्यसंग्रहकालः | दारुसङ्ग्रहणं शस्तं शुभकाले विशेषतः। |
| वनप्रवेशमांगलिकञ्च | स्वगुरुं स्थपतिं धेनुं श्रोत्रियान्वेदपारगान्॥ |
| ४. ४-७ | पूजयित्वा विशेषेण दारुसङ्ग्रहणे रतः। |
| | दिक्पालानायुधाधीशानर्चयेद्गन्धपुष्पकैः ॥ |
| | सह मङ्गलघोषेण काननं प्रविशेद्बुधः |
| | शुद्धः शान्तमना भूत्वा नववस्त्रोत्तरीयकः॥ |
| | देवानामपि देवीनां ध्वजस्तम्भाय दारुकान्। |
| | आहरेन्मन्त्रघोषेण सर्वलोकहितप्रदान्॥ |
| प्रशस्ताः देववृक्षाः | बकुलस्तिनिशस्सालः कोविदारश्च केसरः। |
| ४. ८-१४ | श्रीपर्णस्सप्तपर्णश्च कुद्दालः पिण्डकस्तथा॥ |

देवालयेष्विमे शस्ताश्शुभदाः संप्रकीर्तिताः ।
भल्लाटस्य मृगस्यापि मित्रस्य वरुणस्य च ॥
जयन्तस्य च पूष्णश्च गन्धर्वस्य च शूलिनः ।
वास्तुनाथस्य देवस्य देवीनां च विशेषतः ।
अंशभूता इमे वृक्षाः शास्त्रविद्भिरुदीरिताः ॥

प्रशस्ताः मानववृक्षाः
४. ११-१४

आम्रातको मधूकश्च नागरङ्गश्च तिन्दुकः ।
खदिरः पूतिको वेणुः पाटलश्च विभीतकः ॥
कर्णिकारश्च सरलः कर्कन्धूस्तिनिशस्तथा ।
काश्मरी च रसालश्च पारिभद्रश्च केसरः ॥
श्रीपर्णस्तिलकश्चापि नक्तमालश्च भद्रकः ।
अन्ये च क्षीरवृक्षा ये निम्बाद्याश्च सुगन्धिनः ॥
नृणामालययोग्यास्स्युश्शुभदाः संप्रकीर्तिताः ।
मनुष्यवास्तुभूमीशा धनपालादयश्शुभाः ॥

तेषां शिल्पकार्य-
प्राशस्त्यम्
४. १५-१७

गवाक्षस्थूलडोलानां तिर्यग्दारुकलापिनाम् ।
सोपानानाञ्च खट्वानां प्रतिमानां निवेशिनाम् ॥
पीठानां फलकानां च स्तम्भानां च शिखण्डिनाम् ।
वर्तुलानां पूतिकानां तन्तुवाजिककुम्भिनाम् ॥
उपपीठादिनां सिह्मवक्त्रादीनां च मेशिनाम् ।
अन्येषां शिल्पकार्याणाममी शस्ताः प्रकीर्तिताः ॥

अन्येषां वृक्षाणां
प्राशस्त्याप्राशस्त्ये
४. १८-२३

मधूकं तिनिशं पूतिमन्यं क्षीरतरुं तथा ।
तिर्यग्दारौ चित्रकार्ये योजयेन्न कदाचन ।
नाडीवृक्षाः पिन्नवृक्षाः गुलिकाभिन्नदारवः ।
गजदन्तप्रभिन्नाश्च वक्रा भिन्नास्तथा वने ॥
पक्षिहीना दिवाभीतैरुषिताश्च (द्विजाधमैः) ।
विद्युता भिन्नवृक्षाश्च योधानामिषुभिर्हताः ॥
कण्टकावृतदेहाश्च न प्रशस्ताः प्रकीर्तिताः ।
उदीच्यां शयिता वृक्षाः देवालयशुभप्रदाः ॥
ऐन्द्र्यां दिश्यथ वारुण्यामुदीच्यां वा विशेषतः ।
शयिताः पातिता वृक्षाः प्रशस्ता मानुषालये ॥
पतिता दक्षिणाशायां तथा प्रेतवनं गताः ।
दुष्टभूमिस्थिता वृक्षा वर्ज्या निन्द्याश्शुभेप्सुभिः ॥

वृक्षच्छेदनविधिः
४. २४-२७

नागाधिपं वृक्षपतिं पयसा पायसेन च ।
तर्पयित्वा विशेषेण वने छिन्द्याद्बुधोत्तमः ॥
काले शुभे स्वस्तिघोषैः खण्डितांस्तान्वनान्तरात् ।
शुभ्रवर्णैर्हेमश्रृङ्गैर्वृषभैर्वाहयेद् बुधः ॥

स्थापयेच्छुद्धदेशे तानधिवासाय निश्चितः।
संवत्सरो (रं) वा षण्मासान् मासत्रयमथापि वा॥
अधिवासाय तान्यस्य माल्यगन्धार्चनादिभिः॥
रक्षणं कारयेद्धीमान्वास्तुशास्त्रविशारदः।

स० सू०
द्रव्यानयनवन-
प्रवेश-कालादिः
१६. १–३॥

प्रागेवोदगवापि गेहार्थे द्रव्यं विधिवदानयेत्।
गन्तव्यमेव धिष्ण्येषु मृदुक्षिप्रचरेषु च॥
उपवास्यं च तेष्वेवच्छेद्यं भेद्यं च दारुणैः।
प्रवेशनं स्थिरैः कार्यमारम्भः शस्यते चरैः॥
गत्वा शुभे शुचौ देशे निवेशं कारयेत् ततः।
तस्मिन्निवेश्य कर्मान्तमन्नपानेन तर्पयेत्॥
पुष्टतुष्टपरीवारः क्षपायां समुपोषितः।

वृक्षपरीक्षायां—
वर्जनीयवृक्षाः
१६. ३॥–६

गृहयोग्यं परीक्षेत न्यस्तशस्त्रस्ततोऽङ्घ्रिपम्॥
पुरश्मशानग्रामाध्वहृदचैत्याश्रमोद्भवान् ।
क्षेत्रोपवनसीमान्तर्विषमस्थलनिम्नजान् ॥
कट्वम्लतिक्तलवणास्ववनीषु तथोद्गतान्।
श्वभ्रावृतान् स्थिरोर्वीषु सम्भूतांश्च त्यजेद् द्रुमान्॥

तेषां वर्णस्नेह-
त्वगादिविचारो
वयनिर्धारणञ्च
१६. ७–९

सम्यक् संलक्ष्य वृक्षाणां वर्णस्नेहत्वगादिकम्।
विजानीयाद् वयस्तेषां बालान् वृद्धांश्च सन्त्यजेत्॥
शतानि त्रीणि वर्षाणां सारद्रुमवयः स्मृतम्।
गृह्णीयाद् षोडशादूर्ध्वं सार्धवर्षशतावधेः॥
वयसः परिणामेन निर्वीर्यत्वं यथा नृणाम्।
प्रोक्तं तद्वद् द्रुमाणां च स्यात् तथा छिद्रपत्रता॥

अन्य वर्ज्यवृक्षाः
१६. १०–१४

भङ्गुराः सुषिरास्ते स्युः सकोलाक्षाः खरत्वचः।
तस्मादिमांस्त्यजेद् वृक्षांस्तथा चैवोर्ध्वशोषिणः॥
वक्रान् रूक्षानवप्लुष्टान् दुःस्थितानपि च द्रुमान्।
वर्जयेद् भग्नशाखांश्च ह्येकशाखान्वितांस्तथा॥
अन्यैरधिष्ठितान् विद्युत्पातवातसरित्क्षतान्।
ग्रन्थिनिर्युक्तदानांश्च भ्रमराहिकृताश्रयान्॥
संसृष्टानेकतो भ्रष्टान् मधुभिर्वलिभिर्वृतान्।
मांसामेध्याशनैस्तद्वद् दूषितानपि पक्षिभिः॥
लूतातन्त्वावृतान् वन्यसत्वोद्घृष्टान् गजक्षतान्।
वुध्नतोऽतिबृहत्स्कन्धांश्चिह्नभूतांस्तथाध्वनः ॥
अकाले पुष्पफलिनो रोगैरपि च पीडितान्।
वासभूतानुलूकानां त्यजेदन्यानपीदृशान्॥

गृहकर्महिताः वृक्षाः
१६. १६–१८

खदिरो बीजकः सालो मधूकः शाकशिंश (पौ?पे)।
सर्जार्जुनाञ्जनाशोकाः कदरो रोहिणीतरुः॥
विकङ्कतो देवदारुः श्रीपर्णीपादपस्तथा।
कुटुम्बिनाममी प्रोक्ताः पुष्टिदा जीवदास्तथा।
वृक्षाणां लक्ष्यते येषां भारवारिसहिष्णुता।
ते यथायोग्यमन्येऽपि शस्यन्ते गृहकर्मणि॥

अहिताश्च
१६. १९–२१

कर्णिकारधवप्लक्षकपित्थविषमच्छदाः।
शिरीषोदुम्बराश्वत्थशेलुन्यग्रोधचम्पकाः।
निम्बाम्रकोविदाराश्चाग्न्याधिघाताश्च गर्हिताः।
गृहकर्मणि नेष्टास्ते यतस्तेऽनिष्टदायिनः॥
नेष्टाः कण्टकिनः स्वादुफलाः क्षीरद्रुमाश्च ये।
सुगन्धयश्च ये तद्वद् ध्रुवं तेषु पशुक्षयः॥

वृक्ष-नक्षत्रादिज्ञानम्
१६, २२–२३॥

सत्वप्रमाणच्छाया तु नियतं दृश्यते यदा।
द्रुमच्छाया तदा ग्राह्या तत्प्रमाणस्तु स द्रुमः॥
नक्षत्रं लक्षयेद् वृक्षे पूर्वस्यां दिशि तत्स्थितेः।
स्याद् भस्याद्यक्षरं यस्य तत्र जातं तमादिशेत्॥
क्षेम्यं तं स्वामिनो वृक्षं ज्ञात्वा साधकमेव च।

वृक्षच्छेदनविधिः
तत्राशुभशुभवि-
लोकनञ्च
१६. २४–४२

अग्रन्थिकोटरं स्निग्धमृजुं सारसमन्वितम्॥
पीनस्कन्धं हरित्पत्रं वृत्तं चाभ्यर्च्य पादपम्।
द्विजान् सन्तर्प्य च स्वस्ति वाच्य च स्थपतिस्ततः॥
पक्वापक्वामिषैस्तद्वद् भूतभक्तैः सुरासवैः।
गन्धैश्च धूपमाल्यैश्च बलिं दद्यान्निशागमे॥
अपक्रामन्तु भूतानि यानि वृक्षाश्रितानि हि।
कल्पनं वर्तयिष्यामि क्रियतां वासपर्ययः॥
धन्यः शिवः पुष्टिकरः प्रजावृद्धिकरो भव।
स्वस्ति (ते?च) न्द्रानिलयमाः सूर्यरुद्रानलास्तथा॥
दिशो नद्यस्तथा शैलाः पान्तु त्वामृषिभिः सह।
जल्पेद् यो मानुषगिरा कम्पते वाभिमन्त्रितः॥
स त्याज्यः स्यात् तथा म्लानप्रवालकुसुमश्च यः।
ततो भास्करमालोक्य वृक्षं कृत्वा प्रदक्षिणम्॥
स्वस्तिवाक्येन विप्राणां छेत्ता स्थित्वोदगाननः।
प्राङ्मुखो वा तरुं छिन्द्याच्छस्त्रैः क्षौद्रार्द्रिताननैः॥
शाखिनश्छिद्यमानस्य जायते यद्यसृक्स्रुतिः।
कम्पनं वा ध्वनिर्वापि मृत्युः स्याद् गृहिणस्तदा॥
यद्वा दधिमधुक्षीरघृतानि स्रवति द्रुमः।

छिद्यमानस्तदा विद्याद् बन्धुव्याधीन् कुटुम्बिनः ॥
अतीव यस्य स्रवति श्यामः स्नेहान्वितो रसः ।
सुगन्धिः स्वल्पमधुरः कषायः स प्रशस्यते ॥
प्राच्यां शुभस्तरोः पात उदीच्यां कर्मसाधकः ।
याम्यप्रत्यङ्निपाते तु शान्तिं कृत्वा द्रुमं त्यजेत् ॥
ज्ञातितः स्यात् तदा भीतिर्यदान्यं मर्दयेत् पतन् ।
दूरं दलति यो मू (लं?ले) छिन्नो वा धरणीरुहः ॥
कूजत्यतीव वायुश्च स्मृतः सोऽथ शुभप्रदः ।
खरोष्ट्रयोः शृगालानां दर्शनं भुजगस्य वा ॥
छेदे स्यात् कर्मविघ्नाय निगडैर्बन्धनाय वा ।
हलचक्रपताकाब्जध्वजच्छत्रादिदर्शनम् ॥
श्रीवृक्षवर्धमानादिदर्शनं वा शुभप्रदम् ।
उत्क्षिप्यते यदिच्छेदात् तदर्द्धिः स्यात् कुटुम्बिनः ॥
सर्वतः परिहानिः स्याच्छिन्नश्चाक्षिप्यते यदि ।
एकवृक्षे यथोद्दिष्टलक्षणोत्क्षेपदर्शने ॥
शेषान् दोषविनिर्मुक्तान् पादपानुपलक्षयेत् ।
धीरस्तं कल्पयेत् सम्यगनुलोमार्जवं तरुम् ॥
छिन्द्याच्च शुभभागार्धदशभागाधिकं कृतम् ।
तुङ्गीसाद्यवमध्यश्च (?) सगर्भो धरणीरुहः ॥

वृक्ष-मण्डल-ज्ञानं मण्डलगतानां जन्तूनां च परिज्ञानम् १६, ४३-५१॥

ज्ञेयानि मण्डलान्यस्य त (क्षणोच्छे?क्षणे छे) दनेऽपि च ।
मञ्जिष्ठाभे विदुर्भेकं कपिलाभे च मूषकम् ॥
पीतभासि तथा गोधां सर्पं दीर्घसितायते ।
गुडच्छाये मधु भवेत् कृकलासस्तथारुणे ॥
गृहगोधा कपोताभे गौधेरो घृतमण्डभे ।
रसाञ्जनाभे शस्त्राभे कमलोत्पलभासि च ॥
धौतासियष्टिवर्णे च मण्डले जलमादिशेत् ।
आकारो यस्य सर्पस्य वर्णो वा संप्रदृश्यते ॥
तं सर्पगर्भितं वृक्षमादिशेदविचारयन् ।
तस्करेभ्यो भयं चौद्रे सलिले सलिलाद् भयम् ॥
विद्यात् सर्पे विषाद् भीतिं पाषाणे भयमग्नितः ।
अजाविगोमहिष्युष्ट्ररासभादिनिपीडितम् ।
गोधागौधेरमण्डूककृकलासैश्च गर्भिते ।
मूषके पुनरिच्छन्ति मरणं वास्तुवेदिनः ॥
अमुनैव वदन्त्यन्ये गृहपीडां मनीषिणः ।
क्षेमेण यद्यविघ्नः स्यादसङ्गश्चागमो यदि ॥

वनान्तरे तदा क्षेमं सुभिक्षं च समादिशेत् ॥
अर्घदानविधिना विधानविद् द्रव्यमागतमिहार्चयेद् गृही ।
प्रत्युपेतकुलिशायुधध्वजं द्रव्यमुज्ज्वलमुतावनीपतिः ॥

## निर्माणीयेषु—

टि०—नैकविधानि भवनानि । आवासगृहेष्वेव साधारणजनोचितनिवासभवनानि, राजोचित-भवनानीति द्वौ वर्गौ प्रमुखौ परं सन्त्यनेके नाना भवन-निवेशा अपरेऽपि येषां सर्वेषां लक्ष्यं दातव्यमस्ति । अन्योऽपि विशेषः । प्रायेण विश्वकर्मप्रभृतिशिल्पशास्त्रेषु भवनलक्षणप्रस्तावनायां प्रथमं राजभवनमुपस्थाप्यते महताभिनिवेशेनोपवर्ण्यते च । नैतद् समीचीनम् । राजभवनन्तु उत्तरो विलासः प्रथमो विलासः जन-भवनं (शाल-भवनमित्यर्थः) । समराङ्गणकर्तुर्महतीयं मनीषा । अनया दिशा प्रथमं शाल-भवनं प्रस्तूयते, पुना राज-भवनं, ततः परं तत्रैव अन्यानि विशिष्टानि भवनानि ।

### जननिवेशे –

**भवनोत्पत्तिं तद्विकासं च प्रतिपादयतां भवनपर्यायाणां सूची यथा—**

समराङ्गणे १८. ८–९

आवासः सदनं सद्म निकेतो मन्दिरं मतम् ।
संस्थानं निधनं धिष्ण्यं भवनं वसतिः क्षयः ॥
अगारं संश्रयो नीडं गेहं शरणमालयः ।
निलयो लयनं वेश्म गृहमोकः प्रतिश्रयः ॥

**भवन-जन्मनि (शालभवनोत्पत्तौ वा) आख्यानम्—**

स० सू० ९. १–३८

अथ प्राक्कथितादस्माद् भूतसर्गादनन्तरम् ।
प्रजासीदमरैः सार्धमियं पूर्णजनाकुला ॥
शोकव्याधिजरातङ्कविमुक्तास्त्रिदशा इव ।
पुराभवन् कृतयुगे पुमांसः स्थिरयौवनाः ॥
ते निकुञ्जेषु शैलानां नदीषु च सरस्सु च ।
वनेषु च विचित्रेषु चिक्रीडुर्दैवतैः सह ॥
हेलया ते समुत्पत्य कदाचिदमरैः सह ।
निरर्गलाः समासाद्य स्वर्विचेरुः सुरा इव ॥
चित्राम्बरावृताः सर्वे नानाभरणशालिनः ।
विमानाकृतयस्तेषामासन् कल्पद्रुमा द्रुमाः ॥
मनोज्ञाभिः सह स्त्रीभिर्विचित्राभर (णास्त्रि?णश्रि)यः ।
कल्पद्रुमेष्वकार्षुस्ते वासं क्रीडां च तेष्वथ ॥
क्षुत्तृड्दुःखोज्झिता सर्वे बभूवुरयुतायुषः ।
रत्नावदातदेहास्ते कदाचिद् भूरसाशिनः ॥

इतिप्रायास्तदासंस्ते स्वेच्छाहारविहारिणः ।
स्वीकारविग्रहच्छेदविशदीकृतचेतसः ॥
नास्मिन्नर्कस्तपत्युग्रं न वाति प्रबलोऽनिलः ।
नीहारच्छेदसुन्दर्यो निशाः पूर्णेन्दुभूषणाः ॥
भिन्नस्निग्धाञ्जनश्यामाः सतडिन्मन्द्रनिस्वनाः ।
अचण्डाशनयश्चासन् कवरीकान्तयो घनाः ॥
माद्यत्पिकवधूदष्टमाकन्दमुकुराङ्कुराः ।
आसन् सदापुष्पफलाभोगा येषां वनालयाः ॥
एकोऽग्रजन्मा वर्णोऽस्मिन् वेदोऽभूदेक एव च ।
ऋतुर्वसन्त एवैकः कुसुमायुधबान्धवः ॥
रूपश्रुतसुखैश्वर्यभाजस्ते निखिला अपि ।
समत्वान्नाभवद् तेषामुत्तमाधममध्यता ॥
न खेटनगरग्रामपुरक्षेत्रखलादिकम् ।
न दंशमशकक्रव्याद्भयं वा न ग्रहादि च ॥
कल्पद्रुमात्तभोगानां न चैषां प्रभुरप्यभूत् ।
पुरास्मिन् भारते वर्षे तेषां निवसतां क्षितौ ॥
जगाम सुबहुः कालः सुरैः सार्धं सुर (रित्र?श्रि) याम् ।
अज्ञाततत्प्रभावानां सहसंवाससंभवात् ॥
अथैषामभवद् दैवादवज्ञा त्रिदशान् प्रति ।
अपूज्यमानास्ते पूज्याः सर्वेऽप्यखिलवेदिनः ॥
आदाय तत्कल्पतरुं निपेतुर्द्यां दिवौकसः ।
दिवंगमनशक्तिश्च दिव्यो भावश्च तद्गतः ॥
सरसः परमो भूमौ भूरसश्च न्यवर्तत ।
स्मृत्वा कल्पद्रुमांस्तांस्तान् क्रीडास्ताश्च सुरैः सह ॥
व्यलपन् बहुधात्यर्थमनर्थकृतचेतसः ।
ततो विलपतां भूरि स्वैरमाहारहेतवे ॥
प्राणत्राणार्थमेतेषामभूत् पर्पटको भुवि ।
भूरसेनैव तेनैते कुर्वाणाः प्राणरक्षणम् ॥
विना कल्पद्रुमैर्वासमन्यवृक्षेषु चक्रिरे ।
अथैषां पश्यतामेव कदाचिद् भाग्यसंक्षयात् ॥
विपर्ययाच्च कालस्य भूमेः पर्पटकोऽप्यगात् ।
ततः पर्पटके नष्टे तुषशूककणोज्झिताः ॥
अकृष्टपच्या मेदिन्यामभवञ् शालितण्डुलाः ।
शाल्योदनेन तेनाथ सुस्वादुव्यञ्जनेन ते ॥
परमां तृप्तिमासेदुः परितोषात्तचेतसः ॥

तन्नाशशङ्कया शालितण्डुलानां द्रुमेष्वथ ॥
ते व्यधुर्महतो राशींस्तत्क्षेत्राणि च चक्रिरे ।
अजायत ततो लोभो मात्सर्येर्ष्यापुरस्सरः ॥
तत्र तत्र शनैश्चक्रे पदन्यासं च मन्मथः ।
द्वन्द्वप्राप्त्या ततस्तेषां विश्रतामुत्तमां गतिम् ॥
धैर्यध्वंसादभूत् स्त्रीषु भृशं रागतुरङ्गमः ।
दारक्षेत्रनिमित्तानि भूयांस्येषामनन्तरम् ॥
परिक्लेशैकमूलानि द्वन्द्वान्यासन् पृथक्पृथक् ।
ततः स्वक्लृप्तमर्यादोच्छेदिष्वेष्वजितात्मसु ॥
अविनीतेष्वभाग्येषु स शालिस्तुषतामगात् ।
प्रवृद्धरजसां तेषां सा पुण्यश्लोकता गता ॥
मलप्रवृत्तिरभवत् तुषधान्योपसेवया ।
तुषधान्ये ततो नष्टे परिभुक्ते च सञ्चये ॥
चीरवल्कलवस्त्राणां कन्दमूलफलाशिनाम् ।
ऋतवः कालपर्यासात् षट् वसन्तादयोऽभवन् ॥
ततस्तेषामभूद् दोषरोगशोकाकुलं वपुः ।
मनश्च कामक्रोधेर्ष्यादैन्यासूयादिदूषितम् ॥
आधिदैवकमुष्णाम्बुशीतादिजनितं महत् ।
आधिभौतिकमप्यासीद् दुःखं व्यालमृगादिजम् ॥
इत्थं दुःखत्रयार्त्तास्ते व्यवायाद्यभिगुप्तये ।
हिमनीहारशीताम्बुवाताद्यापच्छिदेऽपि च ॥
अजातप्रीतयो वृक्षैः कुट्टिमानि गृहाणि (ते?च) ।
व्यधुश्छित्वाश्मभिर्वृक्षानन्यान् दुःखार्तचेतसः ॥
स्मृत्वा कल्पद्रुमाकारास्तद्रूपाणि गृहाणि ते ।
एकद्वित्रिचतुःसप्तदशशालानि चक्रिरे ॥
श(न्दा?ष्प) प्राकारपरिखेष्वाच्छन्नेषु तृणादिभिः ।
हृष्टास्तेष्वनयन् कालमासेषु गृहमेधिनः ॥
इत्यमीषु गृहिणो गृहेषु ते शीतवातजलतापनाशिषु ।
हर्षसंवलितमानसाश्चिरं सन्निरस्तविपदोऽवसन् सुखम् ॥

## तद्विकासे विविधशालभवनानामुपन्यासः—दशवर्गाश्च

स० सू०
१६. २–१०॥
(विविधाः वर्गाः)

वेश्मनामेकशालानां शतमष्टाधिकं स्मृतम् ।
द्वापञ्चाशद् द्विशालानां त्रिशालानां द्विसप्ततिः ॥
चतुःशालानि वेश्मानि यानि तेषां शतद्वयम् ।
पञ्चाशच्चाधिका षड्भिर्विज्ञातव्या मनीषिभिः ॥

सहस्रं पञ्चशालानां स्यात् तथा पञ्चविंशतिः ।
षट्शालानां षण्णवतिः स्यात् सहस्रचतुष्टयम् ॥
अष्टाङ्के त्वेकशालस्य भेदाः पञ्चाशदीरिताः ।
द्विशालानां तु सर्वेषां प्रभेदाः शतपञ्चकम् ॥
शतं शतं च प्रत्येकं त्रिशालानामुदाहृतम् ।
द्विचत्वारिंशदधिकं चतुःशालशताष्टकम् ॥
द्विनवत्युत्तराण्येवं शतानि दश च सप्त च ।
षोडशैव सहस्राणि षोडशोना चतुःशती ॥
वेश्मानि सप्तशालानि भवन्ति परिसङ्ख्यया ।
पञ्चषष्टिसहस्राणि तथा पञ्चशतानि च ॥
गृहाणामष्टशालानां षट्त्रिंशदपरा भवेत् ।
लक्षद्वयं सहस्राणि द्विषष्टिः शतमेव च ॥
गृहाणां नवशालानां चत्वारिंशच्चतुर्युता ।
दशलक्षसहस्राणि चत्वारिंशत् तथाष्ट च ॥
शतानि दशशालानां पञ्च षट्सप्ततिस्तथा ।

## शालगृह-संयोजनम्

वास्तुम० ६. २८-३२

एकद्वित्रिचतुःशालं गृहं प्रस्तारतो भवेत् ।
पञ्चादिदशशालान्तं तेषां संयोगतो मिथः ॥
गृहाणां पञ्चशालानां षड्विधा योजना मता ॥
नवधा रसशालानां सप्तशाले शिवोन्मिता ॥
अष्टशाले तिथिमिता नवशालेऽष्टभूमिता ।
योजना दशशालायां त्रयोविंशतिधा मता ॥

## भवनाङ्गानां निघण्टुः—स० सू० १८. १०–५८

| | |
|---|---|
| १. हर्म्यम् | गृहस्योपरिभूमिर्या हर्म्यं तत् परिकीर्तितम् । |
| २. सोपानम् | तस्यारोहणमार्गो यः सोपानं तत् प्रचक्षते ॥ |
| ३. अधिरोहणम् | काष्ठकैर्यत्र रचितं स्थूणयोरधिरोहणम् । |
| ४. निःश्रेणिः | सा निःश्रेणिरिति प्रोक्ता सोपानैर्विपुलैः पदैः ॥ |
| ५. काष्ठविटङ्कः | स्मृतः काष्ठविटङ्कोऽसौ यत्काष्ठैः संवृतं गृहम् । |
| ६. सौधम् | सुधालिप्ततलं हर्म्यं सौधं स्यात् कुट्टिमं च तत् ॥ |
| ७. अभिगुप्तिः | वर्षाभयेन या छन्ना तालशाकदलादिभिः । |
| | स्मृताभिगुप्तिरन्तस्था सर्वोपरि गृहस्य सा ॥ |
| ८. अवलोकनम् | वातायनं तु भित्तीनामवलोकनमुच्यते । |
| ९. अवलोकनकम् | लघुर्वातायनो यः स्यादवलोकनकं हि तत् ॥ |

| | |
|---|---|
| १०. उल्लोकः | हर्म्यस्य मध्ये यच्छिद्रं स उल्लोक इति स्मृतः। |
| ११. हर्म्यप्राकारकः | हर्म्यप्राकारकः स स्यात् कण्ठा हर्म्यतलस्य या॥ |
| १२. वितर्दिका | वितर्दिकाष्टमाला स्यात् सर्वतश्छेदमूलगा। |
| १३. ईहामृगाः | तस्तम्भेषु मृगा ये तु ते स्युरीहामृगा इति॥ |
| १४. निर्यूहः | निर्यूहो हर्म्यदेशाद् यः काष्ठानामुपनिर्गमः। |
| १५. वलीकम् | वलीकमिति विज्ञेयं काष्ठं छेदाद् विनिर्गतम्॥ |
| १६. चतुश्शालम् | छन्नैश्चतुर्भिः पार्श्वैर्यत् तच्चतुश्शालमुच्यते। |
| १७,१८. त्रिशालद्विशाले | त्रिभिस्त्रिशालं तत् प्राहुर्द्वाभ्यां तत् स्याद् द्विशालकम्॥ |
| १९. एकशालम् | एकशालकमेकेनच्छन्नेन गृहमुच्यते। |
| २०. शाला | गृहमेकं तु यच्छन्नं सर्वं शालेति सा स्मृता॥ |
| २१. वापी, २२. पुष्क० | शालानां यत् पुनर्मध्यं वापी पुष्करिणी च सा। |
| २३. गर्भगृहम् | संछन्ना (चा?सा) पि यस्य स्यात् तद् गर्भगृहमुच्यते। |
| २४. महाजनस्थानम् | गृहे महाजनस्थानं त्रिकुड्यं यत् प्रकल्पितम्। |
| २५. उपस्थानम् | उपस्थानं तदत्राहुः स्याच्चोपस्थानकं लघु॥ |
| २६. प्रासादः | प्रासादस्तु स एव स्यादल्पा प्रासादिका स्मृता। |
| २७. वलभी | दीर्घप्रासादिका यासौ वलभीत्यभिधीयते॥ |
| २८. अलिन्दः | शालाग्रे वलभी या स्यादलिन्देति वदन्ति ताम्। |
| २८. वलभा | शालां विना तु वलभी वलभेति निगद्यते॥ |
| २९. अपवरकः | अल्पाल्पास्तु चतुष्कुड्या ये तेऽपवरका मताः। |
| ३०. शुद्धान्तः | गृहे चाभ्यन्तरस्थानं शुद्धान्तमिति कीर्त्यते॥ |
| ३१. प्रतोली | प्रतोलीं तां विदुर्लोकः सुरङ्गामिव यां वसेत्। |
| ३२. कक्षा | सा कक्षेत्युदिता तज्ज्ञैर्यदवस्थान्तरं गृहे॥ |
| ३३. कोष्ठका | यदुपस्थानकं नाम ये चापवरकास्तथा। |
| ३४. भित्तिः | ते कोष्ठका या तु कण्ठा कुड्यं भित्तिश्चयश्च सा॥ |
| ३५. महानसम् | भक्तशाला भवेद् या तु तन्महानसमुच्यते। |
| ३६. द्वारकोष्ठकम् | यच्छन्नं द्वारदेशे तु तमाहुर्द्वारकोष्ठकम्॥ |
| ३७. प्रवेशनम् | प्रवेशनमिति प्राहुर्द्वारनिर्गमनं तथा। |
| ३८. उदकभ्रमः | जलनिर्गमनस्थानं विज्ञेयमुदकभ्रमः॥ |
| ३९. भवनाजिरादि | भवनस्याङ्गणं यत्तु तदाहुर्भवनाजिरम्। |
| ४०. वनाजिरम् | वनाजिरं वनमही स्वाश्रमाजिरमाश्रमे॥ |
| | उत्तरोदुम्बरस्याधः श्लिष्टां मध्ये च कुड्ययोः। |
| ४१. देहली | तज्ज्ञास्तां देहलीत्याहुः कपाटाश्रयमेव च॥ |
| ४२. कपाटम् | कपाटं द्वारपक्षः स्यात् कपाटपुटमेव च। |
| | पक्षः पिधानो वरणो द्वारसंवरणं तथा॥ |
| | कपाटं संपुटस्ते द्वे(?)कपाटयुगलं च तत्। |

४३. अर्गला कलिका द्वारबन्धार्थो या स्यात् तामर्गलां विदुः॥

४४. अर्गलसूची सा स्यादर्गलसूचीति यदि दीर्घा प्रमाणतः।

४५,४६. परिघः, फलिहः पुराणां सा तु परिघः फलिहो गजवारणम्॥

छिद्रैर्गवाक्षप्रतिमश्छिद्रितं सर्वतस्तु यत्।

४७,४८. फलकम् गवाक्षः फलकं तद् गवाक्षः स्याज्जालमित्यपि कथ्यते॥

हर्म्यद्वारे गृहद्वारे तथा हर्म्यावलोकने।

४९. प्रासादिका प्राकारान्तरपृष्ठे तु या च प्रासादिका भवेत्॥

५०. तोरणम् पार्श्वयोरुभयोरेषां फलकद्वयमुच्छ्रितम्।

उपर्युपरि संक्षिप्तमर्धचन्द्रद्वयाकृति॥

आनने द्वे यथा चास्मिन् शिलष्टैरग्र्यैर्महाधरैः।

तयोरुपरि सन्धौ च तारकाकृति मण्डलम्॥

तत्तोरणमिति प्रोक्तं यच्च तेन परिष्कृतम्।

५१,५२,५३. सुवर्ण-मणि-पुष्पतोरणानि सुवर्णतोरणं च स्यान्मणितोरणमेव च॥

पुष्पतोरणमप्येतत् क्रियते पुष्पकादिभिः

५४. सिंहकर्णः तोरणाग्रे ठकारो यः सिंहकर्णः स उच्यते॥

५५. संयमनम् नाम्ना संयमनानीति गृहसञ्चरभूमयः।

गृहस्य पार्श्वे यद्यस्मिस्तत् तत्संयमनं विदुः॥

५६. मरालपाली भित्तेर्यद्वाथ दारूणां तरङ्गाग्रवदानतम्।

५७. प्रणाली मरालपाली सा हर्म्या (व्) प्रणाली निर्गमोऽम्भसः॥

५८. प्राकारः प्रद्वारम् स च प्राकार इत्युक्तः कण्ठः स्यादङ्गणस्य यः।

द्वारस्य तु समीपे यत् प्रद्वारं तदिहोच्यते॥

५९. आस्थालकम् यदिष्टकचितं मूले द्वारस्य भवति स्थलम्।

दीर्घं वा ह्रस्वमथवा तदास्थालकमिष्यते॥

६०. अमेध्या अवस्करः मूत्रभूमिरमेध्येति वर्चस्कोवस्करस्तथा।

६१. परिसरः गृहाच्च भित्तिसामान्यं बाह्यं परिसरो मतः॥

६२. अट्टः विस्तीर्णमुच्छ्रितं यत् स्याद् वेश्म सोऽट्ट उदाहृतः।

६३. अट्टालकः संक्षिप्तमेतदेवोक्तं तज्ज्ञैरट्टालकाख्यया॥

६४. अट्टाली तदेवात्यन्तसंक्षिप्तमट्टालीति निगद्यते।

६५. अट्टालिका अट्टाली या तु नात्युच्चा तामत्राट्टालिकां विदुः॥

६६. धारागृहम् एकनाडीगतच्छिद्रैः काष्ठनालैः परिश्रितम्।

यत्र काष्ठप्रणालीति छदपृष्टेऽम्बु धावति॥

स्तम्भशीर्षकरूपाणि काष्ठमूलाश्रितानि च।

सुषिराणि प्रयत्नेन काष्ठनाडीमुखान्तरैः (?)॥

रूपाणामथ तेषां तु स्तननासामुखादिभिः।

नानास्थानस्थितानां च वृषवानरदंष्ट्रिणाम्॥

कृतसूक्ष्मान्तरच्छिद्रैः प्रवर्षति समन्ततः ।
तद्धारागृहमित्युक्तं धारागारादिनामभृत् ॥

६७. दर्पणगृहम् कांस्यैर्लोहैस्तथा पट्टैर्निमृष्टादर्शनिर्मलैः ।
निचिता यस्य भित्तिः स्यात् तद् दर्पणगृहं विदुः ॥

६८. पक्षद्वारम् पक्षद्वारं तदत्राहुर्यन्महाद्वारतोऽपरम् ।

६९. गोपुरम् तत् प्राकाराश्रितं द्वारं पुरे तद् गोपुरं विदुः ॥

७०. उपकार्या निर्गताश्चोच्छ्रिताश्चैव प्राकारस्यान्तरान्तरा ।

७१. चौमः उपका (र्या?र्या) इति प्रोक्ताः चौमाश्चाट्टालका मताः ॥

७२. पुरीसंवरणम् चयप्राकारशालाः स्युः पुरीसंवरणाभिधाः ।

७३. उपनिष्कला प्राकारादनुपालास्तु प्राकार उपनिष्कला (?) ॥

७४. क्रीडागृहम् क्रीडागृहं यदारामे तदुद्यानं प्रचक्षते ।

७५,७६.जलोद्यान-जलवेश्मनी तीरेऽम्भसो जलोद्यानं जलवेश्माम्बुमध्यगम् ॥

७७. क्रीडागारम् क्रीडागृहं यदत्रोक्तं क्रीडागारं तदुच्यते ।

७८. विहारभूमिः विहारभूमिराक्रीडभूमिरित्यभिधीयते ॥

७९. चैत्यादिदेवता-यतनम् देवधिष्ण्यं सुरस्थानं चैत्यमर्चागृहं च तत् ।
देवतायतनम् प्राहुर्विबुधागारमित्यपि ॥

८०. गोष्टम् छन्नं भवेद् यत्तु महाजनस्य स्थानं सभा सा कथिता च शाला ।
गवां पुनर्मन्दिरमत्र गोष्टमाचक्षते वास्तुनिवेशविज्ञाः ॥

टि०—आवासभवनेष्वपि देवभवनेष्विव—उपपीठ-विधानम्, अधिष्ठानविधानम्, प्रस्तर-विधानम्, सन्धिकर्म इत्यादीनां प्रसङ्गः । तत्तास्तान्यत्र न दीयन्ते । प्रासाद-वास्तु-खण्डे तु वक्ष्यन्त एव ।

गृहभेदाः अथेदानीं प्रवक्ष्यामि गृहस्योत्पत्तिलक्षणम् ।
गृहोत्पत्तिर्व्याख्या च उत्पद्यते यथात्वाद्यं गृहादीनां तु सम्भवम् ॥
अ० पु० ६६. १-१२ आचार्यैर्दिव्यज्ञानैश्च पूर्वानतपद्मासनैः ।
पडिका (घटिका?) याम्यहस्तेषु त्रिपातहस्तोद्भूता? ॥
पडिका संस्थिता पृथ्वी तत्र नाद्यबिन्दूद्भवाः? ।
बिन्दूलया शिवा ज्ञेया सा सृष्टिश्चैवमुद्भवः? ॥
बिन्दु वामा कृता रेखा वामावर्ते पूर्वोदिताः ।
पूर्वापरगतास्त्वेवं सृष्टिसंज्ञाविधानकम्? ॥
ऐशान्या अग्निपर्यन्तमाश्रमं वस्तुसम्भवम् ।
आश्रयन्ति समस्ताश्च जीवा महितचेतसः ॥
आग्नेयां निर्ऋतिर्यावत् सदा सृष्टिर्विनश्यति ।
इत्यमालयसंज्ञा स्यात् सृष्टितोऽयं समुद्भवः ॥
आलयः सर्वसत्त्वानां सर्वभूतात्मनां हितः ।

तदेवं लीयते सर्वमालयादिसमुद्भवम् ॥
नैर्ऋत्यनिलसंभूता सृष्टिस्त्वेवं समुद्गता ।
कोष्ठकाभिधानमेतद् चतुरश्रीकृतं शुभम् ॥
आच्छादितं तथा चोर्ध्वं तच्च कोष्ठाभिधानकम् ।
कोष्ठकं चतुर्हस्तान्तमाच्छाद्यं छाद्यकं विदुः ॥
आच्छाद्यं तु यदा क्षेत्रमेकहस्ताच्छतार्धतः ।
आवेष्टितं खलीपाटं फलकं स्याद् गृहाङ्गणम् ॥
एकद्वित्रिसहस्रैश्च हस्तैर्मानसमन्वितम् ।
नगरेषु तथावेष्टकूटप्राकारसंज्ञितम् ॥
चतुर्हस्तादितः क्षेत्रं शिरश्छाद्यं समोदये ।
पूर्वं चैकद्वारयुतं गृहसंज्ञं तदुच्यते ॥

द्वारभेदैः गृहभेदा एकद्वारं भवेद्वेश्म पूर्वापरद्वारनिलयः ।
६६. १३ त्रिद्वारं करणं प्रोक्तं चतुर्भिश्चातुरं भवेत् ॥
तेषां षट्छन्दांसि षड्जात्युत्पन्नच्छन्दा भद्रैर्भिन्ना द्विरष्टभिः ।
६६. १४-१६ इत्युक्तक्रमरूपाख्या गृहसङ्ख्या त्वनेकधा ॥
तृणपट्टौ छादने स्तः वाजिच्छन्दः शिलामयः ।
खण्डच्छन्दो गृहमध्यं पूर्णच्छन्दो ह्यधोगृहम् ॥
पाण्डुच्छन्दस्तथाचैव भूम्यूर्ध्वं शैलजाश्रितः ।
षण्णां तु छन्दसां प्रोक्तः सृष्टिकाले समुद्भवः ॥
हर्म्यव्याख्या एकभौमं द्विभौमं वा हर्म्यं स्याद्वा त्रिभौमकम् ।
६६. १७ पट्टच्छन्दादिका भेदा हर्म्यादिवेश्मसंज्ञकाः ॥

**शाल-भवन-प्रभेदाः**
**(एकशालादिदशशालान्तशालभवनानां लक्षणम्)**

स० सू० २३. १-४ गृहाणामेकशालानां वक्ष्यामो लक्षणान्यथ ।
शस्तानां निन्दितानां च यथावदनुपूर्वशः ॥
एकशालस्य विन्यसेच्चतुरः पूर्वं गुरून् वर्णान् यथाविधि ।
उत्पत्तिप्रसरः एभ्य एव प्रसूयन्ते भेदाः षोडश वेश्मनाम् ॥
गुरोरधो लघुं न्यस्येत् पूर्वं शेषं यथोपरि ।
गुरुभिः पूरयेत् पश्चाद् यावत् स्युर्लघवोऽखिलाः ॥
विद्यादलिन्दान् सर्वेषु लघुस्थानेषु पण्डितः ।
सव्यावर्तं गृहमुखादेतांश्च विनियोजयेत् ॥
प्रथमः प्रकारः एषामलिन्दसंयोगाद् भवनानां पृथक् पृथक् ।
२३. ५-११॥ नामानि गुणदोषाश्च वक्ष्यन्तेऽनुक्रमादतः ॥
ध्रुवं धन्यं जयं नन्दं खरं कान्तं मनोरमम् ।

सुमुखं दुर्मुखं क्रूरं सुपक्षं धनदं क्षयम् ॥
आक्रन्दं विपुलं चैव विजयं गृहमुत्तमम् ।
ध्रुवे जयमवाप्नोति धन्ये धान्यागमो भवेत् ॥
जये सपत्नाञ्जयति नन्दे सर्वाः समृद्धयः ।
खरमायासदं वेश्म कान्ते च लभते श्रियम् ॥
आयुरारोग्यमैश्वर्यं तथा वित्तस्य सम्पदः ।
मनोरमे मनस्तुष्टिर्गृहभर्तुः प्रकीर्तिता ॥
सुमुखे राज्यसन्मानं दुर्मुखे कलहः सदा ।
क्रूरव्याधिभयं क्रूरे सुपक्षे गोत्रवृद्धिकृत् ॥
धनदे हेमरत्नादि गाश्चैव लभते पुमान् ।
क्षयं सर्वक्षयं गेहमाक्रन्दं ज्ञातिमृत्युदम् ॥
आरोग्यं विपुले ख्यातिर्विजये सर्वसम्पदः ।

अलिन्दसंयोगादन्यः प्रकारः २३. १२–१६॥

यदि धन्ये द्वितीयोऽपि मुखालिन्दः प्रयुज्यते ॥
तद् गृहं रम्यनामेह भर्तुः सौभाग्यकारकम् ।
मुखालिन्देन नन्दाख्यं द्वितीयेन सुयोजितम् ॥
तच्छ्रीधरमिति ख्यातं तस्मिन् श्रीर्नित्यमाविशेत् ।
अलिन्दश्चेद् द्वितीयोऽपि कान्तस्यास्ये नि॰श्यते ॥
मुदितं तद् भवेद् भर्तुर्भूतिकृद् भवनोत्तमम् ।
सुमुखस्य यदालिन्दो वक्त्रेऽन्यो विनिवेश्यते ॥
वर्धमानं तदा तत् स्यात् स्वामिलक्ष्मीविवर्धनम् ।
क्रूरं युक्तं द्वितीयेन मुखालिन्देन मन्दिरम् ॥
करालं तद् विजानीयाद् भर्ता तस्य विनश्यति ।
अलिन्देन द्वितीयेन धनदं योजितं पुनः ॥
सुनाभं तद् भवेत् तस्मिन् पशून् पुत्रानवाप्नुयात् ।
आक्रन्दस्य पुरोभागे यद्यलिन्दः कृतोऽपरः ॥
ध्वाङ्क्षसंज्ञं गृहं तज्ज्ञा निन्दितं प्रवदन्ति तत् ।
द्वितीयालिन्दघटना विजयस्य मुखे यदि ॥
तत् समृद्धमिति ख्यातं गृहं स्यात् पुण्यकर्मणाम् ।

द्वितीयः प्रकारः २३. २०–२३॥

यान्युक्तानि ध्रुवादीनि पूर्ववेश्मानि षोडश ॥
शालाविभागं ज्ञात्वैषां तिर्यक् षड् दारु विन्यसेत् ।
षोडशान्ये च भेदाः स्युः संज्ञाश्चैषामनुक्रमात् ॥
सुन्दरं वरदं भद्रं प्रमोदं विमुखं शिवम् ।
सर्वलाभं विशालं च विलक्षमशुभं ध्वजम् ॥
उद्योतं भीषणं शून्यमजितं कुलनन्दनम् ।
नामभिर्वेश्मनामेषां गुणदोषान् प्रकल्पयेत् ॥

यथार्थनामान्येतानि यस्मात् प्रोक्तान्यविस्तरात्।

तृतीयः प्रकारः एभ्य एवापराणि स्युर्वेश्मान्यन्यानि षोडश॥

२३. २४-२६॥ शालापुरोविनिर्युक्ततिर्यक्पड्दारुकारणात्।

हंसं सुलक्षणं सौम्यं जयन्तं भव्यमुत्तमम्॥

रुचिरं सम्भृतं क्षेममाक्षेमं सुकृतं वृषम्।

उच्छ्रुन्नं व्ययमानन्दं सुनन्दं चेति कीर्तितम्॥

एषामपि यथार्थत्वाद् गुणदोषान् निरूपयेत्।

चतुर्थः प्रकारः शालामध्ये च तिर्यक्स्थं षड्दारु विनिवेशयेत्॥

२३. २७-३० विहाय मर्मणां वेधानमीषामेव वेश्मनाम्।

षोडशैव परेऽपि स्युर्भेदास्तांश्च यथाक्रमम्॥

कथयामः समासेन यथार्थैरेव नामभिः।

अलङ्कृतमलङ्कारं रमणं पूर्णमम्बरम्॥

पुण्यं सुगर्भं कलशं दुर्गतं रिक्तमीप्सितम्।

सुभद्रं वन्दितं दीनं विभवं सर्वकामदम्॥

पञ्चमः प्रकारः शालान्तःस्थितषड्दारु पश्चादपवरैः कृतैः।

२३. ३१-३३ एभ्योऽपरेऽपि निर्दिष्टा भेदाः षोडश वेश्मनाम्॥

प्रभवं भाविकं क्रीडं तिलकं क्रीडनं सुखम्।

यशोदं कुमुदं कालं भासुरं सर्वभूषणम्॥

वसुधारं धनहरं कुपितं चित्तवृद्धिदम्।

कुलोदयं च विज्ञेयं गुणदोषास्तु पूर्ववत्॥

षष्ठः प्रकारः अनन्तरमिहोक्तानि यानि वेश्मानि षोडश।

२३. ३४-३७॥ प्रत्येकं तान्यलिन्देन परि (कु?क्ल) प्तचतुर्दिशम्॥

तद्भेदेभ्यः प्रसूतानि कथयामो विधानतः।

चूडामणि प्रभद्रं च क्षेमं शेखरमद्भुतम्॥

विकाशं भूतिदं हृष्टं विरोधं कालपाशकम्।

निरामयं सुशालं च रौद्रं मोघं मनोरथम्॥

सुभद्रं चेति सदनं संज्ञाभिरुपलक्षयेत्।

वेश्मनामेकशालानां शतं स्याच्चतुरुत्तरम्॥

कथितं तच्च संस्थानैर्नामभिश्च यथाक्रमम्।

अन्तिमः विशिष्टः हस्तिनी महिषी गावी छागली च यथाक्रमम्॥

प्रकारः तद्द्वयेन द्विपूर्वाणि ब्रूमो नामानि वेश्मनाम्।

२३. ३८-४१॥ द्विहंसकं द्विचक्राह्वं द्विसारसमथापरम्॥

द्विकोकिलं बुधैः ख्यातं हस्तिन्यादेः क्रमाद् गृहम्।

त्रीण्यायुः पशुधान्यानां क्रमादाद्यानि वृद्धये॥

एतेषामेव नाशाय भवेद् वेश्म द्विकोकिलम्।

इत्येकशालभवनान्युदितान्यलिन्द-
षड्दारुकापवरकावरणादिभेदैः ।
संज्ञा च लक्षणफलैः करिणीमुखाभिः,
शालाभिरेवमपराणि च युग्मजानि ॥

द्विशालस्य षट् मुख्यभेदाः २२. २,७–६॥

सिद्धार्थं यमसूर्यं च दण्डाख्यं वातसंज्ञितम् ।
चुल्ली काचं च मुख्यानि द्विशालानि षडेव हि ॥
हस्तिनी महिषी चेति द्वे शाले यत्र वेश्मनि ।
तत् सिद्धार्थमिति ज्ञेयं वित्तसम्पत्तिकारकम् ॥
मृत्युदं महिषीगावीभ्यां भवेद् यमसूर्यकम् ।
दण्डं स्याच्छगलीगावीशालाभ्यां दण्डभीतिदम् ॥
वातं करेणुच्छालीयुक्तमुद्वेगकारकम् ।
महिष्यजाभ्यामुद्वेगकरी चुल्ली धनापहा ॥
काचं करेणुगावीभ्यां सुहृत्प्रीतिविनाशनम् ।

भेदोपभेदाः २२. १०–२०॥

एकमूषममूषं च न द्विशालेषु कारयेत् ॥
व्यत्यासात् काचचुल्ल्योश्च सर्वाभिस्तिसृभिस्तथा ।
चत्वार्याद्यानि भिद्यन्ते लघुप्रस्तारयोगतः ॥
प्रत्येकमेकादशधा मन्दिराण्यभिधानतः ।
अन्ये चतुर्धा भिद्यन्ते प्रत्येकं द्वे निवेशने ॥
एषां मूषा भिदाभेदात् तद्वाह्यावाहहेतुकाः ।
वसुधारं भवेत् तेषामाद्यं सिद्धार्थकं ततः ॥
कल्याणकं शाश्वतं च शिवं कामप्रदं तथा ।
श्रीदं शान्तं निष्कलङ्कं धनाधीशं कुबेरकम् ॥
सिद्धार्थमनुजान्येवमेतान्येकादश क्रमात् ।
संहारं यमसूर्यं च कालं वैवस्वतं यमम् ॥
करालं विकरालं च कबन्धं मृतकं शवम् ।
यमसूर्यस्य भेदाः स्युः स नो महिम्नं तथा ॥
प्रचण्डचण्डे दण्डाख्यमुद्दण्डं काण्डकोटरे ।
विग्रहं निग्रहं धूम्रं निर्धूमं दन्तिदारुणम् ॥
एकादशामी दण्डस्य भेदा दण्डभयप्रदाः ।
मरुत्पवनवाताख्यान्यनिलं सप्रभञ्जनम् ॥
घनार्यम्बुदध्वंसि प्रलयं कलहं कलिः ।
कलिचुल्ली च वातस्य भेदा उद्वेगदायकाः ॥
रोगं चुल्ल्यनलं भस्म चुल्ल्या भेदचतुष्टयम् ।
काचस्य नुच्छलं काचं कुलघ्नं च विरोधि च ॥
द्वापञ्चाशद् द्विशालानाममी भेदाः प्रकीर्तिताः ।

त्रिशालस्य मुख्य-भेदाश्चत्वारः २१. १–२

अथ द्वासप्ततेर्ब्रूमस्त्रिशालानां यथाक्रमम्।
अभिधानानि कार्त्स्न्येन लक्षणानि पृथक्पृथक्॥
मुख्यानि तेषु चत्वारि कथ्यन्ते तानि नामतः।
हिरण्यनाभं सुक्षेत्रं चुल्ली पक्षघ्नमेव च॥

भेदोपभेदाः २१, ३–१७॥

हिरण्यनाभमुत्कृष्टं हीनमुत्तरशालया।
तत् स्याद् धनप्रदं भर्तुः सुक्षेत्रं पूर्वया विना॥
सुक्षेत्रं लक्षणोपेतंमृद्धिवृद्धिप्रदं विभोः।
चुल्ली दक्षिणया हीना शालया वित्तनाशिनी॥
पक्षघ्नं पश्चिमाहीनं वैरकृत् कुलनाशनम्।
अलिन्दयोगादेतेषां लघुप्रस्तारयोगतः॥
मूषायोगाच्च भेदाः स्युरष्टादश पृथक्पृथक्।
जाम्बूनदं हिरण्याख्यं रुक्माख्यं हेमसंज्ञितम्॥
कनकं काञ्चनं स्वर्णं सुवर्णं च ततः परम्।
सन्तापसंज्ञं सारं च तथा चामीकराह्वयम्॥
तपनं तापनीयं च शातकुम्भमथापि च।
हिरण्यनाभं कल्याणं भूषणं भूतिभूषणम्॥
भेदा हिरण्यनाभस्येत्यष्टादश भवन्त्यमी।
नागं सूर्यप्रभाख्यं च मत्तवारणकं तथा॥
चतुर्थं केसरीत्युक्तं वासवं चेन्द्रमेव च।
हरिहंसं सारसा (खं?ख्यं) कुञ्जरं तोयदं तथा॥
मेघमालाभिधानं च धारासारं महोदरम्।
कर्दमं नामतश्चान्यत् सुक्षेत्रं प्रकरं तथा॥
सुक्षेत्रानुगतान्याहुस्तथान्यद् धान्यपूरकम्।
चुल्लीभेदानथ ब्रूमस्तेषामाद्यं भुजङ्गमम्॥
निर्जीवाख्यं विहङ्गं च नकुलं पन्नगाह्वयम्।
शतच्छिद्रं च सर्पं च कोपसंज्ञं भगन्दरम्॥
उद्वेजनाख्यं सन्न्यासं निस्तोषं करुणाननम्।
वारणं दारणं चुल्ली ककुदं कन्दरं तथा॥
इति चुल्लीप्रभेदेषु मन्दिराणि दशाष्ट च।
ब्रूमः पक्षघ्नसंबद्धगृहनामानि सम्प्रति॥
राक्षसं ध्वान्तसंहारं देवारि सुरदारुणम्।
घोषणं व्याघ्रशार्दूले शोषणाख्यं विशोषणम्॥
मृत्युदं च निरानन्दं शाकुनं विघ्ननिर्घृणे।
रिपुसंहदपक्षघ्ने सुतघ्नं वैरिपूरणम्॥
इत्यष्टादश पक्षघ्नभेदाः प्रोक्ता यथाक्रमम्।

| | |
|---|---|
| चतुश्शालस्य विप्रादिविषये मानविकल्पाः १६. १९–२१ | वर्णिनां स्याच्चतुःशालं मितं द्वात्रिंशता करैः ।<br>सेनापतेश्चतुःषष्टिस्तद्वदेव पुरोधसः ॥<br>श्रेष्ठमष्टशतं राज्ञामेतानि तु यथाक्रमम् ।<br>चतुः षडष्टहान्या स्युः पञ्चमं च पृथक् पृथक् ॥<br>विशोधयेत् कनीयोभिर्मध्यमानि यथाक्रमम् ।<br>नरेन्द्रपुरुषाणां स्युर्वेश्मान्येतानि वृद्धये ॥<br>गृहाणि शोधयेत् प्राग्वज्ज्यायांस्यपि च मध्यमैः ।<br>भवन्त्येता भूपानां रतिकोशप्रतिश्रयाः ॥<br>दशांशयुक्तो विस्तारादायामो विप्रवेश्मनाम् ।<br>अष्टषट्चतुरंशाढ्यः चत्रादित्रयवेश्मनाम् ॥<br>यो विस्तारः स एव स्यादायामोऽस्मिन् यथाक्रमम् ।<br>विट्शूद्रयोः स्यादाधिक्यं मध्ये ज्येष्ठे च सद्मनि ॥<br>कर्णसूत्राद् वहिः स्तम्भान् न्यसेत् सर्वान् प्रयत्नतः ।<br>धाम्नां षोडशहस्तानां पञ्चानां चतुरुत्तरा ॥ |
| तेषु शालालिन्दादिप्रमाणम् १६. २२–२८ | वृद्धिः शालास्तु तेषां स्युश्चतुरंशेन विस्तृता ।<br>शालाव्यासार्धतोऽलिन्दः सर्वेषामपि वेश्मनाम् ॥<br>तस्याः षोडशहस्ते स्यात् पञ्चमांशद्वयेन वा ।<br>सप्तमांशत्रयेण स्याद् द्वयोरपरवेश्मनोः ॥<br>अन्त्ययोर्हस्तयोः स स्याच्चतुर्भिर्नवमांशकैः ।<br>पञ्चभिः षड्भिरेभिश्च सार्धैः साङ्घ्रिनगैः करैः ।<br>दैर्घ्यं स्याद् दशभिः सार्धैः शालायाः षोडशादिषु ।<br>निवेशदशमांशो यः स युतः सप्तभिः करैः ॥<br>शालाया विस्तरः प्रोक्तः श्रेष्ठानामिह वेश्मनाम् ।<br>अलिन्दमानं प्रागेव प्रोक्तं निखिलवेश्मनाम् ॥<br>यच्छालालिन्दयोः शेषं भवेद् गर्भगृहं हि तत् ।<br>मूषावच्छिन्नमिच्छन्ति शालादैर्घ्यं विपश्चितः ॥<br>शालाव्यासप्रमाणा स्यात् सर्वेषामवकोसिमा ।<br>दिशासु भवने शाला विदिशाकर्णसामयः (?) ॥ |
| मूषावकोसिमययोः स्वरूपं फलं च १६. २९–३६॥ | कर्णशाला(त?तु)या प्रोक्ता सा च ज्ञेयावकोसिमा ।<br>अलिन्दशालयोर्मध्ये या स्यान्मूषेति सा स्मृता ॥<br>पूर्वद्वारं नियम्यादावादिभूषा तदुत्तरा ।<br>मूषा भद्रा इति प्राहुस्तत्संख्यामवधारयेत् ॥<br>यावन्मूषं भवेद् वेश्म तावद् भद्रं तदुच्यते ।<br>भद्राभद्रे शक्रदिक्स्थे सौम्यासौम्ये यमाश्रिते ॥<br>शान्ताशान्ते प्रतीचीस्थे सौम्यदिक्स्थे शिवाशिवे । |

अलिन्दा इति केऽप्याहुर्मूषा इत्यपरे विदुः ॥
भद्रा इति जगुः केचिदन्ये परिसरा इति ।
एकद्वित्रिचतुःपञ्चषट्सप्ता(ष्टौ?ष्ट) क्रमेण याः ॥
मूषास्तासां प्रवहणसंज्ञाः स्युर्वेश्मनामिह ।
तासामाद्याः प्रशस्ताः स्युरप्रशस्तास्ततः पराः ॥
नामतो गुणतश्चैव शुभाशुभफलोदयात् ।
अष्टावादौ गुरून् न्यस्येत् ततश्चाद्यगुरोरधः ॥
लघुं न्यस्येत् ततः शेषान् विदधीत यथोपरि ।
गुरुभिः पूरयेदादिं यावत् स्युर्लघवोऽखिलाः ॥
आद्यपङ्क्तौ गुरुश्चैको लघुश्चैको यथाक्रमम् ।
अतः परं तु द्विगुणाः प्रतिपङ्क्ति भवन्त्यमी ॥
मूषाभेदाश्चतुःशाले षट्पञ्चाशच्छतद्वयम् ।
अलिन्दवीथीप्रग्रीवनिर्यूहकगवाक्षकैः ॥
तमङ्गभद्रविन्यासरचनाभिरनेकधा ।
अपरस्परसंबाधात् संवृतैर्विवृतैरपि ॥
गृहभेदाः प्रसूयन्ते येषां संख्या न विद्यते ।

भेद-प्रभेदाः
१६. ४०–७३

यत्संबद्धचतुश्शालममूषालिन्दकं हि तत् ॥
एकभद्रादिगेहानां ब्रूमो नामान्यतः परम् ।
यान्येकलघुलक्षाणि प्रस्तारे तानि तद्विदः ॥
कथयन्त्येवभद्राणि क्रमसंख्याविभागतः ।
प्रागायतं प्राग्विलग्नं जयं संयमनप्रियम् ॥
प्रतीच्यं प्रासविन्यासं सुभद्रं कलहोत्तरम् ।
अष्टौ तान्येकभद्राणि द्विभद्राण्यभिदध्महे ॥
पूर्वोत्तरोत्तरं पूर्वाद् भद्रादिह विधानतः ।
स्यातां प्राग्मेलकाद्यद्वत् पूर्वाद्या दक्षिणा परे(?) ॥
ईरं सुनीथमाग्नेयं द्वीपमाप्यं सुसंयमम् ।
अर्धर्चभैमं व्याकोशं नैर्ऋतं वृषभं विनम् ॥
काव्यं विपासमानीरं कान्तं सौभं विपश्चिमम् ।
गवयं श्रीवहं श्लिष्टं गणं भीममयोगमम् ॥
वतं चलं शठं कान्तमित्यष्टाविंशको गणः ।
द्विभद्राणां समाख्यातस्त्रिभद्राणामतः परम् ॥
ऐन्द्रं विलोमनायामं वधमेकाक्षमन्तिकम् ।
प्रकाशं पैत्रमायत्तं भद्रं प्रान्तं प्रसाधकम् ॥
क्षमं विघातमायातं कान्तं चित्रं द्विमन्दिरम् ।
सुदक्षिणं भयं श्लिष्टं प्रमोदं व्यायतं वियत् ॥

आप्यं सुनागं नागेन्द्रमीरितं शोभनं वनम् ।
शस्तोत्तरं कफं कर्णं क्रुष्टं क्रान्तं क्रमागतम् ॥
द्विशस्तं द्विभयं प्रोक्तं चक्रं मलश्मायतम् ।
वनं भारं सुगाराख्यमागारं वीरमेव च ॥
व्यायाममायुतं तद्वद् व्याहृतं च ततः परम् ।
दुर्गमं चोभसंज्ञं च कृत्रिमं क्षोभणं तथा ॥
चारुरुच्याभिधानं च ध्रुवं कथमिति क्रमात् ।
षट्पञ्चाशत् त्रिभद्राणि चतुर्भद्राण्यतः परम् ॥
कृतमर्चायनं पौष्णमुद्धृतं मिश्रमुत्सुकम् ।
विघ्नं विपक्षमाहूतं रुचकं वर्धनं पृथु ॥
कलहं छलमाथास्यं त्रिनाभं स्वस्तिकं स्थिरम् ॥
शरलं द्विगुणं नाद्यं चित्रं भ्रान्तं विधारणम् ।
साधारणं नतं व्यंशमृषं रोगं विशेषणम् ॥
प्रतीच्यं त्रिसमं स्वैरं सुप्रतीकं नलं क्षपम् ।
व्याप्तमाक्रीडनं व्यर्थमीशानं सुखमव्ययम् ॥
मगधं क्षिप्रमागस्त्यमेकोर्जं द्विगतं लिहम् ।
पक्वं विलोममुद्दण्डं मुण्डं मातङ्गमाखिलम् ॥
खर्वं पिनाकमुद्यन्तं विशिखं प्रसभं रजम् ।
(चुरु?रुच)कं(स?सै)फलं वामं वर्धनं धावनं सहम् ॥
चयं सेव्यं कलं तीर्णं चतुर्भद्राणि सन्ततिः ।
पञ्चभद्राण्यथोच्यन्ते षट्पञ्चाशदनुक्रमात् ॥
कानलं लोलुपं जिह्मं शृगालं सालिनं जिनम् ।
सुजयं विजयं यामं जयं ज्ञातं जयं तपम् ॥
जमं वरं चरं वैरं विशिषं सुप्रभप्रभम् ।
प्रतीक्षं त्वामिणं युक्तं शान्तं त्रैतं विनोदनम् ॥
सन्दोहं विप्रदोहं च विद्रुतं सततं ततम् ।
व्याकुलं लीनमालीनं विचित्रं लम्बनं खरम् ॥
शेखरं विबुधं चैत्रं व्यासक्तं संपदं पदम् ।
त्रिशिखं चतुरं प्रातं सुस्थितं दुःस्थितं स्थितम् ॥
चक्रं वक्रं लघुं लाभं संपर्कं मूलमव्ययम् ।
अष्टाविंशतिरन्यानि षड्भद्राणि निबोधत ॥
किन्नरं कौस्तुभं हर्म्यं धार्मिकं निषधं वसु ।
साटीकं वामनं गौरमस्थिरं क्रमिणं खलम् ॥
विवरं वालिशं धौमं त्रिपुटं मन्दिरं भवम् ।
अशोकं भास्वरं चौष्यं लातव्यं सुस्वनं मखम् ॥

वाजिनेन्त्रं अम घोषं सप्तभद्रायत्तः परम्।
भाण्डीरं वैसहं मस्थं प्रतानं वासुलं कटम्॥
लक्ष्मीवासं सुगन्धान्तमष्टधैतानि नामतः।
अन्यच्च सर्वतोभद्रमेकं भद्राभिरष्टभिः॥
संप्रकल्प्यं चतुःशालं ब्रूमश्चैषां शुभाशुभम्।
प्रदक्षिणा शुभा मूषा विपरीता विपर्यये॥
समवाये यथा भूयो जानीयात् साध्वसाधु च।
तथाष्टावेकभद्राणि सप्तभद्राणि च क्रमात्॥
द्विभद्राण्यष्टभिर्युक्ता षड्भद्राणि च विंशतिः।
षट्पञ्चाशत् त्रिभद्राणि पञ्चभद्राणि चोन्नयेत्॥
सप्ततिश्च चतुर्भद्राण्येकं भद्राभिरष्टभिः।
एवं शतद्वयं पिण्डः षट्पञ्चाशच्च वेश्मनाम्॥

गृह-विशेष-मूषास्थितिः १६, ७४–७८॥

भद्रैः पूर्वविधानेन चतुःशालक्रियादिषु।
मूषा स्यात् कुड्य जैस्तेपु चतुश्शालेषु वेश्मसु॥
अनुवंशाश्रिते मूषे स्वस्तिके तत्पराङ्मुखे।
मुखायते च पुरतो द्वे स्यातामवकोसिमे॥
नोदङ्मुखः स कर्तव्यः कार्यः प्राग्जीवसंयुतः (?)।
वर्धमाने तथा का(र्ये?र्यो) यथा प्राग्ग्रीवसंयुतः॥
वर्धमाने तथा कार्ये द्वारमूषे मुखायते।
मूषाया दक्षिणे स्यातां दीर्घवामेऽवकोसिमे॥
नन्द्यावर्तगृहे सर्वा नन्द्यावर्ता भवन्ति ताः।
द्वे (स्तरु?म्) षे रुचके स्यातामायते त्ववकोसिमे॥
सर्वद्वारवहा मूषाः सर्वतोभद्रवेश्मनि।

# तृतीयः पटलः

निर्माणीयेषु अन्येषु च—

आवासगृहेषु मुख्याष्टकं स्नानगृहम्, अलङ्करणगृहम्, द्रव्यस्थापनगृहं, पचनगृहं, पूजागृहं, भोजनगृहं, शयनगृहं, धनगृहञ्चेति। तत्र केषाञ्चिल्लक्षणम्—

भोजनशाला
चि० वा०
२२. १–१३

पृथिव्यादिमहाभूतैर्निर्मिता मानुषी तनुः।
तस्मात्तद्गुणसद्द्रव्यैस्तस्याः पोषणमीरितम्॥
यथाकालं पक्वमन्नं भक्ष्यं खाद्यञ्च लेह्यकम्।
भुञ्जीयान्मतिमान्देही स्थाने सल्लक्षणान्विते॥
तस्मात्सुखादिश्रेयोऽर्थी भोजनागारमुत्तमम्।
स्थापयेत्स्वगृहे नित्यं नैमित्तिकमिदं बुधः॥
युग्मदण्डसमोपेतं दैर्घ्ये विंशतिदण्डकम्।
नैमित्तिके कल्पने तु मध्यभित्तिसमन्वितम्॥
अथवा स्तम्भपञ्चाशद्द्वारस्तम्भद्वयान्वितम्।
पार्श्वयोरुभयोः स्थाप्यं चत्वारिंशत्पदं पृथु॥
भक्ष्यादिस्थापनार्थाय वेदिमध्येऽर्कपादिका।
वातातपप्रवेशार्हा विभक्ताङ्गणशेखरा॥
एकाङ्गणेन युक्ता वा चाङ्गणद्वयभासुरा।
शाला भैक्षुकभोज्यार्हा वेदिकोपरि कीर्तिता॥
स्निग्धं भूमितलं कार्यं दीपासनसमन्वितम्।
पीठादिरचनोपेतं कल्पयेच्च मनोहरम्॥
भैक्षुकाणां यतीनां च स्थानमन्यत्प्रकीर्तितम्।
पृथगेव तथा कल्प्यं स्थानं माणवकादिनाम्॥
पितॄणां स्थानमन्यच्च कीर्तितं तन्त्रपारगैः।
योषितां भोजनस्थानं पृथगेव प्रकल्पयेत्॥
मध्ये चत्वरसंयुक्तशालाभिस्तिसृभिस्तु वा।
द्वाभ्यामुपेतमथवा चतुरङ्गणभासुरा॥
वर्तुलादिकमेतत्तु कारयेन्न कदाचन।
वटूनां प्राङ्मुखः पीठः पितॄणामुत्तराननः॥
ऐन्द्रं वारुणकं शिल्पं पुंसां श्रेयःप्रदो मतः।
योषितां प्राङ्मुखश्शस्तः सौभाग्यतनयप्रदः॥

शय्यागृहम्
वि० वा०
२३.१–११

मनोहरस्थले शय्या बलमेधादिवर्धिनी ।
तस्मात्सर्वैः प्रकर्तव्यं शय्यागेहं मनोहरम् ॥
प्रासादशालापुरतः शालान्तःस्थलभागिके ।
अलिन्दशालयोः कल्प्यमथवा कूटसद्मसु ॥
भौमादिपून्नततलेष्वपि गन्धानिलान्विते ।
स्थलेषु नातिशीतोष्णेष्वपि शय्यास्थलं मतम् ॥
क्षुद्राधिष्ठानसंयुक्तं सोपानसहितं तु वा ।
एकद्वित्रिचतुर्द्वारं प्रान्तशालावृतं तु वा ॥
दण्डद्वयादिकं मानं शालाकारं प्रकल्पयेत् ।
अन्तर्गेहसमं वाऽपि मण्डलाकारभाक्तथा ॥
चतुरश्रं कल्पनं वा कोणपट्टादिसंयुतम् ।
युग्मवातायनयुतमेकवातायनं तु वा ॥
युग्मस्तम्भकशालं वा पट्टसोपानसंयुतम् ।
सवितानं सोपशालं पञ्जरादिसमन्वितम् ॥
मध्यवेदिकया युक्तं तत्र दीपं प्रकल्पयेत् ।
प्राच्यामुदीच्यां तु मुखं कल्पनीयं सतोरणम् ॥
ससोपानं सखट्वादि कारयेच्छिल्पवित्तमः ।
दक्षिणस्यां शिरोभागः प्रतीच्यां वा विशेषतः ॥
पार्श्वयोर्मङ्गलद्रव्यस्थापनं शुभवर्धकम् ।
मुकुरादिसमोपेतं जलपात्रेण मञ्जुलम् ॥
कल्पनीयो द्वारभागे गन्धर्वश्शरहस्तकः ।
चन्द्रस्यार्कस्य वा बिम्बं कल्पयेत्तत्र मानवित् ॥

भवन-रचनाङ्गेषु—

द्वारम्
वि० वा०
२४. ७–१४

लक्ष्मीद्वारं तु पूर्वस्थं सर्वमङ्गलदायकम् ।
द्वितीयमारोग्यदं तद्गान्धर्वं देहलीस्थले ॥
कल्पनीयमिदं प्रोक्तं शयनस्थानकेऽपि च ।
विश्वकर्म तृतीयं तु दीर्घायुःप्रदमीरितम् ॥
वैवाहिकासु शालासु शालास्वन्यासु कल्पयेत् ।
चतुर्थं वैश्रवणं धनवृद्धिकरं मतम् ॥
कोशागारेषु तत्स्थाप्यं सुमुहूर्ते शुभेऽहनि ।
पञ्चमं वारुणं प्रोक्तमारोग्यशुभदायकम् ॥
स्थाप्यं तद्भाजनागारे द्रव्यशालासु सद्मसु ।
षष्ठं तु वासवं मेधावर्धकं समुदीरितम् ॥
विद्याशालासु तत्स्थाप्यममात्यभवनेष्वपि ।
शाङ्करं वैष्णवं ब्राह्मं पूजागारं शुभप्रदम् ॥

प्राङ्मुखं वोत्तरमुखमन्यच्च शुभदं मतम्।
सौरं सत्पुत्रजनकं शालायां तत्प्रकल्पयेत्॥
चान्द्रं पुष्टिप्रदं स्थाप्यं विश्रान्तिस्थलमुख्यके।
आर्षं तु मेधाजनकं भौमशालासु कल्पयेत्॥
एवं द्वादशधा प्रोक्तं तत्तच्चिह्नैर्विनिर्णयेत्।
अन्यानि पञ्च मुख्यानि तत्र तत्र प्रकल्पयेत्॥

## द्वारशाखाः

स० सू०
२८. १४-१५

आद्या शाखा भवेद् देवी द्वितीया नन्दिनीति च।
तृतीया सुन्दरी नाम चतुर्थी स्यात् प्रियानना॥
भद्रेति पञ्चमी शाखा प्रशस्ताः पञ्च वेश्मनि।
अतोऽधिकास्तु याः शाखा गृहद्वारि न ताः शुभाः॥

द्वारभूषा
२५. १८-२१

सौवर्णं राजतं वाऽपि दारुजं पार्श्वपट्टकम्।
शुकपटं हंसपट्टं लताकुसुमपट्टकम्॥
अधःस्थले वा सर्वत्र कुमुदादींश्च कल्पयेत्।
गान्धर्वं भैरवं रूपं क्वचिद्द्वारेषु योजयेत्॥
षड्भागे प्रथमे कम्पदलपांशुकपट्टिकाः।
रचयेच्चित्रविन्यासं नेत्रानन्दकरं शुभम्॥
पटं पञ्च कुमुदं किङ्किणीं क्षुद्रपालिकाम्।
रेखावलिं तत्तु रूपमन्यच्चानन्ददायकम्॥

तोरणम्
वि० वा०
२६. १-८

तोरणं त्रिविधं कार्यं शिलादारुसुधादिभिः।
दैवं भौमं मानुषञ्च तक्षणादिप्रमाणतः॥
तत्तत्कार्येषु तद्योज्यं प्रमाणज्ञैः क्रियाकरैः।
शालान्ते चत्वरान्ते च क्वचिद्द्वारान्तरे तथा॥
कूटाधिष्ठानभागे च भित्त्यन्ते च कवाटके।
अलिन्दके वेदिकायामपि डोलादिषु क्वचित्॥
तले वातायने स्तम्भे पटलादिषु वा तथा।
पर्यङ्के चापि सोपाने तद्योज्यं शिल्पिभिः क्रमात्॥
वारटङ्कं भेदटङ्कं रन्ध्रटङ्कं शिखान्वितम्।
पट्टटङ्कं लताटङ्कं स्वीकुर्यादप्रमत्ततः॥
तक्षकैः कल्पकैर्वापि तोरणादिक्रियापरैः।
मानं रेखाङ्कनं शिक्षां तक्षणं रचयेत्क्रमात्॥
चूतपत्रादिरूपं वा पक्षिरूपमथापि वा।
लतारूपादिकं वापि रेखारूपं क्वचित्स्थले॥
लक्ष्म्यादिरूपमथवा गोपुरादिस्थलाकृति।
कल्पनं विविधं रम्यं नानातोरणमीरितम्॥

स्तम्भाः
वि० वा०
६४. १-७

निर्माणस्य यथा भूमिराधारस्संप्रकीर्तितः।
तथा तस्याधारमाहुः पादं शिल्पविशारदाः॥
सौकर्यं च सुखं शोभालाभः पादप्रकल्पनात्।
तस्मात्प्रकल्पयेच्छिल्पी शिलालोहद्रुमेष्टकैः॥
खातपीठविभागेन द्विविधं तदुदाहृतम्।
देवकान्तं ब्रह्मकान्तमिन्द्रकान्तमथापि वा॥
विष्णुकान्तं स्कन्दकान्तं सोमकान्तमिति क्रमात्।
वर्तुलं चतुरश्रं च षडश्रन्त्वष्टपट्टिकम्॥
द्वादशाश्रं षोडशाश्रं पादकल्पं विदुर्बुधाः।
पुरः पश्चात्सर्वतो वा कल्पस्तम्भप्रकल्पनम्॥
युग्मद्वियुग्मसङ्कीर्णोपस्तम्भादिकल्पनम्।
सुप्रतीकान्तकं सूर्यकान्तं ब्राह्मणकान्तकम्॥
कैलासमेरुकं कान्तं तथा नन्दीशकान्तकम्।
इति द्वादशभेदेन स्तम्भानां कल्पनं मतम्॥
व्यालेभमुखयुक्तं वा यक्षाननयुतन्तु वा।
नानाचित्रवलीताङ्कं शुकहंसादिरेखिकम्॥
युग्मक्रियं दोषहीनं क्वचिदेकक्रियन्तु वा।
सुधालेपनकं वापि श्लक्ष्णकं वा क्वचित्स्थले॥
यथाविभवतः कार्यं स्तम्भकल्पनमीरितम्।
शुभकालेऽलङ्कृतानां पादानां स्थापनं शुभम्॥

स० सू०
२८. २७-३३

इत्थं स्यात् पद्मकस्तम्भो युक्त्या युक्तस्वरूपकैः॥
अष्टाश्रो वा विधातव्यः स्तम्भसूत्रपरिक्रमात्।
तद्विस्तारसमं त्यक्त्वोत्सेधं भागान् विभाजयेत्॥
अष्टाश्रच्छेदमानेन बाह्यसूत्रानुपल्लवान्।
विदध्यान्मध्यभागे तु कोणांश्च पल्लिकाकुलान्॥
घटिका पुष्पमालाभिः पल्लवैश्चोपशोभिता।
छेदभागः समः कार्यो बहिर्भागविवर्जितः॥
घटपल्लवको नाम स्तम्भोऽयं परिकीर्तितः।
विहितो वेश्मनामेष स्वामिनः श्रेयसे भवेत्॥
कुबेरो वा विधातव्यः षोडशाश्रक्रियान्वितः।
ऊर्ध्वतः पल्लवाकीर्णो जङ्घास्य चतुरश्रिका॥
श्रीधरश्च भवेद् वृत्तः कल्पनास्य कुबेरवत्।
एवं गृहाणां चत्वारः स्तम्भा लक्ष्मभिरीरिताः॥

छाद्यम्
सू० सू०
२८. ४८-४९

दण्डच्छाद्यं गृहेषु स्याज्ज्ञेयं तच्च चतुर्विधम्।
भूताख्यं तिलकं तद्वन्मण्डलं कुमुदं तथा।
गृहच्छाद्येषु तेषु स्यादुच्छ्रायोऽपि चतुर्विधः॥

भित्तिः—तत्र चयविधौ—विंशतिश्चय-गुणास्तद्विपरीताः दोषाश्चापि विंशतिः—

स० सू० ४१. १–४ दानीममिधीयन्ते चयस्येह गुणागुणाः ।
सुविभक्तः समश्चास्श्चतुरश्रश्चयः शुभः ॥
असंभ्रान्तमसन्दिग्धमविनाश्यन्तर्हितम् ।
अनुत्तममनुद्वृत्तमकुब्जं न च पीडितम् ॥
समानखण्डमृज्वन्तसमन्तरगं तथैव च ।
सुपार्श्वं सन्धिसुश्लिष्टं सुप्रतिष्ठं सुसन्धि च ॥
अजिह्मं चेति चेयस्य गुणा विंशतिरित्यमी ।
एतेषां वैपरीत्येन दोषाणामपि विंशतिः ॥

कुड्य-चयन-प्रकारः ४१. उदकेन समं नीत्वा सम्यङ्निश्चयकारणम् ॥
त (त्रा?स्मा) दृते न चान्यत् स्यान्निश्चयार्थं चयस्य च ।
तस्माज्जलेन वलयं गृह्णीयात् पूर्वमादृतः ॥
ततः सुताडिते सूत्रे चयं कुर्याद् विचक्षणः ।
द्विगुणां क्षेत्रमानस्य रज्जुं कृत्वा तदन्तयोः ॥
योऽसौ (?) कार्यौ ततस्तस्याः पादोनक्षेत्रमानतः ।
दद्यान्निरिञ्छिन्नं कीलौ क्षेत्रगर्भान्तगामिनौ ॥
निधाया (याः?य) सकौ तस्याः प्रान्तस्थौ योजयेत्तयोः ।
निरञ्छनाभिकृष्टायां पादोनक्षेत्रसंमितम् ॥
भुजगतया भवेद् रज्जुस्तस्यामिष्टानुमानतः ।
चिह्नं दद्यात् स कर्णः स्यादेवं दोषान् प्रसाधयेत् ॥

कुड्य-चयन-दोषाः ४१. ५.. २०॥ दक्षिणं तु यदा कुड्यं विचिनोति वहिर्मुखम् ।
तदा व्याधिभयं विद्यान्मृत्युदण्डं च निर्दिशेत् ॥
पश्चिमं तु यदा कुड्यं विचिन्वन्ति वहिर्मुखम् ।
धनहानिं तदा विद्याद् दस्युभ्यश्च भयं भवेत् ॥
उत्तरं तु यदा कुड्यं विचिनोति वहिर्मुखम् ।
कर्तारं स्वामिनं वापि व्यसनं प्रापयेत् तदा ॥
प्राच्यं वहिर्मुखं कुड्यं चिनोति स्थपतिर्यदा ।
राजदण्डभयं तत्र निर्दिष्टव्यं विचक्षणैः ॥
एतदेव फलं ब्रूयात् पतिते दलिते तथा ।
यस्य प्राग्दक्षिणः कर्णः प्रवर्तेत वहिर्मुखः ॥
स्यात् तत्राग्निभयं घोरं गृहभर्तुश्च संशयः ।
गच्छेद् वहिर्मुखः कर्णो यदा दक्षिणपश्चिमः ॥
कलहोपद्रवस्तत्र स्याद् भार्यायाश्च संशयः ।
पश्चिमोत्तरकर्णे तु सम्प्रयाते वहिर्मुखे ।

पशुवाहनपुत्राणां संशयस्तत्र जायते।
प्रागुत्तरो यदा कर्णः प्रचीयेत वहिर्मुखः॥
गुरूणां संशयस्तत्र गोवृषादेश्च जायते।
विशालं यदि जायेत सर्वबाहुषु चिन्वतः॥
कर्णिकासमसंस्थानं तद् भद्रमल्लिकाकृति।
न तादृशो भवेदायस्तत्र यादृग् व्ययो भवेत्॥
चयस्य तस्य दोषेण गृ (हि?ही) क्षीणः प्रजायते।
चिन्वतो यदि संक्षिप्तमन्त्यर्थं तत्र जायते॥
ब्रह्मसंज्ञं तदुद्दिष्टं तत्र राजभयं भवेत्।
विस्तृतं यदि बाह्येषु संक्षिप्तं चैव मध्यतः॥
तनुमध्यं तदुद्दिष्टं तत्र विद्यात् क्षुधो भयम्।
तच्छिद्रं यदि कर्णेषु परिहीणं च मध्यतः॥
निर्णतं नाम तद् विद्यात् तत्र चौरभयं भवेत्।
कर्णेषु परिहीणं चेदुच्छ्रितं चापि मध्यतः॥
कूर्मोन्नतमिति ज्ञेयं सर्वदोषभयावहम्।
विषमोन्नतकर्णेषु निर्दिशेद् प्रविलक्षयम्॥
प्राव्यान्तपातं तद् विद्यात् समेषु विहितेषु च।
इत्येते चीयमानस्य गुणदोषाः प्रकीर्तिताः॥
तस्मात् सर्वप्रयत्नेन चयकर्म प्रयोजयेत्॥

## भवन-भूषायां—प्रयोज्याप्रयोज्यानि—स० सू० ३४. १-२३॥

(अ) अप्रयोज्यानि राज्ञां सेनापतीनां च वणिजामपि वेश्मसु।
यदि वा वास्तुकलासु सभादेवकुलेषु च॥
शयनासनयानेषु भाजनाभरणेषु च।
छत्रध्वजपताकासु सर्वोपकरणेषु च॥
अप्रयोज्यानि यानि स्युः प्रयोक्तव्यानि यानि च।
विस्तरात् तानि कथ्यन्ते हितार्थमथ देहिनाम्॥
पूर्वोक्तानां नृपादीनां यानि वेश्मसु केवलम्।
अप्रयोज्यानि तान्येव पूर्वमत्राभिदध्महे॥
तेषु नैव प्रयोक्तव्याः समस्ता अपि देवताः।
दैत्या ग्रहास्तथा तारा यक्षगन्धर्वराक्षसाः॥
पिशाचाः पितरः प्रेताः सिद्धविद्याधरोरगाः।
चारणा भूतसंघाश्च तेषां योषाः सुतास्तथा॥
प्रतीहाराः प्रतीहार्यस्तेषामाविकृताश्च ये।
आयुधानि तदीयानि सर्वे चाप्सरसां गणाः॥

दीक्षितव्रतिपाषण्डिनास्तिकाः क्षुत्प्रपीडिताः।
व्याधिबन्धनशस्त्राग्नितैलासृक्पङ्कपांसुभिः ॥
शूलज्वरादिभिश्चार्ता येऽन्येऽप्येवंविधा नराः।
मत्तोन्मत्तजडक्लीबनग्नान्धबधिरादयः ॥
दोलाक्रीडाश्च नेष्यन्ते ग्रहणानि च दन्तिनाम्।
देवासुराद्याः सङ्ग्रामा विग्रहाश्च महीक्षिताम् ॥
प्राणियुद्धविमर्दाश्च मृगया च न शस्यते।
रौद्रदीनाद्भुतत्रासबीभत्सकरुणा रसाः ॥
न प्राणिषु प्रयोक्तव्या हास्यशृङ्गारवर्जिताः।
हस्त्यश्वरथयानानि विमानायतनानि च ॥
चण्डानलप्रदीप्तानि भवनानि वनानि च।
वृक्षा पुष्पफलैर्हीना विहगावासदूषिताः ॥
एकद्विशाखा रूक्षाश्च भग्नाः शुष्काः सकोटराः।
कदम्बशाल्मलीशेलुतारखारलुकादयः ॥
भूतालयत्वान्नेष्यन्ते कटुकण्टकिनश्च ये।
गृध्रोलूका विहङ्गेषु कपोतश्येनवायसाः ॥
कङ्कश्चेति न शस्यन्ते खगा रात्रिंचराश्च ये।
गजाश्वमहिषाश्चोष्ट्रा मार्जारखरवानराः ॥
सिंहो व्याघ्रस्तरक्षुश्च वराहमृगजम्बुकाः।
तथा वनचरा ये च क्रव्यादा मृगपक्षिणः ॥
गृहेष्वेते न कर्तव्याः शैलाटव्याश्रिताश्च ये।
अमीषां करणादेवैराचार्यो विप्रमुच्यते ॥
व्याधिं घोरमवाप्नोति व्यसनं बन्धमेव च।
यत्र तत्र गृहस्वामी धनहानिं पराजयम् ॥
प्रवासं बन्धनं नाशं मृत्युं वा क्षिप्रमाप्नुयात्।
इत्युक्तान्यप्रशस्तानि गृहेषु गृहमेधिनाम् ॥

(ब) प्रयोज्यानि

तत्र यानि प्रयोज्यानि कथ्यन्ते तान्यतः परम्।
यस्य यत्र भवेद् भक्तिर्या चास्य कुलदेवता ॥
हस्तक्लृप्तप्रमाणेन तान् कुर्वन् स्यान्न दोषभाक्।
तद्द्वारपार्श्वयोः कार्यौ प्रतीहारौ स्वलङ्कृतौ ॥
वेत्रदण्डव्यग्रकरौ खड्गकोशपरिच्छदौ।
रूपयौवनसम्पन्नौ विचित्राम्बरभूषणौ ॥
धात्री वामनिका कुब्जा सखीभिः परिवारिता।
विदूषकैः कञ्चुकिभिस्तुष्टैरनुगतास्तथा ॥
द्वारस्योभयतः कार्याः प्रतीहार्यो मनोरमाः।

निधयश्चानुरूपाश्च शङ्खाब्जोज्ज्वललक्षणाः ॥
रत्नदीनारराशींश्च वहन्तो वदनोद्गतान् ।
पद्मस्था पूर्णकुम्भा वा रत्नवस्त्रविभूषिता ॥
वक्रैरूर्ध्वस्थितैः पुष्पफलपल्लवसम्भृतैः ।
पूर्णकुम्भाङ्कुशच्छत्रश्रीवृक्षादर्शचामरैः ॥
कार्याष्टमङ्गला द्वारे दामभिः शङ्खमत्स्ययोः ।
द्वारमण्डलमध्यस्था स्नाप्यमाना गजोत्तमैः ॥
पद्मासना पद्महस्ता श्रीश्च कार्या स्वलङ्कृता ।
वृषः सवत्सा धेनुर्वा सच्छन्नस्त्रग्विभूषणा ॥
फलभक्तैर्बहुविधैराहारार्थं निवेदितैः ।
नानापुष्पफलैर्नम्रैः शालैस्तिर्यगवस्थितैः ॥
चित्रा पत्रलता लेख्या बाह्याभ्यन्तरभित्तिषु ।
हंसकारण्डचक्राह्वैर्बिसिनीपत्रवर्तिभिः ॥
कुमारकैश्च क्रीडद्भिर्युक्ता ललितबाहुभिः ।
वासधाम्नि निवेश्यन्ते विचित्राभरणाम्बराः ॥
रतिक्रीडापरा नार्यो नायकस्तु यदृच्छया ।
आपाण्डुदेहच्छवयः स्वल्पचारुविभूषणाः ॥
किञ्चित्प्रतनुभिर्गात्रैः कार्याः सुरतलालसाः ।
प्रवृद्धशाखाविटपैः प्रचलारुणपल्लवैः ॥
चम्पकाशोकपुन्नागनागाम्रतिलकादिभिः ।
छायापुष्पफलोपेतैः वृक्षैरन्यैश्च भूषिताः ॥
उद्यानभूमयः कार्याः कूजत्पिकमधुव्रताः ।
ऋतवः फलपुष्पाद्यैः स्वैः स्वैश्चिह्नैरलङ्कृताः ॥
मनोरमैर्विशेषैश्च खगैश्च समयोचितैः ।
कादम्बकुररक्रौञ्चहंससारसमेखलाः ॥
तीरान्तोद्गतवानीरकेतकीषण्डमण्डिताः ।
जलान्तर्लीनमत्स्यैश्च सञ्छन्ना नलिनीवनैः ॥
लेख्याश्च गृहभित्तीनामधोभागेषु दीर्घिकाः ।
फलैः समं सभक्ष्यैस्तु मणिकाञ्चनभाजनैः ॥
विन्यस्तपद्मिनीपत्राः सोत्पलाः पानभूमयः ।
विचित्रातोद्यहस्ताश्च नृत्यगीतविचक्षणाः ॥
मुदिता ललना लेख्याः प्रेक्षासंगीतभूमिषु ।
प्रकल्प्याः पञ्जरस्थाश्च चकोरशुकसारिकाः ॥
प्रहृष्टाः परपुष्टाश्च मयूराश्च सकुक्कुटाः ।
इति यानि प्रदिष्टानि प्रयोक्तव्यानि वेश्मनि ॥

तानि सर्वाणि शस्तानि सर्वोपकरणेष्वपि ।
देवयोनिगणास्तद्वत् पुरुषाश्च विनिन्दिताः ॥
साक्रन्दाश्च न शस्यन्ते पीठशय्यासनादिषु ।
पुरस्तात् कीर्त्तितान्यत्र प्रयोक्तव्यानि यानि च ॥
तानि शस्तानि कक्षासु सभादेवकुलेषु च ।
दिव्यमानुषसम्बद्धान्यनेकाख्यायिकादिषु ॥
प्रोक्तानि तानि तावन्ति शुभान्यालेख्यकादिषु ।
इति कथितमयोज्यं योजनीयं च बुध्वा,
भवनशयनकक्षादेवधिष्ण्यादिकेषु ।
विरचयति यथोक्तं निन्दितं वर्जयेद् यः,
स भवति नृपतीनां शिल्पिनां चार्चनीयः ॥

भवन-दोषेषु—द्वारगुणदोषाः:—

निवेशाः
स० सू० ३६, २-६

उत्संगो हीनबाहुश्च पूर्णबाहुस्तथापरः ।
प्रत्यक्षायश्चतुर्थश्च निवेशाः परिकीर्तिताः ॥
गुणदोषान् प्रवक्ष्यामि द्वाराणां सर्ववास्तुषु ।
सुस्थितं चतुरश्रं च कान्तं स्वद्रव्ययोजितम् ॥
ऋजु स्वकीयदिग्भागे नह्रस्वं न तथोच्चकैः ।
नाल्पं न कुब्जं नाप्यतिपिण्डितं न वहिर्गतम् ॥
नाध्मातं न कृशं मध्ये गतं नान्तर्कुक्षिषु ।
न विद्रुतं न संक्षिप्तं यत् तत् स्याद् द्वारमृद्धिदम् ॥
भल्लाटे धनदे यद्वा चरके पृथिवीधरे ।
ब्राह्मणस्य भवेद् वेश्म माहेन्द्रद्वारमुत्तमम् ॥
माहेन्द्रेऽर्केऽथ सत्ये वा आर्यके वा निकेतनम् ।
कार्यं गृहक्षतद्वारं क्षत्रियस्य शुभावहम् ॥
याम्ये वैवस्वते वापि गान्धर्वेऽथ गृहक्षते ।
वैश्यस्य भवनं कार्यं द्वारं पुष्पाह्वये शुभम् ॥
वारुणे पौष्पदन्ते वा यद्वा मैत्रेऽथवासुरे ।
शूद्रस्य सदनं कार्यं भल्लाटद्वारमुत्तमम् ॥
विप्राणां प्राङ्मुखं वास्तु गृहं स्याद् दक्षिणामुखम् ।
वर्धते धनधान्येन पुत्रपौत्रैश्च नित्यशः ॥
दक्षिणाभिमुखं वास्तु भवनं पश्चिमामुखम् ।
क्षत्रियस्य धनं धान्यं विक्रयश्चेह वर्धते ॥
वास्तुनः पश्चिमं द्वारं भवनस्योत्तरामुखम् ।
तत्रैधते धनैर्धान्यैः पुत्रपश्वादिभिश्च विट् ॥

वास्तु स्यादुत्तरद्वारं गृहं पूर्वामुखं तथा।
शूद्रस्य कर्मवृत्तिस्तु धनधान्यैर्विवर्धते॥
यस्यां भित्तौ कृतं पूर्वं तस्यामुपरि कारयेत्।
तथान्यभित्तौ तद्द्वारं विधातव्यं प्रदक्षिणम्॥
न मध्ये सद्मनो द्वारं कुर्यादेव पदस्य च।
न स्थूले (?) न पदेनापि सिरापाते तदिष्यते॥

भवनदोषाः
स० सू०
४८, ६१–१०५:

कृशं विकृतमत्युच्चं करालं शिथिलं पृथु।
वक्रं विशालमुत्तानं (शु?स्थू) लाग्रं ह्रस्वकुक्षिकम्॥
स्वपादचलितं ह्रस्वं हीनकर्णं मुखानतम्।
पार्श्वगं सूत्रमार्गाच्च भ्रष्टं द्वारं न शोभनम्॥
तत् करोति क्षयं घोरं विनाशं स्वामिसम्पदः।
वसतां कलहं नित्यमतस्तत् परिवर्जयेत्॥
अन्तर्द्वाराद् बहिर्द्वारं नोच्चं कुर्यान्न सङ्कटम्।
उच्चं विसङ्कटं वापि तच्छ्रिवाय न जायते॥
पट्टसन्धिर्यदा मध्ये द्वारस्य स्यात् कथञ्चन।
कर्तुस्तदा विनाशः स्यात् कुलस्य च परिक्षयः॥
तुला उपतुला वा स्युर्द्वारि तिर्यग् यदा कृताः।
दारिद्र्यव्याधिसन्तापा भवन्ति स्वामिनस्तदा॥
अनुवंशमनुप्राप्ता जयन्त्यो यदि मन्दिरे।
वित्तायुषोस्तदाल्पत्वमनारोग्यं च जायते॥
उदुम्बरे (वि) निहिता (नि?) ललाटी नाम सा तुला।
दूषणं मरणं वापि कन्यानां विदधाति सा॥
उत्तराङ्गोदरे न्यस्ता ललाटेन समा यदि।
तुला ललाटिका सापि कुलक्षयकरी भवेत्॥
तुलापिण्डेन विन्यस्ता ज्ञेया यज्ञोपवीतिनी।
वसतो व्यसनं कुर्यात् कुटुम्बस्यासुखं च सा॥
यदि भारतुलैकापि मध्ये विद्धा कथञ्चन।
तदा वराङ्गं भज्येत धनं च परिहीयते॥
भित्तिभेदो न कर्तव्यस्तुलाग्रैरखिलैरपि।
कुर्याद् ब्रह्मपदन्यस्तो भारपट्टः कुलक्षयम्॥
अयुक्तयोर्युक्तयोर्वा सन्धिश्चेद् भारपट्टगो।
सन्धौ स्यात् तत् सुतो ज्येष्ठः कर्तुश्चापि विनश्यति॥
अनुवंशं न भुञ्जीत न शयीत कदाचन।
भुञ्जानस्यार्थनाशः स्याच्छयानस्य महारुजः॥
नाशोऽनुवंशे रोगाः स्युस्तिर्यक्स्थे रक्षसो भयम्।

शयनागारविन्यस्ते मरणं नागदन्तके ॥

अन्यदोषाः — अतः परं गृहादीनामप्रशस्तसमुच्छ्रितम् ।
क्रियते कथितं यस्मादेकत्र सुसमं भवेत् ॥

प्लव दोषाः स० सू० ४८. १–४
रक्षोम्बुनाथकीनाशमरुद्दहनदिक्प्लवा ।
मध्यप्लवा च भून्यधिदारिद्र्यमर्कावहा ॥
वह्निप्लवा वह्निभिये मृतये दक्षिणप्लवा ।
रुजे रक्षःप्लवा प्रत्यक्प्लवा धान्यधनच्छिदे ॥
कलहाय प्रवासाय रोगाय च मरुत्प्लवा ।
मध्यप्लवा तु भूमिर्या सर्वनाशाय सा भवेत् ॥

दुष्टभवनानि ४८. ११–१३
वलितं चलितं भ्रान्तं विसूत्रं च समुत्सृजेत ।
यत् स्यान्मुखविनिष्क्रान्तं वलितं तत् प्रकीर्तितम् ॥
चलितं पृष्ठनिष्क्रान्तं दिङ्मूढं भ्रान्तमुच्यते ।
विसूत्रं कर्णहीनं स्यात् फलमेषां प्रचक्ष्महे ॥

तत्फलानि
वलिते चलति स्थानं चलिते विग्रहो भवेत् ।
भ्रान्तं योषिद्विनाशाय विसूत्रं भूरिशत्रुकृत् ॥
अन्यपृष्ठस्थितद्वारं वेश्म खादकमुच्यते ।
परस्परविरोधाय तद् वेश्म गृहिणोस्तयोः ॥
उच्चच्छायं छिद्रगर्भं भ्रमितं वमितं मुखे ।
हीनमध्यं नष्टसूत्रं शल्यविद्धं शिरोगुरु ॥
अट्टालिन्दकशोभं च विषमस्थं तुलातलम् ।
अन्योन्यद्रव्यविद्धं च कुपदप्रविभाजितम् ॥
हीनभित्त्युत्तमाङ्गं च विनष्टं स्तम्भभित्तिकम् ।
भिन्नशालं त्यक्तकण्ठं निष्कन्दं मानवर्जितम् ॥
विकृतं च गृहं भर्तुरनिष्टफलदायकम् ।
तस्माद् दोषानिमांस्त्यक्त्वा गृहं कुर्याच्छुभावहम् ॥

भङ्गः ४६. १–५
पुरातनं नवं वापि कृतं वाथार्धनिर्मितम् ।
देवतानां कृपाणां च तोरणं निपतेद् यदि ॥
भज्यते दह्यते वाथ नमते सज्जतेऽथवा ।
दवविद्युज्जलाद्यैर्वा हन्यते तत् कदाचन ॥
तत्र दोषान् प्रवक्ष्यामो दोषप्रशमनानि च ।
तोरणं निपतेत् सर्वं शिरो वास्य कथञ्चन ॥

तत्फलम्
राज्ञां सेनापतीनां च प्रतीहारपुरोधसाम् ।
प्रधानाश्वगजानां च विप्रपौरजनस्य च ॥
तत्र मृत्युभयं विद्याद् दुर्भिक्षं चापि निर्दिशेत् ।
तस्मात्प्रशमहेत्वर्थं विधिं कुर्यादिमं बुधः ॥

| | |
|---|---|
| वेधः<br>स०-सू०<br>१८.८३-८८॥ | प्रवासो भृत्यजो द्वेषो विद्धे चत्वररथ्यया।<br>नाशं द्रव्यं ध्वजाविद्धं वृक्षेण शिशुदूषकम्॥<br>पङ्कविद्धं भवेच्छोकः सलिलस्राविणि व्ययः।<br>कूपेन विद्धेऽपस्मारो विनाशो दैवतेन च॥<br>स्तम्भेन दूषणं स्त्रीणां ब्रह्मणा तु कुलक्षयः।<br>मानादभ्यधिके द्वारे राजतो जायते भयम्॥<br>व्यसनं मानतो हीने चौरेभ्यश्च भयं भवेत्।<br>व्याधयः श्वभ्रविद्धेन धनस्य च परिक्षयः॥<br>देवध्वजेन वन्धः स्यात् सभयैश्वर्यसंक्षयः।<br>सन्निपातभयं वाप्या तुल्या दृष्टत्वमाकृते?॥<br>हृद्रुक् कुलालचक्रेण दारिद्र्यं वारिणा भवेत्।<br>व्याधिरुक् कचकूटेन आपाकेन सुतक्षयः॥<br>नि (श्व?स्व) तोलूखलेन स्याच्छिलया चाश्मरी भवेत्।<br>तोयभाण्डेन दुर्मन्त्री भस्मना चार्शसो गृही॥<br>दारिद्र्यं छायया विद्धे भवेद् द्वारे कुटुम्बिनः।<br>स्थलस्यन्दनवल्मीकैर्विदेशगमनं भवेत्॥ |

टि०—तोरणभङ्गः शान्तिकर्म च विस्तरेण समराङ्गण-सूत्रधारे षट्चत्वारिंशे द्विचत्वारिंशे चाध्याययोः द्रष्टव्ये; अत्र तु संक्षेपेणैव किमपि दीयते :—

| | |
|---|---|
| तोरणभङ्गः<br>स० सू० ४६. १–४ | पुरातनं नवं वापि कृतं वाथार्धनिर्मितम्।<br>देवानां नृपाणां च तोरणं निपतेत् यदि॥<br>भज्यते दह्यते वाऽथ नमते सज्जतेऽथवा।<br>दवविद्युज्जलाद्यैर्वा हन्यते तत् कदाचन॥<br>तत्र दोषान् प्रवक्ष्यामि दोषप्रशमनानि च।<br>... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... |
| कपोतप्रवेशः<br>स०सू० ४६. १८–२० | प्रासादे वा गृहे वापि कपोतः प्रविशेद् यदि।<br>तत्र दोषाः प्रपद्यन्ते शान्तिकर्म तथैव च॥<br>कालमूर्तिः कपोतश्च पापमूलकरण्डकम्।<br>विहङ्गापसदो हीनः कृष्णचारी विहङ्गमः॥<br>चतुर्विधः समाख्यातो मुनिभिः स तपोधनैः।<br>श्वेतो विचित्रकण्ठश्च विचित्रोऽथ च कृष्णकः॥ |
| गृहदारुभङ्गशान्तिः<br>स० सू० ४२. २५-३० | भङ्गे गृहाणां दारूणां शान्तिहोमोऽथ कथ्यते।<br>इन्द्रकीलो महाकूटः पृष्ठवंशोत्तरौ धरौ॥<br>प्रग्रहोऽलिन्दपादौ वा स्वामिनं घ्नन्त्युपद्रवाः।<br>तुलास्थपत्यः (?) कूटं वा वेदिका कर्णपालिका॥ |

टि०—अवशिष्टं ग्रन्थे परिशीलनीयम्।

# चतुर्थः खण्डः

## राज निवेशोचितभवनासन शय्यायन्त्रादि लक्षणम्

## प्रथमः पटलः

### ( राज-निवेशे )

### राज-भवन-लक्षणम्

सामान्य-निवेशः
वि० वा०
१२. १–१६

प्रशस्ता चतुरश्रा भूर्भूमिपानां विशेषतः।
पुरस्य मध्यभागे वा निर्दिष्टे वा स्थलोत्तमे।
नृपहर्म्यं प्रकर्तव्यं तल्लक्षणमनोहरम्।
गभीरपरिखोपेतं द्वारोपद्वारशोभितम्॥
चूलीहर्म्यसमायुक्तं पङ्क्तिशालाभिरन्वितम्।
पञ्चाशद्दण्डमानादि दण्डपञ्चशतावधि॥
प्रमाणमिह निर्दिष्टं भूमिपालस्य मन्दिरे।
अथवा भागमानेन कारयेन्नृपमन्दिरम्॥
सूर्यैकं वारुणैकं वा तस्य मानमुदीरितम्।
एकाननं वा द्विमुखं चतुराननमेव वा॥
सेपे वा वह्निभागे वा मन्त्रिहर्म्यं प्रकल्पयेत्।
आकाशे वाथ पवने सेनानाथस्य मन्दिरम्॥
प्रासादभित्तिमभितो बहिर्वा तच्च कल्पयेत्।
पुरोहितादिनिलयैस्सहितं वा विशेषतः॥
द्वितीयावरणे वापि तृतीयावरणेऽपि वा।
भूधरे रुद्रके भागे न्यायशाला विधीयते॥
ईशाने देवतागारं सावित्रे कोशमन्दिरम्।
मित्रभागे महेरणस्थानमुक्तं मुनीश्वरैः॥
मध्यभागे राजवेश्म नवसौधतलावधि।
नानाशालासमोपेतं कूटकोष्ठाद्यलङ्कृतम्॥
शिखरावलिसंदर्श्यं कल्पनाशतशोभितम्।
वातायनशतोपेतं मध्यचत्वरमण्डितम्।
पाञ्चाली मागधी चान्या शौरसेनी च वाह्लिकी।
कौसली चापि कालिङ्गी द्राविडीति क्रियाकला॥
प्रसिद्धा शिल्पकार्येषु कल्पनाशतशोभिनी।
देशभेदेन नृपालः स्वेच्छया तां समाश्रयेत्॥
सोमे वा दन्त्वके भागे भोजनागारमीरितम्।

विशालमापभागे वा कल्पयेच्छिल्पकर्मवित् ॥
किन्नरे भास्करे वाऽथ विहारस्थलमिष्यते ।
तत्रैवोद्यानभूमिश्च निर्दिशेत्तुष्टिहेतवे ॥
गान्धर्वे वारणस्थानं पुष्पके वाजिमन्दिरम् ।
भृङ्गराजकभागे च भिषक्शालादयो मताः ॥

अन्तः पुरम्
वि० वा०
१६. १–१०

यशोधनं कलत्रञ्च रक्षणीयं महीभुजा ।
तत् कोशरत्नजनकमनर्घं कथितं बुधैः ॥
तस्मात्तद् बहुधा रक्ष्यं सयत्नेन महीभुजा ।
प्राकारावृतहर्म्यान्तस्तत्स्थलं कार्यमीरितम् ॥
आपदेवस्य भागे वा वारुणे वा विशेषतः ।
चतुरश्रं दैर्घ्ययुतमथवा तत्प्रकल्पयेत् ॥
दण्डद्वादशवैशाल्यमण्डलाकारमध्यभाक् ।
त्रिभौमः पञ्चभौमो वा मध्ये वा स्थलसंयुतः ॥
मध्याधिष्ठानसंक्लृप्तश्चोपशालावृताङ्गणः ।
तद्भागे क्रीडनस्थानं कल्पयेद्बहिरेव वा ॥
द्वारोपद्वारसंयुक्तः केसरक्रियया युतः ।
मध्यागारविनिष्क्रान्तकल्पनेन समन्वितः ॥
लक्ष्म्यादिलसितद्वारो बहुचित्रमनोहरः ।
शुद्धान्तो रक्षणोपेतः कार्यो भूपालसिद्धये ॥
कौबेर्यां भूषणं प्रोक्तं वारुणे वस्त्रकादिकम् ।
दक्षिणस्यां गन्धमाल्यं पूर्वे भोजनमीरितम् ॥
गन्धर्वदेवचित्राढ्यं कल्पयेच्छिल्पकोविदः ।
तटाकमथवा वापीं तत्पार्श्वे कल्पयेद्बुधः ॥
चेटीनां वासभवनैरन्वितश्च समन्ततः ।
वातायनशतोपेतो वितानादिभिरन्वितः ।
कलशादिसमोपेतः कल्पनीयो मनोहरः ॥

तत्रैव गवाक्षाः यथा
१६. ११–२०

भूपतेस्तु महिष्या वा तुष्ट्यर्थं कल्पनं वरम् ।
कल्पनीयं शिल्पधिया कल्पसूत्रविधानतः ॥
विहारमण्टपो वाऽपि महाशालाऽथवा मता ।
चतुरश्रं भानुदण्डमथवा तत्कलान्वितम् ॥
मध्यकल्पनसंयुक्तं वितानादिमनोहरम् ।
पञ्चभौमं सप्तभौमं नवभौममथापि वा ॥
सोपानपङ्क्तिसंवीतकूपनिर्माणभासुरम् ।
चित्रतोरणयुग्द्वारचतुष्केनान्वितं तथा ॥
आलोकपालिकायुक्तं तत्रस्थं तु गवाक्षकम् ।

पद्मपत्रगवाक्षं वा गजनेत्रगवाक्षकम् ॥
छटागवाक्षमथवा धेनुपादगवाक्षकम्।
मृगीनेत्रगवाक्षं वा पारावतगवाक्षकम् ॥
शुकनासागवाक्षं वा बहुरन्ध्रगवाक्षकम् ।
तुरगास्यगवाक्षं वा कल्पयेत्तत्र शिल्पवित् ॥
मुखभद्रैर्नागभद्रैश्चतुर्भद्रैर्युतं तु वा ।
अयःकीलयुतं वाऽथ शिलापट्टयुतं तु वा ॥
दृढसन्धानसंयुक्तं दृढकल्पनमेदुरम् ।
युक्त्या शिल्पवशात्सर्वं शुद्धान्ते चाथ हर्म्यके ॥
चूलीहर्म्येषु सदनेष्वपि मानवसद्मसु ।
प्रासादे विविधे रम्ये शालास्वपि च तन्नयेत् ॥

राजवेश्म सामान्यनिवेशः स० सू० १४. १-१६

कृते पुरनिवेशेऽथ चतुःषष्टिपदाश्रये ।
नियुक्तपरिखासालगोपुराट्टालकेऽपि च ॥
विभक्तरथ्ये परितः प्रविभाजितचत्वरे।
क्रमादन्तर्बहिः क्लृप्तदेवतायतनस्थितौ ॥
प्रागुदक्प्रवणे देशे प्राग्द्वारास्युन्नतेऽथवा ।
यशःश्रीविजयाधायि मैत्रं पदमधिष्ठितम् ॥
यथावर्णक्रमायातं चतुरश्रं समं शुभम् ।
पुरमध्यादपरतो दिक्स्थं कुर्यान्नृपालयम् ॥
दुर्गेषु भूवशात् कार्यं यद्वा दिक्ष्वपरास्वपि ।
विवस्वद्भूधरार्यम्णां कार्यमन्यतमे पदे ॥
त्रिचत्वारिंशता युक्ते ज्येष्ठं स्याद् द्वे धनुश्शते।
मध्यं शतं तु द्वाषष्टिः शतं साष्टकमन्वितम् ॥
ज्येष्ठे पुरे विधातव्यं ज्येष्ठं राजनिवेशनम् ।
मध्यमे मध्यमं कार्यं कनिष्ठं च कनीयसि ॥
प्राकारपरिखागुप्तं चारुकान्ति समन्ततः ।
तमङ्गभ्रमनिर्यूहसुदृढाट्टालिकान्वितम् ॥
एकाशीत्या पदैर्भक्तं विधेयं नृपमन्दिरम् ॥
राजमार्गं समाश्रित्य वास्तुद्वारमुदङ्मुखम् ॥
युक्त्यानयैव कर्तव्यमन्यदिक्संश्रयेऽपि च।
भल्लाटपदवर्त्यस्य गोपुरद्वारमिष्यते ॥
तत्पुरद्वारविस्तारोच्छ्रायसम्मितमिष्टदम् ।
महेन्द्रं द्वारमिच्छन्ति निविष्टस्य महीधरे ॥
वैवस्वते पुष्पदन्तमर्यम्णि च गृहक्षतम् ।
अन्येष्वेषामपरतः प्रदक्षिणपदेष्वथ ॥

अन्यान्यपि स्वासु दिक्षु द्वाराण्येवं प्रकल्पयेत् ।
आभिमुख्ये च सर्वेषां शस्यन्ते गोपुराणि च ॥
तदीयनगरद्वाराद् विंशत्यंशोज्झितानि वा ।
पञ्चद्वाराणि सुग्रीवे जयन्ते मुख्यनाम्नि च ॥
वितथेऽथ भ्रमांस्तद्वद् विदधीत प्रदक्षिणान् ।
वास्तौ विभक्ते पुरवत् क्लृप्तेऽमरपदव्रजैः ॥
तत्र मैत्रपदस्थाने निवेशाय।वनीपतेः ।
प्रासादः प्राङ्मुखः कार्यो यथावत्पृथिवीजयः ॥

प्रमुखराजभवनानि स० सू० १५.१७

श्रीवृक्षं सर्वतोभद्रं मुक्तकोणमथापरम् ।
अभिच्छेन्नृपतिः कुर्यात् प्रासादं शुभलक्षणम् ॥

राज-भवने विविधाः निवेशाः स० सू० १८-२०॥

शालापरिक्रमोपेतकर्मान्तैरपि चान्वितम् ।
तत्र प्राच्यां भवेद् गेहमादित्यपदसंश्रितम् ॥
धर्माधिकरणं सत्ये व्यवहारेक्षणाय च।
भृशे च कोष्ठागारं स्यादम्बरे मृगपक्षिणाम् ॥
अग्नेः ककुभमाश्रित्य कार्यं वायोर्महानसम् ।
सभाजनाश्रयं पूष्णि विदध्याद् भोजनास्पदम् ॥
सावित्रे वाद्यशाला स्यात् सवितृस्थाश्च वन्दिनः ।
कर्माणि वितथे कुर्यात् तद्योग्यान्यायुधानि च ॥
स्वर्णरूप्यादिकर्मान्तान् विदधीत गृहक्षते ।
याम्ये दक्षिणतो गुप्तिं कोष्ठागारं च कल्पयेत् ॥
प्रेक्षासंगीतकानि स्युर्गन्धर्वे वासवेश्म च ।
कार्या वैवस्वते शाला रथानां दन्तिनां तथा ॥
पश्चिमोत्तरभागस्थां वापीमपि च कारयेत् ।
या (यो?यु) सुग्रीवपदयोर्गन्धर्वस्य च वारुतः ॥
कुर्यादन्तःपुरस्थानं प्राकारवलयावृतम् ।
कुर्यात् तद्गोपुरद्वारमुदगास्यं जयाभिधे ॥
कार्यः स्थपतिना चैव प्रासादश्चापराङ्मुखः ।
क्रीडादोलालयान् भृंगे कुमारीभवनं तथा ॥
नृपान्तःपुरमिच्छन्ति मृगे पित्र्ये स्ववस्करम् ।
नृपस्त्रीणामुपस्थानगृहमिन्द्रपदे विदुः ॥
सुग्रीवपदसंसक्तमरिष्टागारमिष्टदम् ।
द्वास्थसुग्रीव पि(पूर्व?पूर्वा) शपश्चाद्वागे मनोहरा ॥
विधेयाशोकवनिका स्नानधारागृहाणि च ।
लतामण्डपसंयुक्ताः स्युरत्रैव लतागृहाः ॥
दारुशैलाश्च वाप्यश्च पुष्पवीथ्यः सुकल्पिताः ।

पुष्पदन्ते भवेद् य(त्त?न्त्र) कर्मान्तः पुष्पवेश्म च ॥
वरुणस्य पदे कुर्याद् वापीपानगृहाणि च ।
स्याद् कोष्ठागारमसुरे शोषे त्वायुधमन्दिरम् ॥
भाण्डागारं तु रौद्राख्ये विदध्यात् स्थपतिः श्रिये ।
उलूखलशिलायन्त्रभवनं पापयक्ष्मणि ॥
दारुकर्मान्तमप्याहुः श्रेयसे राजयक्ष्मणि ।
स्यादोषधेरधिष्ठानं रोगे दिशि नभस्वतः ॥
नागानां शस्यते स्थानं पदे नागस्य सूरिभिः ।
भवन्ति मुख्ये व्यायामनाट्यचित्रगृहाणि च ।
गवां स्थानं तथा क्षीरगृहं भल्लाटनामनि ।
उदक्प्रदेशे सौम्यस्य पुरोधःस्थानमिष्यते ॥
राज्ञोऽभिषेचनं चात्र दानाध्ययनशान्तयः ।
चामरच्छत्रधाम स्यान्मन्त्रवेश्म च भूधरे ॥
कार्यिणां चात्र कार्याणि स्थितः पश्येन्नराधिपः ।
विधेया मन्दुराश्वानामुत्तरं पार्श्वमाश्रिता ॥
महीधरपदस्यैव यथावद् दक्षिणामुखी ।
कार्या सर्वत्र चाश्वानां शाला राज्ञो यथागृहम् ॥
विशतो दक्षिणेन स्याद् वामेन च विषाणिनाम् ।
वेश्मानि राजपुत्राणां विदध्याच्चरकाभिधे ॥
अत्रैव विद्याधिगमशालाश्चैषां निवेशयेत् ।
नृपस्य मातुरदितिस्थाने कुर्यान्निवेशनम् ॥
पृथगत्रैव शिबिकाशय्यासनगृहं विदुः ।
नृपद्विपानां शस्ता स्यादापे सदनकल्पना ॥
अभिषेचनकं स्थानमिहैव स्याद् विषाणिनाम् ।
आपवत्सपदे हंसक्रौञ्च सारस नादिताः ॥
स्युः फुल्लाब्जवनाः स्वच्छसलिलाः सलिलाशयाः ।
पितृव्यमातुलादीनां कार्यं दितिपदे गृहम् ॥
अन्येषामपि चात्रैव सामन्तानां महीपतेः ।
ऐशान्यामनलस्थाने वोच्छ्रितस्तम्भवेदिकम् ॥
कार्यं देवकुलं चारु सुश्लिष्टमणिकुट्टिमम् ।
पर्जन्यस्य पदे होराज्योतिर्विद्गृहमिष्यते ॥
जये सेनापतेर्वेश्म विधेयं विजयप्रदम् ।
द्वारं प्राकारमाश्रित्य पदेऽर्यम्णः प्रशस्यते ॥
प्राग्दक्षिणाश्रितं शस्त्रकर्मान्तं शस्त्रमत्र च ।
विमुञ्चेद् ब्रह्मणः स्थानमिन्द्रध्वजयुतं नृणाम् ॥

तत्राशुभानि वेश्मानि निवेशाश्चासुखावहाः।
गवाक्षस्तम्भशोभिन्यो विधेयाश्चानुकामतः॥
सभा यथादिक्प्रभवा नृपवेश्माभिगुप्तये।
सर्वत्र नृपतेः सौधान् नृपसौधस्य सम्मुखा॥
पश्चाद्भागाश्रिता यद्वा शाला कार्या विषाणिनाम्।
इत्यास्पदं सुरपदास्पदकल्पमाद्य-
मेतद्यथावदनुतिष्ठति यः सदैव।
स क्ष्मामिमां भुजवलक्षपितारिपक्षः
सप्ताम्बुराशिरशनां नृपतिः प्रशास्ति॥

मान० ४१. ३८

इन्द्रे च वरुणे वापि सार्वभौमस्य हर्म्यकम्।
अथवार्यपदे चैव चतुर्दिक्षु विदिक्ष्वपि॥
यमे विवस्वति चापि चाधिराजस्य हर्म्यकम्।
भूधरे च कुबेरे च नरेन्द्रस्यालयं भवेत्॥
इन्द्रे चेन्द्रजयस्यांशे पार्ष्णिकस्य गृहं भवेत्।
अथवा पुष्पदन्तस्य पदे वासं प्रकल्पयेत्॥
रुद्रे रुद्रजये वापि चासुरस्य पदेऽथवा।
पट्टधृगालयं कुर्याच्छोषकस्य पदेऽपि वा॥
गृहक्षते च सवित्रे सावित्रस्य पदेऽपि वा।
मण्डलेशस्य हर्म्यं स्यात्पट्टभाक् चालयं तु वा॥
आपवत्सापवत्सस्य मृगे वा मुख्यकेऽपि वा।
प्राहारकाख्यग्राहयोश्चालयं परिकल्पयेत्॥
सर्वेषामपि भूपानां स्वनिर्याणि चतुष्टये।
गृहमेवं तु शालायां चोक्तमेवं पुरातनैः॥
सर्वेषां मूलहर्म्याणां पूर्वद्वारं प्रकल्पयेत्।
तत्तन्मूलस्य हर्म्यस्य दक्षिणे चोत्तरेऽपि वा॥
नैर्ऋत्ये वायवे चापि तत्तन्महिषिकागृहम्।
मूलहर्म्यस्य याम्ये तु चाभिषेकादिमण्डपम्॥
सुग्रीवे पुष्पदन्ते वा चायुधस्यालयं भवेत्।
असुरे शोषके वापि वस्तुनिक्षेपमण्डपम्॥
वरुणे नैर्ऋते वापि सुहुर्वस्त्रधनालयम्।
सोमे च मुख्यके वापि रत्नहेमादिकालयम्॥
गन्धर्वे भृङ्गराजे वा भूषणाश्रयमेव च।
दक्षिणे नैर्ऋते वापि भोजनार्थं तु मण्डपम्॥
तथेशानपदे वापि पचनालयमेव च।
अनिले चाग्निके वापि पुष्करिणीश्च कल्पयेत्॥

महिष्यावाससौम्ये कञ्चुकिनश्चालयं भवेत्।
वायव्येन वनाङ्गारे पुष्पमण्डपं योजयेत्॥
अदिते चोदिते वापि मज्जनालयमेव च।
तच्छालाह्वदेशे तु आयुधद्रव्यमण्डपम्॥
वायव्ये नैर्ऋते वापि सूतिकामण्डपं भवेत्।
पूष्णि वा वितथे चैव दासदास्यालयं भवेत्॥
गृहक्षतपदे चैव शयनालयमेव च।
मुख्ये वा चैवाथ भल्लाटे विलासिनीनां चालयम्॥
दौवारिकपदे चैव राजकन्यकालयम्।
द्वारस्य वामपार्श्वे तु गजाश्वादिकालयम्॥
द्वारस्य दक्षिणे पार्श्वे रथकावासमेव च।
मुख्यके चान्तरिक्षे च शौण्डिकालयमेव च॥
भृशे यानालयं कुर्याच्छेषं प्रागुक्तवद् भवेत्।
अन्तःशालमिति प्रोक्तं बाह्यशालमिहोच्यते॥
वरुणे युवराजस्य चालयं तत्प्रकल्पयेत्।
तत्पूर्वे चोत्तरे वापि तस्यैवानुचरालयम्॥
याम्ये च सोमदिशि वापि वायव्ये वाऽथ नैर्ऋते।
आस्थानमण्डपं कुर्यात्पुष्करिण्याश्च वायवे॥
नागस्य वामके याम्ये कुर्याद्रागमदेशकम्।
पुष्पोद्यानं ततः कुर्यान्मुख्ये भल्लाटकेऽपि च॥
नृत्तागारं ततः कुर्यान्नानानृत्ताङ्गनानि च।
आस्नार्थं मज्जनार्थं देवताहर्म्यसीमके॥
द्वितीये हर्म्ये याम्ये तु पुरोहितावासमेव च।
रोगे वा मुख्यके वापि व्यायामालयमेव च॥
द्वितीयशालबाह्ये तु द्वारं तस्य तु दक्षिणे।
महारङ्गालयं कुर्याद् भैत्रं तु बहिर्बहिः॥
ईशे तु वेणुशालाश्च द्वारं कुर्यान्महेन्द्रके।
पार्श्वके मेषशालाश्च मुख्यके वानरालयम्॥
सोमादीशानपर्यन्तं वाजिशालाः प्रकल्पयेत्।
याम्यादिशानकान्तं स्याद् गजशालां प्रकल्पयेत्॥
दक्षात्तु नैर्ऋत्यान्तं कुक्कुटालयमेव च।
वायुकोणादिमुख्यान्तं मृगाणां हरिणालयम्॥
सुग्रीवे पुष्पदन्ते च कल्पयेन्मल्लमण्डपम्।
उत्तरे भल्लाटके वापि चोत्तरे वायवे तथा॥
ईशे चोर्ध्ववेदिः स्याद्दिव्यदार्वाङ्गपान्वितम्।

परितः शूलकम्पं स्याद् द्वार तद्दक्षिणोत्तरे ॥
तत्पश्चिमदेशे तु युद्धलोकनमण्डपम् ।
आख्यालोकनार्थं स्यात् कुर्याद्युक्त्या च मण्डपम् ॥
वरुणे पुष्पदन्ते वा मेषयुद्धार्थमण्डपम् ।
मृगे च भृङ्गराजे वा कुक्कुटायुद्धमण्डपम् ॥
मण्डपाङ्गणमध्ये तु परितो मेखलायुतम् ।
एकद्वित्रिचतुष्पञ्चहस्तमूलाग्रविस्तृतम् ॥
सार्धद्विहस्तनिम्नं स्यात्सार्धार्धपरिवान्वितम् ।
दौवारिकपदे चैव मयूरालयमेव च ॥
द्वारस्य दक्षिणे वाह्ये व्याघ्रकालयमेव च ।
तद्बाह्ये तत्र देवानां किरातालयमेव च ॥
तृतीये वितथे तस्य रहस्यावासमण्डपम् ।
चतुर्थे यमदिग्भागे सन्धिविग्रहमण्डपम् ॥
षट्सभावरणे वापि दक्षिणे पश्चिमेऽपि च (वा) ।
उत्तरे पूर्वके वापि गजाश्वादिवाहनम् ॥
आख्यालोकनार्थं च मण्डपं परिकल्पयेत् ।
ईशे वा वितथे चैव रङ्गमण्डपमेव च ॥
भृशे वा चान्तरिक्षे वा कारागृहमेव वा ।
प्राकारस्य चतुर्दिक्षु द्वारगोपुरकान्वितम् ॥

अ० पु०
राजवेश्मनां
षड् भेदाः
६६, ३०–३४

माडश्च मौडः शुद्धश्च शिखरं च चतुर्थकम् ।
तुङ्गारः सिंहकश्चैव षड् भेदा राजवेश्मनाम् ॥
छाद्यघण्टाकुटैर्माडा मौडश्चोर्ध्ववरण्डिकः ।
वरण्डिकाः सर्वभूषु शुद्धो बाह्यचतुष्कतः ॥
माडच्छन्दो भवे भद्रे भूमिशृङ्गाणि सन्ति चेत् ।
तच्च मौडाभिधानं स्यात् प्रशस्तं राजवेश्मनाम् ॥
शिखरं शिखराकारं सुरसद्मादिसम्भवम् ।
भद्रे भद्रे तवङ्गानि तुङ्गारा द्विगुणं गताः ॥
सिंहावलोकनं कुर्यात् सिंहकर्णैर्विभूषितम् ।
एवं वै षड्विधं प्रोक्तं राजवेश्मसुखावहम् ॥

विविधवर्गीय-
राजवेश्ममालिका-
प्रकारः
६६, ३१–४४

मालिकानि यथोक्तानि कथयामि समासतः ।
द्विशतहस्तविस्तीर्णं पञ्चषष्टिकरोच्छ्रयम् ॥
द्वारं सप्तदशहस्तं मध्यमं रंग सत्करम्? ।
याम्ये परे उत्तरेषु उच्छ्रयति विंशतिकरैः? ॥
राजा वा चक्रवर्ती वा खण्डजा मण्डलाधिपाः ।
मुकुटध्वजा भूपालाः सामन्ता लघवस्तथा ॥

छत्रधाराः प्रतीहाराः खड्गधराश्चतुर्वराः।
वंशोपानद्धराश्चैव अङ्गरचाचतुलिका? ॥
सुभटैरभिभज्यन्ते साधु साधुजनाकुलैः।
राजगृहं सदासेव्यमीशस्य चामरैर्यथा ॥
दासीदासाः सूपकाराश्छत्रधाराश्चव्यञ्जनाः।
महिषी कुरुते देवी चामरधारी त्वमासन्ना? ॥
तथा च केशवन्धाश्च जातीचम्पकग्रन्थिकाः ॥
कुङ्कुमश्रीखण्डहस्ता उद्वर्तनोत्तरिनायिकाः ॥
अर्क्णौ? च त्रीमुने स सर्वे नेन्द्रीप्रतिचोरका? ।
इष्टराज्ञीं सदा ध्यात्वा मुनिषोडशां यथा? ॥
त्रिभूमिमध्यकर्त्तव्यामालिका क्रमतः स्थिता।
सूर्यवंशोद्भवा शैवा वतरन्ति यदा महीम् ॥
तेषां वेश्मानि कार्याणि नान्येषां तु कदाचन।
एव तु राजवेश्मानि कर्त्तव्यानि च सर्वदा ॥

राजभवन-निवेशः
७६. १-४०

चतुःषष्टिपदैर्भक्ते राजवेश्मनि वास्तुनि।
देववेश्मराजवेश्म मैत्रपदे समाश्रितम् ॥
प्रदक्षिणान्ते मार्गाच्च निवेशःस्यात्तु वेश्मनः।
गजस्कन्धसमोत्सेधा ? प्रथमा ह्युच्चरंगिका ॥
इन्द्रेन्द्रजयोर्मध्ये च राजमातुर्निवेशनम्।
रुद्रे रुद्रदासे चैव वेश्मनः पेटमादिकम् ॥
वेदात्वेन्द्रजयोर्मध्ये भ्रमणी पदमध्यगा।
राजभुवनस्यार्धे तु भ्रमणी मार्गनिर्गता ॥
तद्वीथ्यग्रसन्धौ च प्रतोलीः कारयेच्छुभाः।
कार्याश्च भ्रमणीमध्ये गजशालास्तथोत्तमाः ॥
पूर्वार्धे तु त्रिभिर्माडैः पङ्क्तिरेका तु संस्थिता।
अपरयाम्योत्तराणि? शालाकिन उदाहृताः ॥
तद्बाह्यतोऽन्तर्मार्गश्च कर्तव्यं शुभलक्षणम्।
महिषीगृहाल्पहीनं राजमातुर्गृहं भवेत् ॥
मैत्रान्ते पुरतो भागे द्वारगर्भस्तथान्तरे।
गोपुराकृतिः कर्तव्यो दृढार्गलसमन्वितः ॥
तत्सूत्रेण कृतं द्वारं राजमातुर्गृहात्परम्।
मैत्राग्निकर्णे कुर्याच्च सभामाडं सुशोभितम् ॥
सिंहासनसमायुक्ता याम्यस्या चोत्तरानना।
सिंहावलोकनयुक्ता महाराजसभा भवेत् ॥
सभामध्ये तु कर्त्तव्यं वेद्यां सिंहासनं महत्।

श्रीधरोद्भवमाडं च सुवर्णरत्नभूषितम् ॥
ब्रह्मस्थानार्थतः स्तम्भैः सिंहद्वारं गर्भोत्तरे ।
याम्योत्तरे तु कर्त्तव्या गजयुधा गजोत्तमा ॥
तदग्रे चाट्टालकानि प्राकारे स्याद्रथाकृतिः ।
राजगृहाद् द्वे प्रतोल्यौ प्राकारान्तर्विनिर्गते ॥
राजमातुः पटराज्ञ्याः प्राकारो गृहतो भवेत् ।
सिंहद्वारसमानान्यनेकद्वाराणि कारयेत् ॥
विवस्वत्पृथ्वीधरार्धे प्राकारः पूर्वनिर्गतः ।
ब्रह्मणोऽन्ते तु प्राकारो जयद्वारं गर्भोत्तरे ॥
तत्प्राकारमध्यकर्णे गजशालावुभौ मतौ ।
तस्य बाह्ये गृहमन्यत् राजपिण्डपाद्यादिकम् ॥
आपवत्समरीच्यर्धे राजवेश्म गृहोत्तमम् ।
कपिशीर्षयुतश्चैव प्राकारो वास्तुबाह्यतः ॥
पित्रग्नीशरोगकर्णेष्वट्टालकचतुष्टयम् ।
महाप्रतोल्या माहेन्द्रे गिरिसंस्था तथोत्तरे ॥
भास्वतो यमदिग्भागे समस्ता च वलूरिका ।
राजवेश्मान्तर्भागे च वाद्यशाला तथोत्तरा ॥
वितथे गिरिसंस्थाने रथरन्ध्राणि कारयेत् ।
गिरौ काष्ठगृहं चैव वितथे चाम्भसां गृहम् ॥
सुग्रीवनन्दिसन्धौ च युद्धद्वारं पराङ्मुखम् ।
असुरशेषसन्धौ च द्वारमम्भोगृहैर्युतम् ॥
सुग्रीवपुष्पदन्तयोर्वरुणासुरयोस्तथा ।
अश्वशाला द्वादशैव कर्तव्याश्च शुभोत्तमाः ॥
अर्धे तवङ्गनिष्कास? सैन्यविस्तरविस्तृतम् ।
प्राकारसमुत्सेधानि त्रिमाडानि तदूर्ध्वतः ॥
कार्यं दौवारिके भित्तं? गजस्कन्धसमोच्छ्रितम् ।
द्वाराग्रे तु भवेन्माडं मल्लैरग्रे तु युध्यते ॥
पूर्वापरद्वारद्वयं द्वात्रिंशत्स्तम्भभूषितम् ।
तद्वृत्तमाडं वृत्तं तु पञ्चविंशतिभिः करैः ॥
स्तम्भे स्तम्भे पताका च द्विजालोककलोद्भवम् ।
रक्तपुष्पसमाकीर्णे द्वारिके चतुरङ्गुलम् ॥
खड्गविद्याविरयुद्धं छुरिकायुद्धमुत्तमम् ।
तथैव मल्लयुद्धं च गात्रभङ्गैरनेकधा ॥
निरोदयते यतः सर्वं रूङ्गाद्यायोधनं तथा ।
एवं युद्धोद्भवा राजप्रसादे च महोत्सवाः ॥

नियन्त्रितोभयद्वारं मार्ड रश्माद्यमुन्नतम्।
भित्ते चापरद्वारणि कार्याणि चासुरोन्मुखम् ॥
वाह्यदेवपंक्ति मध्ये राजवेश्मान्तमार्गतः।
मुख्यभल्लाटसाम्येषु गजशालापङ्क्तिद्वयम् ॥
याम्योत्तरमुखं कार्यं प्रशस्तं कर्वकामदम् ।
सौम्यान्ते हस्तिनीवेश्म तद्द्वारमपरोन्मुखम् ॥
बुधे यमे च गन्धर्वे तद्रूपा च द्वितीयका।
शोषे क्षये च रोगे च कोष्ठागारं तथादिमम् ॥
पित्रिमृगभृङ्गेषु ? च कोष्ठागारं द्वितीयकम्।
गोष्ठागारं कार्यमित्थ प्रोक्तं च विश्वकर्मणा।
ईशादितिदितिषु च भाण्डागारमापार्धतः।
पुष्पागारं सवित्र्ये ह्यग्नौ भृत्यान्तरिक्षयोः ॥
तृणशाला कर्तव्या प्रशस्ता शुभकर्मणा।
पर्जन्यं चाधिकरणं राज्ञः कार्यं पराङ्मुम् ॥
शुभा प्रतोली माहेन्द्रे जये श्रीकरणादिकम्।
आदित्ये वप्रकरणं सन्मुखं श्रीकरादिषु ॥
धर्माधिकरणं सत्ये कर्तव्यं चापराङ्मुखम्।
कर्णोर्ध्वे भूमिकाश्चैव तदग्रार्धे चतुष्किका ॥
जयस्य बाह्यपक्षे तु कुर्यात् कारागृहं तथा।
कात्यायनी च माहेन्द्रे प्रतोल्याः पुरतो बधुः ॥
आदित्याग्रे च वाह्ये तु कुर्याद् द्वयकरणाद्यकम्? ।
रूपकं दुःसाध्यकानां चतुष्कं तु राजादिकम् ॥
मरीचिस्थगर्भोत्तरे देवी राजकुलार्चिता।
पृथ्वीजयाख्यः प्रासादस्तेजःप्रतापवर्धकः ॥

**राज भवने**—महीशानां त्रिविधा राजालयाः, महामण्डलेश्वर-राजगृह-प्रमाणम्, माण्डलिकस्य भवन-प्रमाणम्, महासामन्त-वेश्मप्रमाणम्, सामन्त-लघु-सामन्त-भवन-प्रमाणम्, स्वल्पराष्ट्रभवन-प्रमाणम्, दण्ड-नायक-मन्त्रि-द्वारपाल-पुरोहित-जनानां वेश्मप्रमाणम्, हस्तत एकाद्येकादशपर्यंन्तभूमिमानम्, चक्रवर्त्ति-महामण्डलेश्वरादिमहीशानां वेश्मसु सिंहद्वाराणि, अन्याल्पराज्यानां भवनेषु केवलं तोरणानीत्यादिविषयाः नात्रोपवृंहिताः।

| | |
|---|---|
| सभा<br>स० सू० २७–१ | नन्दा भद्रा जया पूर्णा सभा स्याद् भाविता तथा।<br>दक्षा च प्रवरा तद्वद् विदुरा चाष्टमी मता ॥ |
| अश्वशाला<br>३३.१–२ | अथ लक्ष्माश्वशालायाः प्रोच्यते विस्तरादिह।<br>स्ववेश्मवास्तोः कर्तव्यं पदे गन्धर्वसंज्ञके ॥<br>अथवा पुष्पदन्ताख्ये स्थानं वासाय वाजिनाम्। |

३३. ७५. ७६॥ हयागारस्य पूर्वेण कार्यं भेषजमन्दिरम्।
तस्यैव वामतः सर्वसंभारान् परिकल्पयेत्॥
वाजिनां भेषजार्थाय भाण्डानि च विनिक्षिपेत्।
अगदानोषधीः स्नेहान् वर्तीश्च लवणानि च॥
भेषजागारसविधे कुर्याच्चारिष्टमन्दिरम्।
भवनं व्याधितानां च कार्यं वासाय वाजिनाम्॥
सुगुप्तं तच्च कर्तव्यं पूर्वनिर्दिष्टवेश्मवत्।
संबद्धं च विधातव्यमेतत् वेश्मचतुष्टयम्॥
सुधाबन्धदृढैः कुड्यैः सप्राग्ग्रीवोच्चतोरणम्।
चत्वार्यपि विशालानि सुगमानि च कारयेत्॥
वेश्मस्त्वेवंविधेष्वश्वान् स्थापितान् परिपालयेत्॥

गजशाला — — — — — — सुभद्रेयमुदाहृता॥
३२. ९.-११ अस्या एव यदा पश्चप्राग्ग्रीवौ भवतो मुखे।
नन्दिनी नामतः शाला तदा स्याद् गजवृद्धये॥
अस्या एव यदा स्यातां प्राग्ग्रीवौ पार्श्वयोर्द्वयोः।
तदा सुभोगदा नाम तृतीया परिकीर्तिता॥
अस्या एव यदा पृष्ठे प्राग्ग्रीवः क्रियतेऽपरः।
भद्रिका नाम शाला स्यात् तथा द्विरदपुष्टिदा॥
पञ्चमी चतुरश्रा स्याद् वर्षणी नाम पूजिता।
प्राग्ग्रीवालिन्दनिर्यूहहीना षष्ठी तथापरा॥
शाला प्रमारिका धान्यधनजीवितहारिणी
तदेतां वर्जयेत् कुर्यादन्याः सर्वार्थसिद्धये॥
प्रमारिकेति प्रथितेह शाला सा प्राणसस्यद्रविणच्छिदे स्यात्।
कुर्यादतस्तां न यथोदितासु कार्याः परा जीवितवित्तवृद्ध्यै॥

## राज-निवेशे प्रमुख-निवेशानां लक्षणम्

वि० वा० सार्वभौमादिभूपानां गुणिनां नयचक्षुषाम्।
न्यायशाला आस्थानिकं द्विधा प्रोक्तं न्यायशालासभाक्रमात्॥
१६. १-२२ न्यायशालास्थानिकन्तु प्रत्यहं राजपूजितम्।
धर्मसंस्थापनकार्येषु साक्षीभूतमहेश्वरा॥
सभा ब्रजादिनास्थानं महिष्यादिभिरर्चिता।
प्रासादे भवने हर्म्ये परिवारावृताङ्गणे॥
शुद्धां वेदीं पीठिकां वा समासाद्य महीपतिः।
नियम्य च मनःश्रेयोवर्धनं व्रतचारणम्॥
न्यायशाला तु कथिता सर्वदेवमयी शुभा।

सर्वशक्तिमयी सर्वप्राणिनां क्षेमवर्धिनी ॥
गुणाढ्या न स्थिरधिया भूभर्त्रा नयचक्षुषा ।
सा सेव्या लोकरक्षार्थं सहामात्यपुरोहितैः ॥
तस्मात्सर्वप्रयत्नेन तां कुर्याल्लक्षणान्विताम् ।
समस्थलां सावयवां सदेवां शिल्पकल्पनैः ॥
देश्या पौरेति सा न्यायसभा तु द्विविधा मता ।
जन्माधिष्ठानसंयुक्तां चतुर्दिग्द्वारभूषिताम् ॥
नयवाद्यासनोपेतां सामन्तासनसंयुक्ताम् ।
शालाकारां सभाकारां वर्तुलां चतुरश्रकाम् ॥
भूपालस्येच्छया वापि राजकार्यानुकूलतः ।
कोशागारयुतां देश्यां कल्पयेच्च सदेवताम् ॥
चक्रवर्तेः पटभाजो युवराजस्य भूभुजः ।
नरेन्द्रस्य क्षत्रियस्य महाराजस्य भूपतेः ॥
सामन्तस्य महीनेतुरासनेन समुज्ज्वलाम् ।
पौरां तु न्यायशालाख्यां मानसूत्रेण कल्पवित् ॥
विभज्य स्थानभेदादीन्स्थापयेल्लक्षणान्विताम् ।
मध्यशालाप्रमाणन्तु भानुदण्डकमीरितम् ॥
तदर्धं वा तदर्धं वा पूर्वशालाप्रमाणकम् ।
उपशालाभद्रकाख्यैरन्वितं च समन्ततः ॥
शालाकारां सभाकारां मण्डपाकृतिमेव वा ।
चतुरश्रां वर्तुलां वा त्रितलादिविराजिताम् ॥
महाधिष्ठानसंयुक्तां त्रिंशत्सोपानवेदिकाम् ।
देवासनसमोपेतस्तम्भकूटविराजिताम् ॥
विमानरचनोपेतां कुर्याच्छिल्पविशारदः ॥
ईशानादिचतुष्कोणेष्वष्टपादसमन्वितम् ।
पक्षद्वये षोडशकं चत्वारिंशत्सहस्तकम् ॥
चतुःपङ्क्तौ षोडशकं षट्पादं मध्यमाङ्गणम् ।
अङ्गणद्वययुक्तं वा पुरोव्यत्यासभागपि ॥
द्वात्रिंशत्पादयुक्तं वा मण्डलाकारभाक् तथा ।
चतुर्विंशत्पदोपेतमेवं त्रिविधकल्पनम् ॥
आद्यन्तु चतुरश्राख्यं द्वितीयं दीर्घवास्तुकम् ।
तृतीयं मण्डलं प्रोक्तं त्रितलेन समन्वितम् ॥
पूर्वभद्रसमायुक्तं मुक्तातोरणमण्डितम् ।
पूर्वास्यमुत्तरास्यञ्च वारुणास्यं क्रमादिदम् ।
कारयेच्छिल्पकर्मज्ञः.............................बुधः ॥

पौरा देव्या च सभा न्यायाधिकरणस्थाने सभा मुख्या प्रधानिका ।

१७, १-१४ देवी राज्ञी मानुषीति तत्क्रमः कथितो बुधैः ॥

अष्टोत्तरशतग्रामकार्यशाला सभा मता ।
मुख्या सभा तु सा प्रोक्ता पुराष्टोत्तरकार्यभाक् ॥
सार्वभौमेन वा भूपा भूपालैः चक्रवर्तिभिः ।
मान्या प्रधानिका प्रोक्ता सिंहासनसमन्विता ॥
सामन्तैर्वा माण्डलिकैः मण्डलाग्रविधायिनी ।
सचिवासनसंयुक्ता तत्स्थानसमाख्यया ॥
महाशालासमायुक्ता सर्वतोऽङ्गणशालिनी ।
दशदण्डादिकं मानं द्विद्विदण्डेन योजिताम् ॥
विंशद्दण्डकमानेन संयुतां कुम्भभासुराम् ।
शुद्धां वा मिश्रितां वापि कारयेच्छिल्पकोविदः ॥
मध्यशालाप्रमाणन्तु तदर्धं वा तदर्धकम् ।
वेदिकाद्यासनोपेतामुपशालां समन्ततः ॥
देव्यां पौरां तथा शालां माण्डलीकाश्च तत्स्थले ।
तन्नायकासनोपेतां पार्श्वद्वयवेदिकाम् ॥
महाधिष्ठानसंयुक्तां पूर्वोक्तां द्वितलाधिकाम् ।
चत्वारिंशत्पदोपेतां न्यायवेद्या समन्विताम् ॥
पञ्चाशद्द्वारां च कुम्भशालाष्टकसमन्विताम् ।
चतुर्विंशत्पदोपेतामुत्तरस्यां सतोरणाम् ॥
विमानच्छन्दोपेतामेकादितलभासुराम् ।
स्थापयेन्मानविच्छिल्पी युक्त्या मानेन सर्वतः ॥
अथवा त्रिंशत्पदैः संयुतां मध्यशालकाम् ।
चतुष्पदयुतां दिक्षु कुम्भपादयुगान्विताम् ॥
वर्तुलां चतुरश्रां वा तां प्राच्यादिगतां न्यसेत् ।
सपालिकाननां पार्श्वद्वारोपद्वारशोभिताम् ॥
इत्यादि बहुधा चित्रैः शोभितां कल्पयेद् बुधः ॥

भाण्डागारम् धनं सम्पादयेद्धीमान् कोशवृद्धिकारणम् ।

१८, १२-२८ धनसंरक्षणी शाला भाण्डागारमितीरिता ॥

तां शालां स्थपतिश्रेष्ठः स्थापयेल्लक्षणान्विताम् ।
देव्या पौरेति सा शाला द्विविधा कथिता बुधैः ॥
देव्या सद्मगा सालिन्दा द्वारोपद्वारसंयुता ।
प्राकारद्वयसंवीता भित्तिफलकसंवृता ॥
भूम्यां भूगर्भसंयुक्ता सप्तसोपानसंयुता ।
चतुरश्रा पार्श्वभागे देवीनां स्थानसंयुता ॥

प्रकल्प्या स्थपतिश्रेष्ठैश्शुभकाले विशेषतः।
पौरन्तु कोशसदनं प्रासादान्तर्गतन्तु वा॥
सप्राकारं सदुर्गं वा सप्तभित्तिसमावृतम्।
मण्डपाकृतिकं वापि शालाकारमथापि वा।
तदन्तर्भूगर्भदेशे चतुरश्रप्रमाणकम्।
अलिन्दद्वयसंयुक्तं तद्द्वारं कीर्तितं क्रमात्॥
दण्डत्रयं चतुर्दण्डमथवा पञ्चदण्डकम्।
मध्यभागप्रमाणं च स्थापयेत्सूत्रमानवित्॥
गणकाद्यधिनेतृणामासनैश्च समन्वितम्।
सर्वाभरणकैर्दिव्यैर्निधिदेवैस्सुरक्षितम्॥
भूगर्भस्थानसंयुक्तं भूमिदेवीसमन्वितम्।
धेनुचित्रलसन्नागधनदेवैः समन्वितम्॥
स्थापयेदुत्तरास्यञ्च सौवर्णद्वारपट्टिकम्।
सुवर्णं स्थापयेत्पूर्वे राजतं दक्षिणे तथा॥
उदीच्यां नवरत्नानि वारुणे लिपिकान्विणः।
स्थापयेत्क्रमशो भक्त्या प्रत्यहं चार्चयेन्नृपः॥
प्रथमावरणे दीपदेवी स्थाप्या सहासना।
द्वितीयावरणे देवी चामरग्राहिणी तथा॥
तृतीयावरणे देवी चाशीर्वचनकारिणी।
एवं देवीत्रयं स्थाप्यं यशोधनजयप्रदम्॥
कम्बलास्तरणोपेतमध्यभागविराजितम्।
सुवर्णपट्टसंयुक्तं राजतैस्तोरणादिभिः॥
शिखरत्रयसंयुक्तविमानेन च भासुरम्।
नानाचित्रसमोपेतं वितानैरपि मण्डितम्॥
पूर्वशालासमायुक्तं खड्गचिह्नसमन्वितम्।
स्थापयेन्मतिमान् शिल्पी रक्षकैस्संवृताङ्गणम्॥

आयुधागारम्
२०. ११-२२

गन्धमाल्याक्षतैश्शुद्धैस्सर्वकामसमृद्धये।
अस्त्राणामपि शस्त्राणां यन्त्राणां बहुरूपिणाम्॥
स्थानकं मातृकान्यासं भक्त्या सम्मानयेन्नृपः।
कुन्तः पाशस्तरी खड्गः करवालस्सखेटकः॥
भल्लः खरः खरोद्धारो भिण्डिपालस्समेरुकः।
शङ्कुलश्च कुठारश्च टङ्कश्शूलस्सृणिस्तथा॥
मुसलो वह्निकाग्रञ्च खलुका मुष्टिभेदनम्।
परशुस्तरवारी च छुरिका च विदारिका॥
मण्डलाग्रादयश्चान्ये परमर्मप्रभेदिनः।

तानशेषांस्तदीशानानर्चयेत्प्रत्यहं नृपः ॥
दशादिविंशतीदण्डवैशाल्येन समन्विताम् ।
प्राचीमुखां स्थापयेत्तु पञ्चप्राकारसंवृताम् ॥
उत्तमाधिष्ठानभावां पञ्चशालान्वितां तथा ।
कालीं रुद्रपतिं द्वारे स्थापयेत्तत्र भूपतिः ॥
महावेदीमध्यभागे क्षुद्राधिष्ठानसंयुता ।
चतुःक्षुद्रपदोपेतां चतुःकर्णसमन्विता ॥
प्रागानना नागकर्णा ब्रह्मदेवा च कीर्तिता ।
तत्र स्वर्णमये पीठे खड्गः स्थाप्यश्शुभेऽहनि ॥
शालानां मध्यभागेषु कुन्तादीन्कल्पयेत्क्रमात् ।
हेतिनाथप्रतिकृतिं कल्पयेत्तत्र भित्तिषु ॥
एकभौमा त्रिभौमा वा शाला सा परिकीर्तिता ।
शिखरत्रयसंयुक्ता छत्रयुक्ताऽथवा मता ॥
पताकालङ्कृता कल्प्या शुभे काले नृपाज्ञया ।
प्रत्यब्दं ब्राह्मणान्भूपस्तोषयेद्भोजनादिभिः ॥

पुस्तक-शाला
२०. २३-२४

खड्गसन्धारणं राज्ञश्शास्त्रसेवनमित्यपि ।
द्वयं (चैव विशेषेण) शुभप्रदमितीरितम् ॥
विज्ञानधर्मसुकृतसुखतत्त्वादिवर्धकम् ।
शास्त्रं भूपतिना सेव्यं नियमेन (मनीषिणा) ॥
ज्ञानेन प्राप्यते लक्ष्मीर्ज्ञानेन सुखमश्नुते ।
प्राणिसंरक्षणे ज्ञानमाद्यो मन्त्रीति कथ्यते ॥
गुरुदेवार्चनपरः प्राणिरक्षादृढव्रतः ।
यशसे कल्पते भूपश्शास्त्रसेवनतत्परः ॥
तेन तुष्यन्ति पितरो ब्राह्मणा वेदपारगाः ।
काले वर्षति पर्जन्यो मेदिनी सस्यशालिनी ॥
सुखभाजः प्रजाः सर्वा न्यायस्थितिरचञ्चला ।
इत्यादिक्षेमजनकं शास्त्रसेवनमीशितुः ॥
तस्माद्भूपतिना कार्यं प्रत्यहं शास्त्रसेवनम् ।
प्रासादे नीतिभवने पुराणामपि मध्यमे ॥
विदुषां मेलनस्थाने शास्त्रशालां प्रकल्पयेत् ।
चतुरश्रा शास्त्रशाला प्राङ्मुखावरणत्रया ॥
मध्ये कल्पविधानेन प्रकल्प्या वेदवेदिका ।
मुखभद्रचतुष्केण संयुताङ्गणशोभिनी ॥
बहिरान्धारिका युक्ता वातायनशतोज्ज्वला ।
एकभौमा त्रिभौमा वा शिखरेणापि भासुरा ॥

प्रथमावरणे वेदी द्वितीयावरणे स्मृतिः।
तृतीयावरणे चार्षं वेदनाथः परः पुमान्॥
वाणीं हयमुखं शम्भुमुमां सपरिचारिकाम्।
स्थापयेत्तत्र कार्यज्ञः कलशादिसमन्विताः।
गुरुपीठसमायुक्तः प्रजानां शेमुषीप्रदः॥

वसन्त गृहम्
२४. १–१०

सार्वभौमादिभिर्भूपैर्मोदाय मधुसेवनम्।
काले कार्यमिति प्रोक्तं तन्त्रविद्भिर्मुनीश्वरैः॥
तस्मात्तत्कल्पयेत्पुर्यामुद्याने भवनान्तरे।
परितस्तु चतुश्शालं जलकुम्भादिशीतलम्॥
प्राङ्मुखं कल्पनं शस्तं तदेव प्रीतिदायकम्।
चतुर्दण्डप्रमाणेन हीनं नोत्तममीरितम्॥
चतुश्शालावृते मध्यभागे मण्डलकल्पनम्।
विश्रान्तिवेदी तत्रैव गन्धशैत्यादिभासुरा॥
चत्वरादिसमोपेता सालङ्कारा सतोरणा।
सुखीकरणयुक्तं वा मण्टपाकृति वा भवेत्॥
चतुर्द्वारसमोपेतं नानाङ्कणसमन्वितम्।
एकभौमयुतं भौमं त्रिभौमं सार्वभौमिकम्॥
योषितां तु पृथक् शाला कल्पनीया विशेषतः।
नानासनसमोपेता सुहृदादिविभेदतः॥
शीतलैरुपचारैश्च मेदुरा दिशि सर्वतः।
चतुर्दिङ्मण्टपं पूर्वमन्दिरं वा प्रकल्पयेत्॥
क्षुद्राधिष्ठानसंयुक्तं सोपानावलिमञ्जुलम्।
आलोकमण्टपोपेतमथवा गीतिशालकम्॥
सतटाकं विहरणस्थानञ्च परिकल्पयेत्।

नृपायतनेषु—स० सू० ५१

उत्तमादिभेदेन त्रिधा भिन्नस्य नृपायतनस्य मानं विन्यासश्च ; नृपानुजीविनृपपत्नीगृहाणां देवधिष्ण्यानां च दिग्विभागादिकम् ; मन्त्रिसेनानीप्रतीहारपुरोधःप्रासादानां दिग्विभागादिकम् ; राजमातृस्वसृमातुलकुमार - प्रासादानां दिग्भागादिकम् ; द्विजमुख्यसामन्तकुञ्जरारोहभटपौरजनगृहाणां दिग्भागादिकञ्च तथा ; सर्वेषां गृहाणाम् सामान्यविधिः । इतरेषां गृहाणां भूषणादिभिः राजगृहैः साम्यमाधिक्यं च परिहरेदिति च वचनम्

समराङ्गण एव द्रष्टव्यम्। विस्तारत्वादत्र न दीयते।

---

## द्वितीयः पटलः

### पुर-निवेशोचित-द्वारभवनादिलक्षणम्

#### प्रतोली-लक्षणम्

अ० पृ०
८२. १-२८

प्रतोलीश्च प्रवक्ष्यामि कनिष्ठमध्यमोत्तमाः।
उच्छ्रयस्त्रिविधो वत्स द्वारां प्राकारतोऽपि च॥
प्रतोल्या द्वार उत्सेधः पञ्चदशकरैः शुभः।
मध्यस्त्रयोदशकरै रुद्रहस्तैः कनिष्ठकः॥
कनिष्ठमेकभूमं च द्विभूमं चैव मध्यमम्।
उत्तमं च त्रिभूमं स्यात् त्रिधोदितक्रमागतम्॥
उत्तमं चाऽष्टहस्तैश्च सप्तहस्तैश्च मध्यमम्।
कनिष्ठं चैव षड्हस्तैर्विस्तारस्त्रिविधो मतः॥
नवहस्तोच्छ्रिताः स्तम्भाः कुम्भकैः सुसमन्विता।
ऊर्ध्वमेकद्वित्रिक्षणा मालिकाश्च ह्यनुक्रमात्॥
मदलाः शीर्षस्तम्भिका निर्यूहे मदलाः पुनः।
स्वस्तिकाद्वयं शीर्षोर्ध्वे निर्यूहे मदला पुनः॥
शीर्षोर्ध्वे च भवेत्पट्टः शाखार्धं चोत्तराङ्गम्।
तुला जयन्ती पीता सा ? निर्मलं कपिशीर्षकम्॥
तदूर्ध्वे च पुनर्भूमिश्चतुर्द्वारं तृतीयके।
दृढार्गलाः कपाटाश्चाऽपवरकास्ततः परम्॥
वक्त्रद्वाराणि वक्ष्यामि प्रतोलीनां चतुष्टयम्।
अनुक्रमेण कर्त्तव्यं कथयामि समासतः॥
उत्सङ्गः पूर्णबाहुश्च हीनबाहुस्तथापरः।
प्रतिकाय इति प्रोक्तं प्रतोलीनां चतुष्टयम्॥
उत्तरामुख उत्सङ्गः पूर्णबाहुश्च पूर्वतः।
अपरे हीनबाहुश्च प्रतिकायस्तु दक्षिणे॥
सृष्टिप्रवेश उत्सङ्गः प्रतिकायोऽपसव्यतः।
पूर्णबाहुः पूर्ववक्त्रो वामास्यो हीनबाहुकः॥
वामभागे दिशि दिशि वामावर्तोद्भवास्तु ये।
द्वारं च दक्षिणावर्तं कथितं स्वपराजित॥
एकपोल्यं त्रिपोल्यं वा पञ्चपोल्यमथोच्यते।
एवंविधः प्रकर्तव्यः पोल्यानां तु समुच्चयः॥

एकपोल्यं वक्त्रद्वारं त्रिपोल्यं भ्रमणाढ्यम् ।
पञ्चपोल्यं तु चित्राढ्यं कर्तव्यं सर्वकामदम् ॥
प्राकारादियुक्तभागैर्विस्तरो भागषट्कृतः ।
निर्गमश्च चतुर्भागैः प्राकारो यत्र वाञ्छितः ॥
याम्यपार्श्वे समस्तत्र विस्तरस्तु त्रिभागिकः ।
निर्गमश्च त्रिभागैश्च संक्षेपात्कथितं मया ॥
त्रिभागं दक्षिणे त्यक्त्वा द्विभागं च तथोत्तरे ।
शेषा प्रतोली चैकांशा भागं दक्षिणभित्तिका ॥
भवेत् भागोत्तरा भित्तिः कर्णान्ते वलणं त्रिभिः ।
दक्षिणे भित्तिपार्श्वेऽग्रे कर्णान्ते वलणं त्रिभिः ॥
द्विभागं विस्तरं कुर्याद् वक्त्रमार्गप्रवेशनम् ।
एकपोल्यमिति ख्यातं संक्षेपात्कथितं मया ॥
वामे द्विभागविस्तीर्णे अपरे दशभागिके ।
दक्षिणे समभागश्च चतुर्भागं परे हितम् ॥
त्रिभागे विस्तरं याम्ये अपरेऽस्य तमपदम् ॥
याम्ये कुर्याच्च वेदांशं मूलद्वारं तु कारयेत् ।
चतुर्भागाभ्रमणं भागा भित्तिर्यास्योत्तरे ॥
भागा भित्तिस्तदग्रे च समद्वारं सतोरणम् ।
पुनर्भ्रमश्चतुर्भागः षड्भागश्चैव विस्तरे ॥
विधेयं पूर्ववच्छेषं त्रिपोल्यं नाम शोभनम् ।
यथा वामे तथा दक्षे भित्तिर्भागा भुजान्ततः ॥
मध्यभित्तिर्यथा पूर्वं चतुष्काकृति तोरणे ।
द्वारं द्वारस्य सूत्रेण भागिको भित्तिविस्तरः ॥
पुनरन्ते चान्तरे च द्वारं द्वारतृतीयकम् ।
तद्वत्तुल्यानि क्षेत्राणि कार्याणि शोभनानि वै ॥
पूर्वद्वारानुक्रमेण उभे द्वारे याम्योत्तरे ।
वक्त्रद्वारं पुनस्त्वेवं कर्तव्यं दक्षिणोत्तरे ॥
पञ्चपोल्यमिदं ख्यातं प्राकारः कपिशीर्षतः ।

राजालयछत्रादिकम्
अ० पु० ८१. १–२७

राजालयं च कथये प्रतापकीर्तिवर्द्धनं ॥
लक्षणं चोच्छ्रयं भूमेर्हस्तसङ्ख्याप्रमाणकम् ।
एकच्छत्रप्रभोक्ता यः स भवेच्च महीपतिः ॥
अष्टोत्तरशतहस्तैः कार्यं भवनमुत्तमम् ।
पृथिव्याश्च यदा राजा भुङ्क्तेऽर्धं परमेव च ॥
तस्य वेश्म प्रकर्त्तव्यं शतं हीनकरद्वयम् ।
तथा महीत्रिभागं च भुङ्क्ते यो वै नराधिपः ॥

अष्टाशीतिकरं वेश्म महीशानां त्रिधा मतम्।
लक्षग्रामाधिपो यस्तु स महामण्डलेश्वरः॥
तस्य वेश्म प्रकर्त्तव्यं द्विहीनाशीतिहस्तकम्।
लक्षार्धं यस्तु भुङ्क्ते स मण्डलीकोऽभिधानतः॥
अष्टषष्टिकरं तस्य कर्त्तव्यं भवनोत्तमम्।
अयुतद्वयग्रामेशो महासामन्तसंज्ञकः॥
तस्य वेश्माष्टपञ्चाशत्-करं कामफलप्रदम्।
सामन्तसंज्ञकः सोऽत्राऽयुतग्रामाधिपश्च यः॥
अष्टचत्वारिंशद्धस्तं भवनं सर्वशोभनम्।
ईशोऽयुतार्धग्रामाणां लघुसामन्तसंज्ञकः॥
अष्टत्रिंशत्करैर्युक्तं भवनं तस्य कामदम्।
सहस्रमेकं ग्रामाणां भुङ्क्ते स चतुरंशिकः॥
वेश्माऽष्टाविंशतिकरं कुर्याच्छान्तिकरं सदा।
ग्रामाणां विंशतिं भुङ्क्ते यः पञ्चदशकं तथा॥
ग्रामांस्त्रीन्द्वौ तथा चैकं भुङ्क्ते पर्यायसंस्थितः।
शतमेकं तु ग्रामाणां स्वल्पराष्ट्रं तु संज्ञितम्॥
अष्टादशकरं वेश्म कर्तव्यं सर्वकामदम्।
अष्टादशकरमध्ये ताः कर्तव्याः क्रमेण तु॥
सोपानपङ्क्तिमर्यादा कथिता त्वपराजित।
राजालये च यन्मानं तदर्धं दण्डनायके॥
तदर्धं मन्त्रिसंस्थानं मन्त्र्यर्धं द्वारपालके।
पुरोहिते तत्समं च तदर्धं जनसंकुले॥
अनुक्रमादिकं सर्वं ज्येष्ठमध्यकनिष्ठकम्।
अष्टहस्ते त्वेकभूमं द्विभूममष्टादशके॥
त्रिभूममष्टाविंशत्याऽष्टत्रिंशद्भिर्वेदभूमम्।
अष्टचत्वारिंशद्भिः पञ्चभु षड्भ्वष्टपञ्चाशद्भिः॥
अष्टषष्ट्या सप्तभूममष्टभ्वष्टसप्ततिभिः।
अष्टाशीत्या नवभूमं दशभ्वष्टनवतिभिः॥
भद्रमेकादश भूममष्टोत्तरशतात्मके।
सिंहद्वारानुक्रमं च कथये त्वपराजित॥
द्वारत्रयन्तूत्तमे च कर्त्तव्यं चक्रवर्तिभिः।
उत्तमं पञ्चदश च मध्यमं च त्रयोदश॥
कनिष्ठं रुद्रहस्तान्तमुच्छ्रयेण तु योजितम्।
इदं सिंहद्वारमानं त्रिधा स्याच्चक्रवर्तिनि॥
महाराष्ट्रेश्वरे राज्ञि महामण्डलकेश्वरे।

चक्रवर्तिनि मध्याधे कनिष्ठं मण्डलेश्वरे ॥
अनन्तरं च कथये सिंहद्वारे यथाक्रमः।
द्वारयुग्मं तु कर्त्तव्यं महासामन्तके सदा ॥
द्वारमेकं तु कर्त्तव्यं तथा सामन्तकादिके।
अन्येषां स्वल्पराज्यानां ये स्मृताश्चान्यसंज्ञकाः ॥
तेषां च तोरणं दद्यात् सिंहद्वारविवर्जितम्।
स्तम्भयुग्मं त्वङ्गाग्रं सिंहकर्णैर्विभूषितम् ॥
नपुंसकैः विना कर्णैः स्वल्पराजेषु भाषितम्।
स्तम्भयुग्मोर्ध्वतः कुर्यात्पत्रमालात्रयं तथा ॥
विप्रेषु क्षत्रियोक्ताश्च मालायुग्मं च वैश्यके।
एकमाला तु शूद्राणां स्तम्भोर्ध्वं वंशकोच्छ्रिताः ॥
वंशोच्छ्रिता विना स्तम्भैः प्रकृतीनां च सर्वशः।

प्रविभाजितपदे निविष्टमार्गे प्रविभक्ततत्तज्जातिवर्णाधिवासे प्राकारपरिखादियुते मुनिविष्टारामोद्याने च पुरनिवेशे केषाञ्चन जनभवनानामपि निवेशाः बाढमपेक्ष्यन्ते तेषु केचन यथाः—

विद्या-शाला
वि० वा०
२०-१-११

प्रासादे भवने पुर्यां ग्रामे वा शुभवास्तुके।
विद्याशालामेकशैलीमेकसूत्रप्रमाणकाम् ॥
समानकल्पनयुतां नानाभौमाम प क्वचित्।
वासश्चार्पद्वारयुक्तां कल्पयेत्क्षेमसिद्धये ॥
मध्यमानाधिका चान्तःशाला चत्वरशोभिनी।
चतुर्दिग्द्वारसंयुक्ता चतुःकल्पनशोभिनी ॥
नानावरणसंयुक्ता तलपङ्क्तिभासुरा।
सुषिराढ्या स्तम्भयुता समकल्पनभासुरा ॥
शालामण्टपभेदेन द्विधाऽधिष्ठानभाक् तथा।
दृढभित्तिसमायुक्ता वातायनशतान्विता ॥
महाशाला बहिः स्थाप्या द्वारभागे विशेषतः।
मिथो द्वारसमोपेता मध्यशाला प्रकीर्तिता ॥
वास्तुभेदेन तद्वारां प्रविभज्य विशेषतः।
पुष्पवेदिसमायुक्तां कल्पयेन्नगरोत्तमे ॥
शास्त्रशालान्वितां मध्ये वादस्थानसमन्विताम्।
परीक्षास्थानसंयुक्तां क्लृप्ताभ्यागगृहां तथा ॥
नानाभेदयुतां भूपो राजधान्यां प्रकल्पयेत्।
विमानशिखरोपेतां नानाचित्रमोहगाम् ॥
सर्वालंकारसंयुक्तां पूर्वमण्टपशोभिताम्।

सह मङ्गलघोषेण लोकक्षेमाय भूपतिः ॥
स्थापयेच्छिल्पिभिर्विद्याशालां शुभमुहूर्तके ।

रङ्गशाला
वि० वा०
४१-१-२६

प्रासादस्य पुरोभागे स्वास्थानस्य तु दक्षिणे ।
मन्त्रिसेनेशभवनपार्श्वे वा पुरमध्यमे ॥
मध्यसद्मसमीपे वा मेलनस्थानकेऽपिवा ।
राजवीथीमुखान्ते वा शृङ्गाटकतलेऽथवा ॥
रङ्गशालां गीतिशालां मिलितां स्थापयेद् बुधः ।
देवगन्धर्वमानुष्यभागत्रयविभाजिताम् ॥
गीतिशाला नाट्यशाला पृथक्स्थाप्या क्वचित्स्थले ।
चतुर्दण्डं समारभ्य द्विद्विदण्डविवर्धनात् ॥
विंशद्दण्डान्तकं मानं प्रतिभागं विधीयते ।
राजधान्यां क्वचिद्भागे मानाधिक्यन्तु मानुषे ॥
अथवा यद्द्विगुणितं मानं वा नेयमीरितम् ।
अथवा मण्डलं भागं मानुषं कल्पयेद्बुधः ॥
अथवाऽऽवरणस्थानात्क्वचिद्भौमादिभेदतः ।
पार्श्वाङ्गणस्थापनाद्वा महिष्याद्यवलोकनम् ॥
यथा स्फुटन्तु सर्वेषां तथैतत्कल्पनं वरम् ।
महाधिष्ठानसंयुक्तं नेत्रत्रयसमन्वितम् ॥
कल्पनं सुखदं नृणां देवाद्यानन्दवर्धकम् ।
दैवेऽलङ्करणं शस्तं गान्धर्वे गानमीरितम् ॥
मनुष्यभागे स्थानानि कथितानि सभासदाम् ।
मनुष्यभागस्य पुरः स्थानं वैरिञ्चमीरितम् ॥
ब्रह्मद्वारन्तु तत्रस्थमखण्डानन्दवर्धकम् ।
द्वारोत्सेधसमं श्रेष्ठं चतुरंशविहीनकम् ॥
मध्यमे द्वित्रिभागे च कन्यसंवृषभोदयम् (?) ।
गर्भार्धकस्य तद्द्वारन्यासमत्र प्रकीर्तितम् ॥
रङ्गवेद्या समायुक्तं स्थलमेतन्निगद्यते ।
गायकानां स्थानकं वा निस्साणातोद्यभूमिकम् ॥
तदन्तरेऽष्टभागं वा नवभागमथापि वा ।
विभजेत्तत्र मानज्ञः कल्पयेत्सदनं दिशि ॥
पञ्चाद्यकरं तुङ्गमेकांशं मात्रमीरितम् ॥
पञ्चाद्यङ्गुलमायाममेवं तन्मानमीरितम् ।
सव्ये नदीनां वस्त्रादीनितरस्मिन्नटस्य च ॥
शाला वा कूटका वापि पूजोपकरणार्हका ।
शालाकृतिः प्रकर्तव्या पुरतो नान्दिकोचिता ॥

तत्पुरः सदनं तुङ्गं नानाभौमयुतं महत् ।
चतुर्दण्डं पञ्चदण्डमथवा दशकावधि ॥
मानमत्र प्रयोज्यन्तु तक्षकैः कल्पनार्हकम् ।
मध्यभागं विशालं च नानाङ्गणविराजितम् ॥
विमानशिखरोपेतं कर्णनासाविभूषितम् ।
तुङ्गस्तम्भशतैर्युक्तमशीतिस्तम्भकं तु वा ॥
चतुष्षष्टिस्तम्भयुतमथवैतत्प्रकल्पयेत् ।
शालाकारमिदं प्रोक्तं राजवेश्मनि मण्टपम् ॥
वदन्ति मुनयश्शस्तं ज्ञानानन्दकरं परम् ।
मणिदर्पणशोभाढ्यं वातायनशतान्वितम् ॥
तोरणादीनि चित्राणि तत्र तत्र प्रकल्पयेत् ।
विधातारञ्च वाणीं च गीतिशास्त्रप्रवर्तकान् ॥
विद्याधरीं जगद्धात्रीं कल्पयेच्चन्द्रसूर्यकौ ।
द्वारपार्श्वस्थले योधं स्थापयेद् खड्गधारिणम् ॥
चामरग्राहिणीं दिव्ययोषितं वाऽत्र कल्पयेत् ।
लक्ष्मीमुमां शिवं दिव्यगायकान्वा प्रकल्पयेत् ।
पार्श्वभित्तिसमायुक्तामङ्गणाङ्गणकल्पनाम् ॥
सुषिरद्वारभागाढ्यामात्तपङ्क्तिक्रमां तथा ।
कल्पयेल्लक्षणोपेतैः नानाचित्रादिभिर्युताम् ॥
क्वचिदुद्यानवापीं वा सुखदां शुद्धवास्तुकाम् ।

गोशाला
वि० वा०
६६. १–१४

देवानां च पितॄणां च गोसेवाऽऽनन्दकारिणी ।
गोभिस्स्वर्गफलं विन्दन्मोदते दिवि मानवः ॥
गोभिरेव सुखं पुंसां जायते नात्र संशयः ।
तस्मात्स्थपतिभिस्स्थाप्या गोशाला शुभवास्तुके ॥
चतुर्थभागसीमान्ते निष्कुटाराममध्यमे ।
शोषे वा भृङ्गराजे वा पश्चाद्भागस्थलेऽथवा ॥
कल्पनेन समायुक्तं वियुक्तं वाऽथ कल्पयेत् ।
गोशाला मण्टपाकारा पार्श्वाङ्गणसमन्विता ॥
कूटाकारा क्वचित्कार्या सपादा वा विपादका ।
सार्कप्रभा सावरणा हेमन्तादौ सुखप्रदा ॥
समसूत्रसभायुक्ता महाद्वारक्रियान्विता ।
सुषीरभागद्वारा वा सुखकल्पयुता क्वचित् ॥
सोपानद्वययुक्ता वा त्रिसोपाना क्वचिन्मता ।
नानाङ्गणविभक्ता वा नानारज्जुस्थलान्विता ॥
पलालपट्टिकोपेता सुखवेदिकया युता ।

पञ्चकृत्यसमोपेता नातिश्लक्ष्णा न कर्कशा ॥
चिक्कणैरिष्टिकाखण्डैः पाषाणैर्वा क्वचित्स्थली।
भूमिका कल्पनीयोऽत्र गोशालायां विशेषतः॥
मध्यचत्वरयुक्ता वा चत्वरानेकमण्डिता।
कल्पनीया विशालान्तर्भागिका रेखणान्विता॥
वाजिशालाप्रमाणा वा क्वचित्कार्या नृपालये।
मुखाङ्गणसमोपेता मुखनासादिभूषिता॥
कण्डूपट्टिकयोपेता . क्वचित्कार्या प्रकल्पना।
नातिनिम्नोन्नतस्था च न कण्टकमहीरुहा॥
न जलस्रावकण्ठा च गोशाला ·शुभदा मता।
मुखे वा द्वारपट्टे वा गोदेव्याकारकल्पनम्॥
वंशशालां शावलकां सौधकल्पयुतान्तु वा।
सुकल्पनं गवां क्षेमकारणं परिकीर्तितम्॥

मृगशाला
वि० वा०
३७. १–६

बालानां बालिकानां च युवतीनां विशेषतः।
शुद्धान्तसुन्दरीणां च चित्तहर्षाभिवृद्धये॥
कल्पनं विविधं कार्यं स्थलजात्यादिभेदतः।
शुकानामपि कीराणां मयूराणामपि क्वचित्॥
हरिणानां च वत्सानां लाल्यलीलादिनामपि।
शाला तु विविधा स्थाप्या लोहदारुसुधेष्टिकैः॥
शुकानां पञ्जरः कुन्दा हरिणानां निगद्यते।
वत्सादीनां शालका च त्रैविध्यं मुख्यमीरितम्॥
लोहदण्डं दारुदण्डं शृङ्खलान्वितमेव वा।
बहुरन्ध्रं सकटकं पञ्जरं कल्पयेद्बुधः॥
लोहदण्डमयी प्रायः कुन्ददारुमयी क्वचित्।
क्वचिच्छिलात्रुटमयी सगवाक्षसतोरणा॥
क्षुद्रशाला क्वचित्कार्या वत्सादीनां शुभे स्थले।
नानाङ्गणसमोपेतशाला वाऽथ भौमिका॥
सतोयपात्रा साधारा मध्यशृङ्खलिकान्विता।
वातायनस्थलकृता भीकैश्च विवर्जिता॥
बहिः खेलनभूम्या वा शालया वा समेयुषी।
चतुर्दण्डाधिकौन्नत्या पटल्या च विभूषिता॥
कल्पनान्तरमूह्यैवं स्थाप्यं शिल्पविशारदैः॥

मार्गविश्रांतिस्थलम्
वि० वा० ७०. १–१२

सर्वत्र मार्गभागेषु कल्पनं भयनोदकम्।
सायुधानां भटानां च स्थितिधैर्यप्रदायिनी॥
तस्मात्तत्कल्पयेच्छिल्पी क्रोशमात्रस्थलादिषु।

श्रान्तानां पथिकानां च विश्रान्तिस्थानकैर्युतम् ॥
दलमण्टपकल्पं वा दलकूटप्रकल्पनम् ।
द्विदण्डकाकल्पनं वापि नानासनसमन्वितम् ॥
त्रिभूमिगोपुरं वापि पञ्चभूगोपुरन्तु वा ।
सप्तभूगोपुरं वापि पृथुस्तम्भयुतन्तु वा ॥
योजयेत्कल्पविच्छिल्पी दृढं सुन्धककल्पनम् ।
देवगन्धर्वभूपालचित्रभासुरकुड्यकम् ॥
नानाङ्गणसमोपेतं नानापङ्क्तिविराजितम् ।
मध्यमण्डपयुक्तं वा सविमानतलं क्वचित् ॥
मध्ये मध्येतरे भागे कण्ठालस्थापनं वरम् ।
वटोऽश्वत्थो नारिकेलः पनसस्सहकारकः ॥
वर्धनीयाः कुन्दलताः पूगनारङ्गभूर्जगाः ।
पुन्नागश्चापि नागाश्च निष्कुटार्हाः क्वचित्स्थले ॥
जलाशयः पल्वलश्च कर्तव्यः पृथुवारकः ।
वाहस्थानं वृषस्थानमन्तिके कारयेद्बुधः ॥
क्वचित्तु मदिरागेहं प्राणिनां सुखदायकम् ।
तृणस्थानमथान्यच्च कल्पयेत्कोशमात्रके ॥
पूर्वापरगृहद्वारयोर्घस्थानं प्रकल्पयेत् ।
द्वारालङ्करणं कार्यमन्यच्च शुभदर्शनम् ॥
चतुर्वर्गप्रदीपाढ्यं पञ्चगेहसमन्वितम् ।
तोरणैश्चित्रकैर्युक्तं मार्गद्वारप्रकल्पनम् ।
स्थापयेत्कल्पनं युक्त्या प्राणिनां सुखदायकम् ॥

वापी

वि० वा०

२२. १-६

यत्र स्वादुजलस्रावः सन्ततं स्थितिमागमयेत् ।
परीक्ष्य तत्र कर्तव्यं वापीकूपादिकं मतम् ॥
चतुरश्रां वर्तुलां वा दीर्घां वा तां प्रकल्पयेत् ।
त्रिदण्डं वा चतुर्दण्डं पञ्चदण्डमथापि वा ॥
षडादिदशदण्डान्तं प्रमाणमिह योजयेत् ।
चतुर्मुखां वा द्विमुखां क्वचिदेकमुखां तु वा ॥
दशहस्तप्रमाणं वाऽधिकं वा तलमध्यभाक् ।
भित्तिकल्पनमश्मकमैष्टिकं शैलकं तु वा ॥
जलान्तिकेऽङ्कणं कल्प्यमाद्यमेतदुदीरितम् ।
द्वितीयाङ्कणकं वापि तृतीयाङ्कणकं तु वा ॥
सपादं वा विपादं वा युक्त्या स्थापनमीरितम् ।
कल्पनं दार्ढ्यसंयुक्तं पादसोपानमञ्जलम् ॥
मुखमण्टपयुक्तं वा कवाटादिसमन्वितम् ।

वाप्यां वर्तुलरूपायां भुजङ्गावेष्टनाकृति ॥
पङ्क्तिं दृढां वा रचयेदथवा सूत्रपङ्क्तिकम् ।
चतुर्विंशत्यङ्गुलेन विहीनं नेष्यते बुधैः ॥
घटीयन्त्रस्थलं तीरे रचयेत्साङ्गणं बुधः ।
अवगाहतलोपेतद्वारकिन्नररूपकम् ॥
कल्पनं देवमूर्तीनामथवा संप्रयोजयेत् ।

तटाकः
वि० वा०
३४. १–१०

तटाककल्पनाच्छ्रेयः प्राणिनां च सुखं मतम् ।
तस्मात्तत्कल्पयेद्धीमान्ग्राममध्ये शुभस्थले ॥
मार्गस्य मध्यभागे च वास्तुभूमौ विशेषतः ।
सततं स्वादुसलिलस्रावो यत्र च दृश्यते ॥
अन्तःकूपसमायुक्तं दक्षिणोत्तरदैर्घ्यकम् ।
वरुणेन्द्रदिशाभागस्थायि वा स्थलयोग्यकम् ॥
तटाकनाम्ना भणितं महत्खातं हितप्रदम् ।
निष्पङ्कागाधसलिलं पूरयेद्वा क्वचित्स्थलम् ॥
जलनिर्गमनोपेतमागमायनसंयुतम् ।
भान्वङ्गुलोन्नता पङ्क्तिर्द्विगुणायतिका मता ॥
मध्ये महापङ्क्तियुक्तमृजुसूत्रे च निश्चलम् ।
तीरमण्टपसंयुक्तं तीरवृक्षैश्च शोभितम् ॥
जलमण्टपसंयुक्ता क्वचित्कार्योत्तमे ।
दैवे तटाके तत्कल्प्यं विमानशिखरोज्ज्वलम् ॥
खण्डपङ्क्तिः क्वचित्कार्या तटाकेषु सरस्सु च ।
मेदिनीपट्टिकोपेता जलं सर्वत्र कल्पयेत् ॥
रेखारूपं मीनरूपं लतारूपं च तक्षयेत् ।
भूर्जपत्रलेपणं वा नानाङ्गणसमन्वितम् ॥
वानरक्रीडनं चापि तक्षयेत्सुमनोहरम् ।
क्वचिदष्टमुखोपेतं तटाकं बहुपङ्क्तिकम् ॥
स्थापयेन्नृपतिर्देशे प्राणिनां सुखदायकम् ॥

कूपाः
अ० पू०
७४. ३. ७

श्रीमुखो विजयः प्रान्तो दुन्दुभिश्च मनोहरः ।
चूडामणिश्च दिग्भद्रो जयो नन्दश्च शङ्करः ॥
चतुर्हस्तः श्रीमुखः स्याद् विजयः पञ्चहस्तकः ।
षड्भिर्हस्तैर्भवेत् प्रान्तो दुन्दुभिर्सप्तहस्तकः ॥
मनोहरश्चाष्टहस्तश्चूडामणिर्नवकरः ।
दिग्भद्रो दशहस्तश्च ह्येकादशकरो जयः ॥
नन्दे च द्वादशकराः शङ्करेच त्रयोदश ।
एवमादिगुणोपेता वृत्तकूपा दशोत्तमाः ॥

## तृतीयः पटलः

### भवन-सज्जा

### सर्वजनोचित-शयनासनादि—शयनानिः—

| | |
|---|---|
| | शय्याद्रव्याणि गृहकर्मणि ये नेष्टा वृक्षास्तेऽत्रापि निन्दिताः। |
| स० सू. २६. ५–६॥ | हेम्ना रूप्येण चानद्धा गजदन्तेन वा शुभा॥ |
| | आरकूटेन वा नद्धा शय्या कार्या विचक्षणैः। |
| २६. २२–२३॥ | श्रेष्ठैकद्रव्यजा शय्या मिश्रद्रव्या न शस्यते॥ |
| | एकदारु प्रशंसन्ति द्विदारुर्भयमावहेत्। |
| | त्रिदारुघटितायां तु स्वामिनो नियतो वधः॥ |
| | शय्यायां जायते यस्मात् तस्मात्'तांपरिवर्जयेत्। |
| निश्छिद्रत्वम् | मध्ये व्रणो मृत्युकरस्त्रिभागे व्याधिकारकः॥ |
| २६. २५–२७ | क्लेशावहश्चतुर्भागे शिरस्थो द्रव्यहानिकृत्। |
| | निर्दोषगात्रे पर्यङ्के पापस्वप्नो न दृश्यते॥ |
| | ग्रन्थिकोटरवत् कुर्यात् तस्मान्न शयनासनम्। |
| | आसनं शयनीयं च ग्रन्थिकोटरवर्जितम्॥ |
| | बहुपुत्रकरं प्राहुर्धर्मकामार्थसाधनम्। |
| गुणदोषाः | आरोहणे प्रचलति शयने कम्पते तथा॥ |
| २६. २८–२९ | विदेशयानकलहौ ते क्रमेण प्रयच्छतः। |
| | सुश्लिष्टां तामतः कुर्यान्निर्दोषां वर्णशालिनीम्॥ |
| | दृढां स्थिरां च स्थपतिः पत्युः कामविवृद्धये। |
| छिद्रभेदाः | निष्कुटं कोलदृक् क्रोडनयनं वत्सनाभकम्॥ |
| २६. ३० | कालकं बन्धकं चेति छिद्रसंक्षेप ईरितः। |

### आसनानि—

| | |
|---|---|
| स० सू० २६. ३६–३७ | शय्यार्थे कथितैः क्लृप्तं दारुभिः शस्तमासनम्। |
| | उपवेशसुखं मानं प्रशस्ताय प्रकल्पितम्॥ |
| २६. ४५–४६॥ | गजदन्तमयः श्रेष्ठस्तथा शालोटवृक्षजः। |
| | मध्यमो दारुभिः शेषैर्जघन्यो सारदारुजः॥ |
| | रूपकैः स्वस्तिकाद्यैर्वा स मध्ये स्यादलङ्कृतः। |
| पादुकादयः | अङ्गुलेनाधिके पादात् कार्ये दैर्घ्येण पादुके। |
| २६. ४७—५१॥ | कृतायां पञ्चधा तस्यां कुर्याद् भागत्रयं पुरः। |

पश्चाद् भागद्वयं तत्र सङ्ग्रहोऽस्या विधीयते ॥
अङ्गुलत्रयमुत्सेधो विस्तारोऽङ्घ्र्यनुसारतः ।
अङ्गुल्यङ्गुष्ठयोर्मध्यभागे मत्स्याद्यलङ्कृतौ ॥
कर्त्तव्यौ कीलकौ काष्ठदन्तशृंगादिसम्भवौ ।
गजेन्द्रदन्तः श्रीखण्डश्रीपर्ण्यौ मेषशृङ्गिका ॥
शस्ताः पादुकयोः शाकक्षीरिणीचिरबिल्विकाः ।

आसनानि मान०

नित्यार्चनासनं चैव नित्योत्सवासनमीरितम् ॥
विशेषाख्यार्चनार्थाय विशेषाख्यार्चनासनम् ।
चतुर्विधासनं प्रोक्तं देवानामपि योग्यकम् ॥
आदौ पद्मासनं प्रोक्तं द्वितीयं पद्मकेसरम् ।
तृतीयं पद्मभद्रं स्याच्छ्रीभद्रं स्याच्चतुर्थकम् ॥
पञ्चमं श्रीविशालं स्यात्षष्ठं श्रीबन्धमेव च ।
सप्तमं श्रीमुखं चैव भद्रासनं तु चाष्टकम् ॥
नवमं पद्मं च भद्रं स्यात् दशमं पादबन्धकम् ।
आसनानां तु चैतानां नामानि कथितानि वै ॥

शयनम् मान०]

तैतिलाश्च नराश्चैव यस्मिन्यस्मिन् परिष्ठिताः ।
तद्वस्तु सूरिभिः प्रोक्तं तथा वै वक्ष्यतेऽधुना ॥
धराहर्म्यादि यानं च पर्यङ्कादि चतुर्विधम् ।
धरा प्रधानवस्तु स्यात्तत्तज्जातिषु सर्वशः ॥
विमानादीनि वास्तूनि वस्तुतः वस्तुसंश्रयात् ।
तान्येव वस्तु चैवेति कथितं वास्तुविद्बुधैः ॥
प्रासादमण्डपं चैव सभाशालाप्रपास्तथा ।
अरङ्गमिति चैतानि हर्म्यमुक्तं पुरातनैः ॥
आदिकं स्यन्दनं शिल्पिन् शिबिका च रथं तथा ।
सर्वं यानमिति ख्यातं शयनं वक्ष्यते तथा ॥
पञ्जरं मञ्चली मञ्चं काकाष्टं फलकासनम् ।
तथैव बालपर्यङ्कपर्यङ्कमिति कथ्यते ॥
कुम्भपादमिति प्रोक्तं तस्मादुच्चं प्रवेशनम् ।
तदेव हरिकाकर्णं सर्वाङ्गं पद्मवाजनम् ॥
वज्रपादमिति प्रोक्तं युक्तया कुर्यान्मनोहरम् ।
अथवा मध्यकर्णादौ चोर्ध्वादौ पद्मवाजनम् ॥
पद्मपादमिति प्रोक्तं सर्वालङ्कारसंयुतम् ।
चतुः षट्पादयुक्तं वा देवानां च द्विजातीनाम् ॥
देवानां भूतसिंहं वा पादमध्ये प्रयोजयेत् ।
नृपाणां सिंहपादं स्यात शेषाणां पूर्ववद्भवेत् ॥

सिंहासनम् मान०

देवानां चक्रवर्त्यादिनृपावासकयोग्यकम् ।
सिंहासनस्य मानं च लक्षणं वक्ष्यतेऽधुना ॥
प्रथमाभिषेकयोग्यं स्यात्प्रथमासनमेव च ।
मङ्गलाख्याभिषेकस्य मङ्गलासनमीरितम् ॥
वीराख्याभिषेकस्य च वीरासनमुदीरितम् ।
विजयाख्यस्याभिषेकस्य विजयासनमीरितम् ॥
एवं चतुर्विधं प्रोक्तं भूपानामासनं भवेत् ।
अस्त्रग्राहस्य नृपतेः सिंहपादं न कारयेत् ॥
क्षुद्रभूपविशां शूद्रैः उपपीठादि योजयेत् ।
चतुरश्रसमायुक्तं सर्वेषां सर्वमासनम् ॥
देवानां मौलिनामुक्तं युक्तं सर्वेषु योग्यकम् ।
प्रथमासनादि सर्वेषां भूपानां तान्युदीरितम् ॥
षट्पादेन समायुक्तं सिंहरूपं प्रकल्पयेत् ।
तत्सर्वं प्राङ्मुखं कुर्याद्विपरीतं चेद्विनाशनम् ॥

तत्र तोरणम् मान०

तोरणं त्रिविधं ज्ञेयं मकरं चित्रपत्रके ।
देवद्विजनृपाणां तु शस्तं मकरतोरणम् ॥
विशां तु चित्रसंज्ञं स्याच्छूद्राणां पत्रतोरणम् ।
पार्श्वयोः पृष्ठतश्चापि प्रकुर्यात् कुड्यतोरणम् ॥
प्रतेरुत्तरसीमान्तं तोरणोदय ईरितः ।
तदर्धेनास्य विस्तारस्तद्व्यासेऽथ शरांशके ॥
त्रिभिर्मकरयुग्मं स्यादंशाभ्यां पादयोः स्थितिः ।
यथा शोभान्तरं तत्र गुहावेशो भवेदपि ॥
अर्धेन्दुसदृशैः पत्रैश्चित्रितं पत्रतोरणम् ।
नक्रयोर्वदनासक्तमध्यपूरिममण्डितम् ॥
चित्रतोरणमुद्दिष्टं मध्यपूरिमपार्श्वयोः ।
विगृह्य मकरस्योरथरत्नमालाविरोपितैः ।
भूतविद्याधरव्यालसिंहैश्चारूढवालकैः ॥
विलम्बितं तूभयतो भवेन्मकरतोरणम् ।
गुहासु तोरणानां तु यथार्हं प्रतिमास्तथा ॥
न्यस्येन्नारीनरादींश्च यथाशोभं विचित्रतम् ।
हारासु वलभीमध्ये प्रमाणभवनेऽपि वा ॥
कुड्येषु तोरणानि स्युस्तत्कुड्यं पञ्चधा स्मृतम् ।
शिलामयं चैष्टकं च जालकामयमित्यपि ॥
फलकामयमप्यन्त्यं मृन्मयं चापरं क्रमात् ।
यथार्हन्यासमनुक्तं नन् कुड्यं शैलं शिलामयम् ॥

नानाजालकनिष्पाद्यं कुड्यं यज्जालकामयम् ।
यथार्हस्तम्भविन्यासं शस्तदारुमयक्रियम् ।
फलकाभिश्चितं मध्ये कुड्यं स्यात् फलकामयम् ॥
मृत्तिकाभिः प्रशस्ताभिः कषायसलिलादिभिः ।
मर्दिताभ्युषिताभिश्च चितं कुड्यं तु मृन्मयम् ॥
कुड्यव्यासत्रिदेवांशबहलां साग्रपङ्कजाम् ।
पट्टिकां चतुरश्रां वा कुड्योपरि नियोजयेत् ॥
स्तम्भान्तरं द्विहस्तादि भवेत् पञ्चकरान्तरम् ।
वितस्तिवृद्ध्या तन्मध्ये कार्या कुडयलता त्रिधा ॥
कुड्यस्तम्भस्य विस्ताराद् द्विगुणं चार्धमुच्छ्रितम् ।
अधःपद्मासनं कुर्यात् तदूर्ध्वं च यथारुचि ॥
विनिर्गतोन्नतिं कुम्भं पार्श्वयोस्तस्य तन्मुखात् ।
पत्रैर्विनिर्गतैश्चित्रं यथाशोभं नियोजयेत् ॥
तदूर्ध्वं कुड्यकस्तम्भसमपादाम्बुजासनम् ।
अखण्डकलशं कुर्यात् पद्मकुम्भलतायुतम् ॥
सा तु कुम्भलता संज्ञा सैव खण्डोपरि क्रमात् ।
शक्रतोरणवन्न्यस्ता स्तम्भकुम्भलता मता ॥
कुम्भपद्मासनयुता सैव सर्वलतान्विता ।
पद्मकुम्भलता नाम विज्ञेया हि लता भवेत् ॥
तले तले विमानानां दिक्षु बेराणि विन्यसेत् ।
नन्दीश्वरमहाकालौ पूर्वद्वाराधिपौ न्यसेत् ॥
दक्षिणे दक्षिणामूर्तिं पश्चिमे लिङ्गसम्भवम् ।
विष्णुं वाप्यथ कौबेरे दुर्गां ब्रह्माणमेव वा ॥
मण्डपे मध्यपत्रे तु दक्षिणे च विनायकम् ।
उत्तरे नृत्तरूपं तु चेन्द्रेशं चैशगोचरे ॥
रुद्रावतारक्रीडादिकथारूपाणि चैव हि ।
मूलभित्तौ च परितो विन्यसेदुक्तलक्षणम् ।
अथोपरितलात् प्राच्यामिन्द्रं षण्मुखमेव वा ॥
दक्षिणे दक्षिणामूर्तिं वीरभद्रमथापि वा ।
पश्चिमे नरसिंहं चाप्युत्तरे चार्थदं विधिम् ॥
द्वितीये तु तले चैवं तृतीये तु मरुद्गणान् ।
तले तलेऽमरान् सिद्धान् यक्षविद्याधरानपि ॥
गन्धर्वानप्यप्सरसः सिद्धान् नागांस्तथा मुनीन् ।
प्रमथांश्चैव दैत्यादीन् षोडश प्रतिमास्तथा ॥
कण्ठादधः प्रतेरूर्ध्वं कोणे कोणे वृषान् न्यसेत् ।

सर्वेषामपि देवानां कोणे कोणे स्ववाहनम् ॥
कण्ठादधश्चान्यतले प्राकारादौ च विन्यसेत् ।
इत्येवमादिभिर्युक्तं विमानं सम्पदां पदम् ॥

पञ्जराणि मान०

गर्भार्द्धसमविस्तारा महानासाश्चतुर्दिशम् ।
तदर्धाद् वा त्रिपादाद् वा तासां निर्गम ईरितः ॥
क्षुद्रनासास्तदर्धाद् वा रामांशाद् वापि कारयेत् ।
नासिकानां तु करणमष्टाधोक्तं पुरातनैः ॥
सिंहपञ्जरमादौ स्यात् पञ्जरं चार्धपञ्जरम् ।
निर्यूहपञ्जरं चैव कथितं लम्बनासिकम् ॥
सिंहश्रोत्रं तथा खण्डनिर्यूहभ्रूषपञ्जरम् ।
द्विदण्डादिचतुर्दण्डविस्तृतं शालयान्वितम् ॥
सूचिपादद्वयोपेतं श्लिष्टप्राकारनीप्रकम् ।
षड्वर्गसहितं व्याससमनिर्गममेव वा ॥
शक्तिध्वजयुतं चापि तथा सम्मुखपट्टिकम् ।
वेदिकाजालकस्तम्भयुक्तं स्यात् सिंहपञ्जरम् ॥
प्रासादनीप्रसंश्लिष्टस्वनीप्रादर्धनिर्गतम् ।
अधिष्ठानाङ्घ्रियुक्तं च प्रस्तरग्रीवसंयुतम् ॥
तद्वत् सशिखरं शक्तिध्वजसम्मुखपट्टिकम् ।
वेदिकाजालकर्णाढ्यं सार्धपञ्जरसंज्ञितम् ॥
प्राग्वच्छ्लेषं च विस्तारपादसम्मितनिर्गमम् ।
व्यासत्रिभागनिर्यूहं वृत्तस्फुटितकर्मवत् ॥
पञ्जराख्यं स्मृतं चाथ स्वतुल्यशिखराग्रकम् ।
श्लिष्टनीप्राङ्ककर्णं च कपोताद्यङ्गसंयुतम् ॥
निर्यूहपञ्जरं स्वेतल्लम्बनासिकमुच्यते ।
संश्लिष्टनीप्रकर्णाङ्घ्रि कृतनागदलाद्यपि ॥
निर्यूहसहितं युक्तसर्वाङ्गं लम्बनासिकम् ।

तोरणानि मान०

पत्रं पुष्पं च रत्नं च चित्रतोरणमेव च ।
एवं चतुर्विधं प्रोक्तं देवानां च त्रिमौलिनाम् ॥
अन्येषां भूपतीनां च पुष्पं रत्नं च तोरणम् ।
पत्रवल्ल्यादिभिः संभूष्य पत्र तोरणमीरितम् ॥
नानापुष्पैरलंकृत्य पुष्पतोरणमेव च ।
सर्वरत्नैरलंकृत्य कर्तव्यं रत्नतोरणम् ॥
नानालङ्कारसंयुक्तं यक्षविद्याधरादिभिः ।
तच्चित्रतोरणं प्रोक्तं पूर्वोक्तानां तु संमतम् ॥
सर्वेषां तोरणमध्ये चोर्ध्वे तुम्बुरुनारदम् ।

तत्प्रदेशे द्विपार्श्वे तु मकरादिविभूषितम् ॥
तोरणस्याग्रमूले तु गृहा (ग्राह) पत्रैश्च भूषितम् ।
तोरणार्धं तु पत्रादिभूतवल्यासनान्वितम् ॥
पादानां च द्विपार्श्वे तु व्यालं तोरणधारिणम् ।
पत्रतोरणमित्युक्तं शेषं युक्त्या प्रयोजयेत् ॥
तदेव रत्नपुष्पैश्च नानालङ्कारसंयुतम् ।
यक्षविद्याधराद्यैश्च युक्तं स्याच्चित्रतोरणम् ॥
ग्राहकिन्नरीसंयुक्तं चित्रपत्रादिभिर्विना ।
सर्वाङ्गं पुष्पसंयुक्तं सर्वालङ्कारसंयुतम् ॥
पुष्पतोरणमित्युक्तं मकरन्दैश्च पुष्पकम् ।
सर्वाङ्गं नवरत्नैश्च ग्राहकिन्नरभूषितम् ॥
ग्राहपुच्छादिसर्वेषां सर्वरत्नेन बन्धयेत् ।
रत्नतारागणैर्युक्तं कुक्षिरावृतलम्बितम ॥
तोरणस्योपरि देशे तु भुजङ्गपादद्वयोरपि ।
ग्राहान्तं सर्वरत्नैश्च पूरितं श्रेणिसंयुतम् ॥
रत्नतोरणमित्युक्तं सर्वालङ्कारसंयुतम् ।
वाजनपादालङ्कारं सर्वं प्रागुक्तवन्नयेत् ॥
तोरणस्य कृतं मध्ये कमलं कुर्यात् तु वारणम् ।
तन्मध्ये कल्पयेल्लक्ष्मीं नानालङ्कारभूषिताम् ॥
ताटिकाफलकामुष्टिबन्धनं पत्रवल्लिकम् ।
मकरं किन्नरीवक्त्रं नाटकादौ भुजङ्गवत् ॥
केसरिमण्डनं भवति चित्रतोरणनाटकैः ।
पत्रपुष्पमयरत्नतोरणैः चित्रहीनमित्युच्चभूषणैः ॥
कल्पयेत्त्वपि च रत्नतोरणैः चित्रहीनमित्युच्चभूषणैः
कल्पयेत्त्वपि च तोरणैः पुष्पहीनमथ पत्रहीनकम् ॥
रत्नहीनमथ पत्रतोरणैः पद्मयुक्तमथ पुष्पतोरणैः ॥
पत्रपुष्पनहि (हीनं) चान्यभूषणम् ।
कल्पयेत्त्वपि शिल्पिभिर्वरैः ॥

# चतुर्थः पटल

## राज-भवन-सज्जा

### यन्त्राणि

समराङ्गण-सूत्रधारात्—

| | |
|---|---|
| यन्त्रनिर्वचनम् | यदृच्छया प्रवृत्तानि भूतानि स्वेन वर्त्मना । |
| ३१. ३-४ | नियम्यास्मिन् नयति यद् तद् यन्त्रमिति स्मृतम् ॥ |
| यन्त्रबीजानि | तस्य बीजं चतुर्धा स्यात् क्षितिरापोऽनलोऽनिलः । |
| ३१. ५ | आश्रयत्वेन चैतेषां वियदप्युपयुज्यते । |
| यन्त्रकोट्यः | स्वयंवाहकमेकं स्यात् सकृत्प्रेर्यं तथापरम् |
| ३१. १०-१२ | अन्यदन्तरितं वाह्यं वाह्यमन्यत् त्वदूरतः ॥ |
| | स्वयंवाहकमिहोत्कृष्टं हीनं स्यादितरत् त्रयम् । |
| | तेषु शंसन्ति दूरस्थमलक्ष्यं निकटस्थितम् । |
| पार्थिवादीनां | पार्थिवं पार्थिवैर्बीजैः पार्थिवं जलजन्मभिः ॥ |
| पदार्थानां बीजानि | तदेव तेजोजनितैस्तदेव मरुदुद्भवैः । |
| बीजबीजिभावविक- | आप्यमाप्यैस्तथा बीजैरानलैरानिलैरपि ॥ |
| ल्पनानां नानात्वम् | वह्निजैश्च मरुज्जातैः पार्थिवैर्वारुणैरपि । |
| ३१. २१-४२॥ | मारुतं मारुतैराप्यैः पार्थिवैरानलैस्तथा ॥ |
| | वह्निजातेऽपि बीजं स्यात् सूतः सोपि च वा(न?नि)ले । |
| | पार्थिवानां भवेद् बीजमाप्यानामपि वा(रुणे?रुणम्)॥ |
| | इति बीजानि सर्वेषां कीर्तितान्यखिलान्यपि । |
| | कु 'करणसूत्राणि भारगोलकपीडनम् ॥ |
| | लम्बनं लम्बकारे च चक्राणि विविधान्यपि । |
| | अयस्ताम्रं च तारं च त्रपु संविघ्नमर्दने ॥ |
| | काष्ठं च चर्म वस्त्रं च स्वबीजेषु प्रयुज्यते । |
| | डर्दकः कर्तरो यष्टिश्चक्रं भ्रमरकस्तथा ॥ |
| | शृङ्गावली च नाराचः स्वबीजान्यौर्वरे विदुः । |
| | ताप उत्तेजनस्तोभः क्षोभश्च जलसङ्गजः ॥ |
| | एवमाद्यग्निबीजानि पार्थिवस्य प्रचक्षते । |
| | धारा च जलभारश्च पयसो भ्रमणं तथा ॥ |
| | एवमादीनि भूजस्य जलजानि प्रचक्षते । |
| | यथोच्छ्रायो यथाधिक्यं यथा नीरन्ध्रतापि च ॥ |

अत्यन्तमूर्ध्वगामित्वं स्वबीजान्ययसस्तथा।
मरुत् स्वभावजो गाढैर्ग्राहकैश्च प्रतीप्सितः॥
इत्याद्यैर्वीजनाद्यैश्च गजकर्णादिभिः कृतः।
(छा?चा)णितो गालितश्चायं वीजं भवति भूभत्रे॥
काष्ठं (भृ?कृ) त्तिश्च लौहं च जलजे पार्थिवं भवेत्।
अन्यदम्भस्तदप्यस्तु तिर्यगूर्ध्वमधस्तथा॥
बीजं स्वकीयं भवति यन्त्रेषु जलजन्मसु।
तापाद्यं पूर्वकथितं वह्निजं जलजे भवेत्॥
सङ्गृहीतश्च दत्तश्च पूरितः प्रतिनोदितः।
मरुद् बीजत्वमायाति यन्त्रेषु जलजन्मसु॥
वह्निजातेषु मृत्ताम्रलोहरुक्मादि तद्ग्रहे।
पार्थिवं कथयन्तीह बीजं बीजविचक्षणाः॥
वह्निर्वह्नेर्भवेद् बीजमपि आपस्तथा भवेत्।
आद्यैरित्यादिभिः प्रोक्तैर्मरुद् गच्छति बीजताम्॥
प्रत्येषकं च जनकं प्रेरकं ग्राहकं तथा।
सङ्ग्राहकं च भूजातं बीजं स्यादनिलोद्भवैः॥
प्रेरणं चाभिघातश्च विवर्तो भ्रमणं तथा।
जलजं मारुतोत्थेषु बीजं स्यादिति सम्मतम्॥
सङ्गृहीतस्य तापाद्यैर्यानि पावकजन्मनि।
प्रकीर्तितानि तान्येव भवन्ति पवनोद्भवैः॥
प्रेरितः सङ्गृहीतश्च जनितश्च समीरणः।
आत्मनो बीजतां गच्छत्येवमन्यत् प्रकल्पयेत्॥
भूतमेकमिहोद्रिक्तमन्यद्धीनं ततोऽधिकम्।
अन्यद्धीनतरं चान्यदेवंप्रायैर्विकल्पितैः॥
नाना भेदा भवन्त्येषां कस्तान् कार्त्स्न्येन वक्ष्यति।

क्रियानिष्पादनाधिष्ठानम् ३१. ४३-४४॥

निष्क्रिया भूः क्रिया त्वंशैः शेषेषु सहजा त्रिषु॥
अतः प्रायेण सा जन्या क्षितावेव प्रयत्नतः।
साध्यस्य रूपवशतः संनिवेशो यतो भवेत्॥

यन्त्रगुणाः ३१. ४५-५०

यथावद्बीजसंयोगः सौश्लिष्ट्यं श्लक्ष्णतापि च।
अलक्षता निर्वहणं लघुत्वं शब्दहीनता॥
शब्दे साध्ये तदाधिक्यमशैथिल्यमगाढता।
वहनीषु समस्तासु सौश्लिष्ट्यं चास्खलद्गति॥
यथाभीष्टार्थकारित्वं लयतालानुगामिता।
इष्टकालेऽर्थदर्शित्वं पुनः सम्यक्त्वसंवृतिः॥
अनुल्बणत्वं ताद्रूप्यं दार्ढ्यं मसृणता तथा।

चिरकालसहत्वं च यन्त्रस्यैते गुणाः स्मृताः ॥
एकं बहूनि चलयेद् बहुभिश्चाल्येतऽपरम् ।
सुश्लिष्टत्वमलक्षत्वं यन्त्राणां परमो गुणः ॥

यन्त्र-कर्माणि
३१. ५०-६४

अथ कर्माणि यन्त्राणां विचित्राणि यथाविधि ।
न विस्तरभसङ्क्षेपात् साम्प्रतं संप्रचक्षमहे ॥
कस्यचिद् सा क्रिया साध्या कालः कस्यापि कस्यचित् ।
शब्दः कस्यापि चोच्छ्रायो रूपस्पर्शौ च कस्यचित् ॥
क्रियास्तु कार्यस्य वशादनन्ताः परिकीर्तिताः ।
तिर्यगूर्ध्वमधः पृष्ठे पुरतः पार्श्वयोरपि ॥
गमनं सरणं पात इति भेदा क्रियोद्भवाः ।
कालो मुहूर्तकाष्ठाद्यैर्भिन्नो भेदैरनेकधा ॥
शब्दो विचित्रः सुखदो रतिकृद् भीषणस्तथा ।
उच्छ्रायस्तु जलस्य स्याद् क्वचिद् भूजेऽपि शस्यते ॥
गीतं नृत्यं च वाद्यं च पटहो वंश एव च ।
वीणा कांस्यतालश्च तृमिला करटापि च ॥
यत्किञ्चिदन्यदप्यत्र वादित्रादि विभाव्यते ।
समस्तमपि तद् यन्त्राज्जायते कल्पनावशात् ॥
नृत्ये तु नाटकं चोक्षस्ताण्डवं लास्यमेव च ।
राजमार्गश्च देशी च यन्त्रात् सर्वं प्रसिध्यति ॥
तथा जात्यनुगाश्चेष्टा विरुद्धा यास्तु जातितः ।
ताः सर्वा अपि सिध्यन्ति सम्यग्यन्त्रस्य साधनात् ॥
भूचराणां गतिर्व्योम्नि भूमौ व्योमचरागमैः ।
चेष्टितान्यपि मर्त्यानां तथा भूमिस्पृशामिव ॥
जायन्ते यन्त्रनिर्माणाद् विविधानीप्सितानि च ।
यथासुरा जिता देवैर्यथा निर्मथितोऽम्बुधिः ॥
हिरण्यकशिपुर्दैत्यो नृसिंहेन हतो यथा ।
धावनं हस्तियुद्धं च गजानामगडोऽपि च ॥
नाना प्रकारा याश्चेष्टा नाना धारागृहाणि च ।
दोलाकेल्यो विचित्राश्च तथा रतिगृहाणि च ॥
चित्रा सेना च कुड्यश्च स्वयंवाहकसेवकाः ।
सभाश्च विविधाकारा सत्या मायाः प्रकल्पिता ॥
एवं प्रायाणि चान्यानि यन्त्राद् सिध्यन्ति कल्पनात् ।

विविधानि यन्त्राणि—

शय्या-प्रसर्पण-यन्त्रम्
३१. ६५-६५॥

विधाय भूमिकाः पञ्च शय्या त्वादिभुवि स्थिता ।
प्रतिप्रहरमन्यासु सर्पन्ती याति पञ्चमीम् ॥

एवंप्रयाणि चित्राणि सम्यक् सिध्यन्ति यन्त्रतः ।

पुत्रिकानाडीप्रबोधनम् क्रमेण त्रिशतावर्तं स्थाले दत्ता भ्रमन्त्यसौ ॥

२१. ६६–६६॥ तन्मध्ये पुत्रिका क्लृप्ता प्रति नाडिं प्रबोधयेत् ।

अद्भुतदर्शन-यन्त्रम् वह्नेश्च दर्शनं तोये वह्निमध्याज्जलोद्गतिः ॥

२१. ६७–६८॥ अवस्तुतोऽपि वस्तुत्वं वस्तुतोऽपि तथान्यथा ।

निःश्वासेन वियद् याति श्वासेनायाति मेदिनीम् ॥

क्षीरोदमध्यगा शय्या प्रतीष्टाधः फणाभृता ।

गोलभ्रमण-यन्त्रम् गोलश्च सू(ति?चि)विहितः सूर्यादीनां प्रदक्षिणम् ॥

२१. ६९–६९॥ परिभ्राम्यत्यहोरात्रं ग्रहाणां दर्शयन् गतिम् ।

दारवपुरुषगमनम् गजादिरूपे रथिकरूपतां गमितः पुमान् ॥

२१.७०–७०॥ भ्रान्त्वा नाडिकया तस्याः पर्यन्ते हन्ति(भो?यो)जनम् ।

तैल-प्रक्षेप-यन्त्रम् दीपिकापुत्रिका क्लृप्ता क्षीणं क्षीणं प्रयच्छति ॥

२१. ७१–७१॥ दीपे तैलं प्रनृत्यन्ती तालगत्या प्रदक्षिणम् ।

हस्ति-भूरिपान-यन्त्रम् यावत् प्रदीयते वारि तावत् पिबति सन्ततम् ॥

२१. ७२–७२॥ यन्त्रेण कल्पितो हस्ती न तद् गच्छत् प्रतीयते ।

शुक-गाननर्तनादि- शुकाद्याः पक्षिणः क्लृप्तास्तालस्यानुगमान्मुहुः ॥

२१. ७३–७३॥ जनस्य विस्मयकृतो नृत्यन्ति च पठन्ति च ।

अन्यानीदृशानि पुत्रिका वा गजेन्द्रो वा तुरगो मर्कटोऽपि वा ॥

२१. ७४–७४॥ वलनैर्वर्तनैर्नृत्यंस्तालेन हरते मनः ।

चेत्र-यन्त्रम् येनैव वर्त्मना चेत्रं भ्रियते तेन तत्पयः ॥

२१. ७५–७८ यात्यायाति पुनस्तद्वद् गर्तात् पुष्करिणीष्वपि ।

फलके कानि(?)तिष्ठन्ति धावन्त्यनुमतानि च ॥

घा(तां?तं) ददति युध्यन्ते निर्यान्त्यश्रमनावृतम् ।

नृत्यन्ति गायन्ति तथा वंशादीन् वादयन्ति च ॥

निरुद्धमुक्तस्य वशान्मरुतो यन्त्रभङ्गिभिः ।

याश्चेष्टा दिव्यमानुष्यस्ता एवात्र न केवलम् ॥

दुष्करं यद्यन्यच्च तत्तद् यन्त्रात् प्रसिध्यति

अङ्गुलेन मितमङ्गुलपादेनोच्छ्रितं द्विपुटकं तनुवृत्तम् ।

स्वनोद्गारियन्त्रम् संविधेयमृजु गरन्ध्रं श्लिष्टसन्धि दृढताम्रमयं तत् ॥

२१. ८९–९४ दारवेषु विहगेषु तदन्तः क्षिप्तमुद्गतसमीरवशेन ।

आतनोति विचलन्मृदुशब्दं शृण्वतां भवति चित्रकरं च ॥

सुश्लिष्टखण्डद्वितयेन कृत्वा सरन्ध्रमन्तर्मुरजानुकारम् ।

ग्रस्तं तथा कुण्डलयोर्युगेन मध्ये पुटं तस्य मृदु प्रदेयम् ॥

पूर्वोक्तयन्त्रे विधिनोदरेऽस्य क्षिप्तेऽथ शय्यातलसंस्थमेतत् ।

ध्वनिं ततः सञ्चलनादनङ्गक्रीडारसोल्लासकरं करोति ॥

अस्मिन् शय्यातलविनिहिते मुञ्चति व्यक्तरागं
चित्रा शब्दान् मृगशिशुदृशां या(न्ति?ति)भीत्येव मानः।
किञ्चैतासां दयितमभितो निर्भरप्रेमभाजां
प्रौढिं गच्छन्त्यधिकमधिकं मन्मथक्रीडितानि॥
पटहमुरजे वेणुः शङ्खो विपञ्च्यथ काहला
डमरुटिविले वाद्या तोद्यान्यमून्यखिलान्यपि
मधुरमधिकं यच्चित्रं च ध्वनिं विदधात्यलं
तदिह विधिना रुद्धोन्मुक्तानिलस्य विजृम्भितम्॥

अम्बरचारि विमानम् लघुदारुमयं महाविहङ्गं दृढसुश्लिष्टतनुं विधाय तस्य।
३१. ९५-९८ उदरे रसयन्त्रमादधीत ज्वलनाधारमधोऽस्य चा(ति?ग्नि)पूर्णम्॥
तत्रारूढः पुरुषस्तस्य पक्षद्वन्द्वोच्चालनप्रोज्झितेनानिलेन।
सुप्तस्यान्तः पारदस्यास्य शक्त्या चित्रं कुर्वन्नम्बरे याति दूरम्॥
इत्थमेव सुरमन्दिरतुल्यं स चलत्यलघु दारुविमानम्।
आदधीत विधिना चतुरोऽन्तस्तस्य पारदभृतान् दृढकुम्भान्॥
अयःकपालाहितमन्दवह्निप्रतप्ततत्कुम्भभुवा गुणेन।
व्योम्नो झगित्याभरणत्वमेति सन्तप्तगर्जद्रसराजशक्त्या॥

रस-यन्त्रम् वृत्तसन्धितमथायसयन्त्रं तद् विधाय र तमन्तः।
९९-१०० उच्चदेशविनिधापिततप्तं सिंहनादमुरजं विदधाति॥
स कोऽप्यस्य स्फारः स्फुरति नरसिंहस्य महिमा
पुरस्ताद् यस्यैता मदजलमुचोऽपि द्विपघटाः।
मुहुः श्रुत्वा श्रुत्वा निनदमपि गम्भीरविषमं
पलायन्ते भीतास्त्वरितमवधूयाङ्कुशमपि॥

दास-यन्त्रम् दृग्ग्रीवातलहस्तप्रकोष्ठबाहूरुहस्तशाखादि।
३१. १०१-१०५ सच्छिद्रं वपुरखिलं तत्सन्धिषु खण्डशो घटयेत्॥
श्लिष्टं कीलकविधिना दारुमयं सृष्टचर्मणा गुप्तम्।
पुंसोऽथवा युवत्या रूपं कृत्वातिरमणीयम्॥
रन्ध्रगतैः प्रत्यङ्गं विधिना नाराचसङ्गतैः सूत्रैः।
ग्रीवाचलनप्रसरणविकुञ्चनादीनि विदधाति॥
करग्रहणताम्बूलप्रदानजलसेचन(माणा?णामा)दि।
आदर्शप्रतिलोकनवीणावाद्यादि च करोति॥
एवमन्यदपि चेदृशमेतत् कर्म विस्मयविधायि विधत्ते।
जृम्भितेन विधिना निजबुद्धेः कृष्टमुक्तगुणचक्रवशेन॥

द्वारपाल-यन्त्रम् पुंसो दारुजमूर्ध्वं रूपं कृत्वा निकेतनद्वारि।
३१. १०६ तस्करयोजितदण्डं निरुणद्धि प्रविशतां वर्त्म॥

योध-यन्त्रम् खड्गहस्तमथ मुद्गरहस्तं कुन्तहस्तमथवा यदि तत् स्यात्।
३१. १०७ तन्निहन्ति विशतो निशि चौरान् द्वारि संवृतमुखं प्रसभेन॥

वारि-यन्त्राणि— इदानीं प्रक्रमायातं वारियन्त्रं प्रचक्ष्महे।
१. पातयन्त्रम् क्रीडार्थं कार्यसिद्ध्यै च चतुर्धा ? विदुः॥
३१. १०९–११० निम्नगं भवति द्रोणीदेशादूर्ध्वस्थिताज्जलम्।
यत्र तत् पातयन्त्रः स्याद् वाटिकादिप्रयोजनम्॥
२. उच्छ्रायसमपात- उच्छ्रायसमपाताख्यं यन्त्रोर्ध्वा नाडिका पथः।
यन्त्रम् ३१. ११२ जलाधारगुणान्मुञ्चेदधस्तात् समनाडि(का?कम्)॥
३. पातसमोच्छ्राय- यत्र पातसमुच्छ्रायं पतित्वोच्छ्रायतो जलम्।
यन्त्रम् तिर्यग् गत्वा प्रयात्यूर्ध्वं सच्छिद्रस्तम्भयोगतः॥
३१. ११२–११३ पतित्वोच्छ्रायतस्तोयं तिर्यगूर्ध्वमेत्यथ ।
सच्छिद्रस्तम्भयोगेन तत् स्यात् पातसमोच्छ्रयम्॥
४. उच्छ्रययन्त्रम् वाप्यां वापि च कूपे विधानतो दीर्घिकादिका विहिता।
३१. ११४–११६ यन्त्रोर्ध्वमम्बु गमयति तदिहोच्छ्रयसंज्ञितं कथितम्॥
दारुजमिभस्य रूपं यत् सलिलं पात्रसंस्थितं पिबति।
तन्माहात्म्यं निगदितमेतस्योच्छ्रायतुल्यस्य॥
सलिलं सुरङ्गदेशानीतं निम्नेन वर्त्मना दूरे।
अद्भुतमम्भस्थानं तदिह समोच्छ्रायतः कुरुते॥
धारा-गृह-यन्त्राणि धारागृहमेकं स्यात् प्रवर्षणाख्यं ततो द्वितीयं च।
३१. ११७–११८ प्रणालं जलमग्नं नन्दावर्तं तथान्यदपि॥
प्राकृतजनार्थमेतन्न विधेयं योग्यमेतदवनिभुजाम्।
मङ्गल्यानां सदनं दिव्यमिदं तुष्टिपुष्टिकरम्॥
१. धारागृहम् सलिलाशयस्य सविधे कस्याप्याश्रित्य शोभनं देशम्।
३१.११९–१४१ यन्त्रोत्सेधाद् द्विगुणा त्रिगुणा वा नाडिका कार्या॥
जलनिर्वाहसहासावन्तर्मसृणा बहिश्च नीरन्ध्रा।
निर्व्यूढाम्भसि तस्यां शुभे मुहूर्ते गृहं कार्यम्॥
सर्वाभिरोषधीभिर्युक्तं सहिरण्यपूर्णकुम्भैश्च।
सुविचित्रगन्धमाल्यं विनादितं ब्रह्मघोषेण॥
रत्नोद्भवैर्विचित्रैः स्तम्भैर्युक्तं हिरण्यघटितैर्वा।
रजतोद्भवैः कदाचित् सुरदारुसमुद्भवैरथवा॥
श्रीखण्डोत्थैरथवा सालकमुख्यप्रशस्तवृक्षोत्थैः।
शतसङ्ख्यैर्द्वात्रिंशत्सङ्ख्यैर्यदि वापि षोडशभिः॥
अथवा चतुस्समन्वितविंशतिसङ्ख्यैर्दिनेशसङ्ख्यैर्वा।
भूषितमतिरमणीयैश्चतुर्भिरपि वा विधातव्यम्॥
प्राग्ग्रीवैरतिचित्रैः शालैर्जालैर्विभूषितं विविधैः।
वेदीभिः परिकरितं कपोतपालीभिरभिरामम्॥
रमणीयसालभञ्जिमनेकविधयन्त्रशकुनिकृतशोभम्।
मिथुनैश्च वानराणां जम्भकनिवहैश्च नैकविधैः॥

विद्याधरसिद्धभुजङ्गकिन्नरैश्चारणैश्च रमणीयैर्म ।
नृत्यद्भिः परम(ग?गु)णैः शिखण्डिभिर्मण्डितोद्देशम् ॥
कल्पतरुभिर्विचित्रैश्चित्रलतावल्लिगुल्मसंछन्नम् ।
परपुष्टषट्पदालीमरालमालामनोहारि ॥
प्रवहत्सकलस्रोतः सुश्लिष्टनिविष्टनाडिकं मध्ये ।
सच्छिद्रनाडिकयुतं नानाविधरूपरमणीयम् ॥
सुश्लिष्टनाडिकाग्रे स्तम्भतुलाभित्तिसंश्रिते परितः ।
सम्यक् कृत्वा दृढतरविलेपनं वज्रलेपाद्यैः ॥
लाक्षासर्जरसदृषन्मेषविषाणोत्थचूर्णसंमिश्रम् ।
अतसीकरञ्जतैलप्रविगाढो वज्रलेपः स्यात् ॥
दृढसन्धिबन्धहेतोः स तत्र देयो द्विशः कदाचिद् वा ।
चित्रानुपातयुक्तं प्रदर्शयेन्नृपतये स्थपतिः ॥
कार्याण्यस्मिन् करिणां मिथुनान्यभितोऽम्बुकेलियुक्तानि ।
अन्योन्यपुष्करोज्झितसीकरभयपिहितनयनानि ॥
वर्षानुकृतं चास्मिन् प्रतिमति प्रतिमतङ्गजो वीक्ष्य ।
हनहस्तैर्मदमिव मुञ्चन् जलं कार्यः ॥
स्तनयोर्युगेन सृजती जलधारे तत्र कापि कार्या स्त्री ।
आनन्दाश्रुलवानिव सलिलकणान् पक्ष्मभिः काचित् ॥
नाभिह्रदनदिकामिव विनिर्गतां कापि बिभ्रती धाराम् ।
काप्यङ्गुलीनखांशुभिरिव योषित् सिञ्चली कार्या ॥
एवम्प्रायांश्चित्रान् स्वभावचेष्टान् बहूंश्च रमणीयान् ।
क्षोभान् विधाय कुर्यादाश्चर्यं नरपतेः स्थपतिः ॥
मध्ये तस्य विधेयं सिंहासनममलहेममणिघटितम् ।
तत्रासीदेन्नरपतिरवनिपतिः श्रीपतिर्देवः ॥
स्नायात् कदाचिदस्मिन् मङ्गलगीतैर्विवर्धितानन्दः ।
वादित्रनाट्यनिपुणैर्निषेव्यमाणः सुरेन्द्र इव ॥
य एतस्मिन् गाढग्लपितघनघर्मव्यतिकरे
भूमौ धाराधाम्नि स्फुटसलिलधारे नरपतिः ।
सुखेनास्ते पश्यन् विविधजलशिल्पानि स भवेन्न
मर्त्यः किन्त्वेष क्षितिकृतनिवासः सुरपतिः ॥

२. प्रवर्षणम्
३१. १४२-१४८

जलदकुलाष्टकयुक्तं पूर्ववदन्यद् गृहं समारचयेत् ।
वर्षद्धारानिकरैः प्रवर्षणाख्यां तदाप्नोति ॥
प्रतिकुलमस्मिन् कार्या दिव्यालङ्कारधारिणः पुरुषाः ।
विधिना त्रयः सुरूपाश्चत्वारः सप्त वा सुदृढाः ॥
यन्त्रेण समोच्छ्रायेण तांश्चतुर्थेन वा ततः पुरुषान् ।

कृत्वा सवक्रनालानम्भोभिः पूरयेद् विमलैः ॥
सलिलप्रवेशरन्ध्राण्यखिलानि पिधाय तत्र पुरुषाणाम् ।
अङ्गानि वारिमोक्षाण्यखिलान्यथ मोचयेत् तेषाम् ॥
सलिलं सवक्रनालं द्वारप्रतिरोधमोचनैः पुरुषाः ।
मुञ्चन्ति स्वेच्छममी विचित्रपातेन चित्रकरम् ॥
इत्थमिमान् वारिधरान् सारु(स्या?स्त्या)द् द्वयन्तरेण वा सलिलम् ।
त्र्यन्तरतो वा स्वेच्छं प्रवर्षयेदतिमहच्चित्रम् ॥
इदं नानाकारं कुलभवनमाद्यं रतिपते-
र्निवासश्चित्राणामनुकरणमेकं जलमुचाम् ।
पयःपातैर्ग्रीष्मे रविकरपरीतापशमनं
न केषामत्यर्थं भवति नयनानन्दजननम् ॥

३. प्रणालगृहम्
३१. १४९-१५६

एकेनाथ चतुर्भिः स्तम्भैरष्टभिरथार्कसङ्ख्यैर्वा ।
षोडशभिर्वा कुर्यान्मनोहरं गृहमिह द्वितलम् ॥
भद्रैर्युतं चतुर्भिश्चतुरश्रं सर्वभित्तिसंयुक्तम् ।
ईलीतोरणयुक्तं कर्तव्यं पुष्पकाकारम् ॥
तस्योपरि मध्यगता प्राङ्गणवापी दृढा विधातव्या ।
शतपत्रविहितभूषा तन्मध्ये कर्णिका कार्या ॥
तत्कोणेषु चतुर्ष्वपि रमणीया दारुदारिकाः कार्याः ।
मध्याम्बुजनिहितदृशः सालङ्काराः सश्रृङ्गाराः ॥
पूर्वोक्तयन्त्रयोगात् पद्मासीने वसुन्धराधिपतौ ।
भृङ्गारामलवारिभिरङ्गणवापीं श्रियाच्च ततः ॥
तामिति भृत्वा वापीं तत्सलिलं तदनुपट्टगर्भगतम् ।
छाद्यस्तु गन्धरोभ्रेष्वति रोहति(?)सर्वतो नियतम् ॥
मुखपटलमुत्कीर्णैं रूपैश्चित्रैर्मनोरमैरखिलैः ।
अङ्गैर्वारि विमुञ्चति नासास्यश्रवणनेत्राद्यैः ॥
प्रणालाख्यं धाराभवनमिदमत्यद्भुततरं
स्थितिं धत्ते यस्य क्षितिपतिलकस्याङ्गणभुवि ।
करोत्येतद् वेत्थं स्थपतिरपि बुद्ध्या चतुरया
जगत्येतौ द्वावप्यधिकमहनीयौ कृतधियाम् ॥

४. जलमग्नम्
३१. १५७-१६६

चतुरश्रातिगभीरा वापी कार्या मनोरमा सुदृढा ।
गर्भगतं गृहमस्याः कर्तव्यं लिप्तसन्धि ततः ॥
विहितप्रवेशनिर्गति सुरङ्गयाधौ निवेशितद्वारम् ।
विदधीत चारुरूपैः प्रवर्षकैर्व्याप्तमुपरिष्टात् ॥
चित्राध्यायोदितवर्त्मना ततोलङ्कृतं च चित्रेण ।
तस्य विधेयं मध्यं सलिलाधिपवाससङ्काशम् ॥

ऊर्ध्वविनिर्गमिताब्जैर्नालैस्तत्पट्टकन्दकोद्भूतैः ।
सच्छिद्रकर्णिकागतदिनकरकरनिर्मितोद्योतम् ॥
आपूरयेत् ततोऽनु च पाताम्बुभिरमलकमलपर्यन्तम् ।
विधिनामुनैव सम्यक् प्रविधाय मनोरमं भवनम् ॥
नानारूपकयुक्त्या (उ?व्यु)परचिततसङ्गतोरणद्वारम् ।
शालाभिरायताभिश्चतसृष्वपि चाम्बुसम्भवैर्युक्ताम् ।
कुर्यादम्भोजवतीं वापीमाहार्ययोगेन ॥
सामान्तमुख्यपुरुषा राजाज्ञालब्धसंश्रयास्तत्र ।
परराष्ट्रागतदूतास्तिष्ठेयुर्निहितमिह भृताः ॥
अथ स यथाविधि सलिलक्रीडां प्रोक्तमार्गरूपाणाम् ।
दृष्ट्वा मुदितः कुर्यात् पर्यङ्कारोहणं नृपतिः ॥
तत्र स्थितस्य नृपतेः परिवारितस्य
वाराङ्गनाभिरभितो जलमग्नधाम्नि ।
पातालसद्मनि यथा भुजगेश्वरस्य
निस्सीमसम्भृतरतिर्भवति प्रमोदः ॥

५. नन्द्यावर्तम्
२१. १६७-१७२

पूर्वोक्तवापिकायां मध्ये स्तम्भैश्चतुर्भिरुपरचितम् ।
मुक्ताप्रवालयुक्तं पुष्पकमथ कारयेल्लटभम् ॥
वापीं परितः पुष्पकमापूर्य सुनिर्गमाभिरथ सुदृढम् ।
गर्भस्वहितकभित्तिभिरूपहितशोभं समन्ततः कुर्यात् ॥
पूर्वोक्तवारियोगात् पूर्णामाकर्णतो विधायैताम् ।
जलकेलिषु सोत्कण्ठो महीपतिः पुष्पकं यायत् ॥
कुर्वीत नर्मसचिवैर्विलासिनीभिश्च सार्धमवनिपतिः ।
तद्भित्यन्तरवर्ती निमज्जनोन्मज्जः क्रीडाम् ॥
एकत्र मग्नैरपरत्र दृष्टैरन्यत्र हत्वा सलिलेन नष्टैः ।
क्रीडत्यलं केलिकरैः सहायैर्नृपः सुखं मज्जनपुष्करिण्याम् ॥
वापीतलस्थितमथ त्रपयावनम्र-
माच्छादिस्तनभरं करपल्लवेन ।
गाढवसक्तवसनं जलरोधमुक्ता-
वालोकते प्रणयिनी जनमत्र धन्यः ॥

दोला-यन्त्राणि पञ्चविधाः
२१. १७३-१७५

रथदोलादिविधानं दारवमभिदध्महे वयं सम्यक् ।
यन्त्रभ्रमणककर्म प्रकीर्तितं पञ्चमं यत् तत् ॥
तत्र वसन्तः प्रथमो मदननिवासी वसन्ततिलकश्च ।
विभ्रमकस्त्रिपुराख्यः पञ्चैते दोलकाः कथिताः ॥

१. वसन्तः
२१. १७५-१८७

निखनेच्चतुरः स्तम्भान् समैकसूत्रोपगान् ऋजून् सुदृढान् ।
सदृशान्तरान् धरिणीवशतः सुरिल(घण?ष्ट) पीठगतान् ॥

प्रासादस्योक्तदिशि प्रविदध्यात् विरचिताष्टकरदैर्ध्यम् ।
भूमिगृहं रमणीयं तदर्धतो विहितगाम्भीर्यम् ॥
तद्गर्भतले स्तम्भो लोहमयाधारसंस्थितः कार्यः ।
भ्रमसहितः पीठयुतो ग्रस्तरच्छादकतुलाभिः ॥
संस्थाप्योपरि पीठस्य कुम्भिकामतिदृढां विभक्तां च ।
धनुरूच्छ्रितैस्ततोऽमूमष्टभिरावेष्टयेद् भद्रैः ॥
स्वेच्छमथ भूमिकोच्छ्रयमस्योर्ध्वे कल्पयेन्नितान्तमृजुम् ।
निदधीत वेष्टनोर्ध्वे पट्टयुतं स्तम्भशीर्षं च ॥
हीरग्रह(ग?) पर्यन्ता मदला गजशीर्षिका विधातव्या ।
सुदृढा प्रयत्नरचिता मनोभिरामा यथाशोभम् ॥
पट्टस्योपरि कार्या चतुष्किका चेत्रमानतोऽभीष्टात् ।
तस्यामुपरि विधेयस्तलबन्धो दृढतरन्यासः ॥
स्तम्भैर्द्वादशभिरथ चेत्रे युक्त्या समुच्छ्रितैर्भद्रैः ।
रूपवतीकोणस्थितिरधिका भूः प्रथमिका कार्या ॥
मध्ये भ्रमश्च तस्या गर्भस्तम्भप्रतिष्ठितः कार्यः ।
चेत्रप्रमाणवशतस्तां पश्चाच्छादयेत् पट्टः ॥
रथिकाशिखाग्रकेषु च फलका(म?व) रणस्य तद्वदुपरिष्टात् ।
भ्रमचक्राणि न्यस्येन्मध्ये स्तम्भे च पञ्चैव ॥
अत उपरि यथाशोभं हि भूमिका पुष्पकाकृतिः कार्या ।
मध्यस्तम्भाधारा कृतकलशविभूषणा शिरसि ॥
स्तम्भे (व?ध) स्ताद् भ्रमिते भृशं भ्रमत्यर्धभूमिका तत्र ।
रथिकाभ्रमरकयुक्ता परस्परं चक्रयन्त्रेण ॥
वसन्तरथिकाभ्रमे समधिरूढवाराङ्गना
परिभ्रमणसम्भृताभ्यधिकविभ्रमं भूपतिः ।
करोति नयनोत्स(वस्त्रि?वंत्रि) दशधाम्नि यत्कीर्तनं
वसन्तसमये भवत्यमलकीर्तिधामैव सः ॥

२. सदन-निवासः
२१, १८८–१९१

आरोप्य स्थिरमेकं स्तम्भं भूमीगृहादिरहितमथ ।
हस्तचतुष्कोच्छ्राया कार्योपरि भूमिका चास्य ॥
मध्ये भ्रमरकयुक्तं शेषं पूर्ववदिहाचरेदखिलम् ।
पुष्पकमपि च स्तम्भे शिथिलं कलशोच्छ्रितं कुर्यात् ॥
तस्योपरि च ग्रीवा चतुरासनसंयुता विधातव्या ।
घण्टास्तम्भौ कार्यौ स्तम्भेन महाबलौ तत्र ॥
एवं पुष्पकभूमिकान्तरतलस्थायी निगूढो जनो
यावद् भ्रामकयन्त्रचक्रनिकरं सम्यक् क्रमाचालयेद् ।
तावत् ता रथिकासना मृगदृशस्तत्र स्थिताः पुष्पके

कामावासकुतूहलार्पितदृशो भ्राम्यन्ति सर्वा अपि ॥

३. वसन्ततिलकः
३१. १९२–१९५

अथ कोणगतान् स्तम्भांश्चतुरो विनिवेशयेद् ऋजून् सुदृढान् ।
सुश्लिष्टपीडसंस्थान् समान्तरा मेदिनीदशतः ॥
तेषामुपरि (लता?तला)न्तरसंयुक्ता भूमिका विधातव्या ।
रथिकास्तत्र चतस्रो जायन्ते पूर्ववद् दिक्स्थाः ॥
तदुपरि तथार्धभूमिः कार्या सुश्लिष्टदारुसन्धाना ।
मध्यभ्रमरकयुक्ता सरूपका मत्तवारणयुता च ॥
नानाविधकर्मवती वसन्तो वाह्यरेखा स्यात् ।
अन्योन्ययन्त्रपरिघट्टनदोल्यमान-
निश्शेषचक्ररथिकाभ्रमणाभिरामम् ।
दृष्ट्वा वसन्ततिलकं सुरमन्दिराणां
भूषायमाणमुपयाति न विस्म(यत्वं?यं कः) ॥

४. विभ्रमकः
३१. १९६–२००

प्रविधाय रङ्गभूमिं प्रथमां शास्त्रान्तराधरस्यार्थे(?) ।
चतुरश्रा रूपवती सचतुर्भद्रा विधेया भूः ॥
प्रतिकोणमाग (त?ता)स्या भद्रेषु भवन्ति संयता भ्रमराः ।
अत उपरिष्टाद् भूम्या भ्रमराश्चाष्टासनाः कार्याः ॥
रेखाः शुद्धाः कार्या वहिरन्तश्चित्रिताश्चान्याः ।
पीठेषु मध्य(ग?सं)स्थास्ततोऽपरा भूमिकाः कार्याः ॥
पीठस्य मध्यसंस्थैरन्योन्यारालियोजितैश्चक्रैः ।
सर्वे वेगाद् भ्राम्यन्ति सान्त (ना?रा) विभ्रमे भ्रमराः ॥
दोलासनो विहितवारवधू (कृ?भृ) ताति-
चित्रेण यस्त्रिदशधामसु विभ्रमेण ।
पृथ्वीपतिर्मुदमुपैति समुल्लसन्ती
कीर्त्तिर्न माति भुवनत्रितयेऽपि तस्य ॥

५. त्रिपुराख्यः
३१; २०१–१२२

चतुरश्रमथ क्षेत्रं कुर्वांशैर्भाजितं ततोऽष्टाभिः ।
कोणैः शेषैस्तस्मिंश्च कल्पयेद् भद्रम् ॥
तद्द्विगुणमूर्ध्वमेतस्य भूमिकाभागसङ्ख्यया कार्यम् ।
तत्राद्यंशचतुष्केण भूमिका स्यात् समुच्छ्रयतः ॥
तत्राष्टपट्चतुर्भागवर्जिता भूमिका उपर्युपरि ।
क्रमशो भवन्त्यथैवं ताः स्युस्तिस्रोऽर्धसंयुक्ताः ॥
शेषांशोच्छ्रयुक्ता घण्टा चतुरश्रायता कार्या ।
चित्रतुर्भूम्यौ कार्ये सपट्चतुर्भागविस्तारे ॥
रङ्गः स्यादाद्यभुवि द्वितीयभुवि कोणगास्तथा रथिकाः ।
स्युर्भद्राकृतियुक्ता दोला अपि तत्र रमणीयाः ॥
रथिकास्तृतीयभूमौ कार्या भद्रेषु चातिरमणीयाः ।

कोणेष्वथासनान्यर्धवास्तुकेऽपि भ्रमः कार्यः ॥
दोलारथिके चतुरासने भ्रमोऽष्टासनो भवेत् तत्र ।
आसनमिह तत् कथितं युवतेः स्थानं यदेकं स्यात् ॥
निखिलान्यपि भ्रमणसंमुखं तानि विभ्रतिभ्रमणम् (?) ।
यत्रासनानि स इह भ्रम इत्युक्तोऽपराधिका (?) ॥
यष्टेरूर्ध्वमधस्ताद् भ्रमस्य चक्रं(नि)योजयेदेकम् ।
लघुचक्राणि च तद्वन्नियोजयेदासनेष्वत्र ॥
लघुचक्रारकवृत्ते संलग्नाः कीलका दृढाः कार्याः ।
तुल्यान्तराः समस्ता प्रलघु(क) चक्रारवृन्तगताः ॥
रथिकाशिखाग्रचक्रं भ्रमचक्रारक(वि?) नियोजितं कार्यम् ।
यष्टिचतुष्टयमस्मिंस्तिर्यक् चक्रद्वयोपेतम् ॥
ऊर्ध्वं द्वितीयभूमेस्तृतीयभूमेरथान्तरे कुर्यात् ।
नियतं रथिकायष्टिभ्रमसंलग्नानि यन्त्राणि ॥
आसनाधारयष्टीनां रथिकाचक्रयोजितान् ।
अतः समान्तरान् कुर्याच्चतुरः परिवर्तकान् ॥
त(द्व)द् द्वितीयभूमीदोलागर्भे समान्तरे यष्टी ।
लग्ने तथैकचक्रे याम्योत्तरचक्रयोर्न्यस्येत् ॥
तद्वदधो भूकोणगरथिकाचूडाग्रचक्रसंसक्ताः ।
यष्टीस्ततश्चतस्रो द्विचक्रका इतरचक्रयोर्न्यस्येत् ॥
प्रान्तचक्रद्वये कोणरथिकाचक्रयोजिता ।
दोलागर्भगता यष्टिस्तिर्यक् कार्यापरापरा ॥
पूर्वं भद्रे द्वारं कुर्यात् सोपानराजितमधस्तात् ।
गर्भात् पश्चिमभागे निवेशयेद् देवतादोलाम् ॥
अन्योन्यं चक्रभ्रममिच्छामुक्तिं विधानतः सम्यक् ।
ज्ञात्वा प्रयोजनीयं शीघ्रवहं मन्दवहनं वा ॥
एष समासेन यथा भ्रममार्गः कीर्तित स्फुटोऽस्माभिः ।
अन्येष्वपि कर्तव्यः सम्यग् भ्रमहेतवे तद्वत् ॥
स्तम्भादिद्रव्याणां विन्यासैः कल्पितं दृढैः श्लक्ष्णैः ।
सुश्लिष्टसन्धिबन्धं धृतं तथा दीर्घमुख्यधरैः ॥
परिवारितमथ तिलकैः समन्ततः सिंहकर्णसंयुक्तम् ।
त्रिपुरं सम्यक् कुर्याद् विचित्ररूपं (स्व)कैश्चित्रैः ॥
बुद्ध्या क्लृप्तैः पूर्वयन्त्रैश्च युक्तं यन्त्राध्यायं वेत्ति यः सम्यगेतम् ।
प्राप्नोत्यर्थान् वाञ्छितात् कीर्तियुक्तान् स क्ष्मापालैरन्वहं पूज्यते च ॥

---

# पञ्चमः खण्डः

## प्रथमः पटलः

### प्रासाद-वास्तु

प्रासाद-लक्षणम्—सामान्यम्—

| | |
|---|---|
| लोक-व्यवहारः | देवादीनां नराणां च येषु रम्यतया चिरम्। |
| शिल्प० १६-१ | मनांसि च प्रसीदन्ति प्रासादास्तेन कीर्तिताः॥ |
| शास्त्रीयार्थश्च | प्रासादं यच्छिवशक्त्यात्मकं तच्छक्त्यन्तैः। |
| ईशा० ३.१२-१६ | स्याद्वसुधाद्यैस्तु तत्वैः॥ |
| | शैवीः मूर्तिः खलु देवालयाख्ये— |
| | त्यस्माद् ध्येया प्रथमं चाभिपूज्या॥ |
| प्रासाद-प्रयोजनम् | कृत्वा प्रभूतं सलिलमारामान्विनिवेश्य च। |
| बृ० सं० | देवायतनं कुर्याद्यशोधर्माभिवृद्धये॥ |
| | इष्टापूर्तेन लभ्यन्ते ये लोकास्तान् बुभूषता। |
| | देवानामालयः कार्यो द्वयमप्यत्र दृश्यते॥ |

प्रासादोत्पत्तौ—प्रासादस्य आध्यात्मिकायां प्रतिकृतौ

(अ) प्रासादः पुरुष मूर्तिः

(ब) प्रासादो भगवती मूर्तिः—

टि०— तत्र प्रतिपादित-ग्रन्थ भागे (४०१-४ पृष्ठेषु) अवलोकनीयं भवेत्।

प्रासादस्य भौतिकप्रतिकृतौ च।

(अ) वैदिकी चितिः

(ब) वैदिक-सद-संस्थाः

(स) पाषाण-पट्टिकाः

(य) अवैदिक-देव-गृहाः

(स) पर्वताकृतयः

(य) गुहा-निवासाश्च

टि०— तत्र प्रतिपादित-ग्रन्थ-भागे (४०६-१४ पृष्ठेषु) प्रतिपाद्यमानाः सन्ति न तेषां लक्षणानि वास्तु-ग्रन्थेषु उपलभ्यन्ते अत उपश्लोक्यमानैः तैः प्रीयन्ताम्।

प्रासादाः विमान-मूलाः

| | |
|---|---|
| स० सू० ४६. २-८ | पुरा ब्रह्मासृजत् पञ्च विमानान्यसुरद्विषाम्। |
| | वियद्वर्त्मविचारीणि श्रीमन्ति च महन्ति च॥ |

तानि वैराजकैलासे पुष्पकं मणिकाभिधम्।
हैमानि मणिचित्राणि पञ्चमं च त्रिविष्टपम्॥
आत्मनः शूलहस्तस्य धनाध्यक्षस्य पाशिनः।
सुरेशिने च विश्वेशो विमानानि यथाक्रमम्॥
बहून्यन्यानि चैवं स सूर्यादीनामकल्पयत्।
विशेषाग्र्यथोक्तैस्तान्याकारै प्रतिदैवतम्॥
प्रासादांश्च तदाकारान् शिलापक्वेष्टकादिभिः।
नगराणामलङ्कारहेतवे समकल्पयत्॥
वैराजं चतुरश्रं स्याद् वृत्तं कैलाससंज्ञितम्।
चतुरश्रायताकारं विमानं पुष्पकं भवेत्॥
वृत्तायतं च मणिकमष्टाश्रि स्यात् त्रिविष्टपम्।
तद्भेदान् श्रीमतोन्यांश्च विविधानसृजत् प्रभुः॥

(ii) ५५. १०४-५ कीर्तितानि विमानानि यान्येव सुरवर्त्मनि॥
तान्येव स्थावरत्वेन प्रासादा इति विश्रुताः॥

(iii) ५६. १-८ अथातः सम्प्रवक्ष्यामि प्रासादान् शिखरान्वितान्।
रुचकादींश्चतुःषष्टिं नामलक्षणतः क्रमात्॥
पूर्वं यानि विमानानि पञ्चोक्तान्यभवंस्ततः।
तदाकारभृतः सर्वे प्रासादाः पञ्चविंशतिः॥
शिखरैर्विविधाकारैरेकेनाण्डेन भूषिताः।
केचिदण्डत्रयोपेताः केचित् पञ्चाण्डकान्विताः॥
ईषद्भेदेन ते ज्ञेयाः प्रासादाः सर्वकामदाः।
सौवर्णा राजताश्चैव देवानां सततं प्रियाः॥
मणिमुक्ताप्रवालाद्यैर्भूषणैः सुविभूषिताः।
रीतिकाताम्रघोषाद्यैः पिशाचोरगरक्षसाम्॥
देवलोका भवन्त्येते कामस्वच्छन्दचारिणः।
पाताले चापि निर्दिष्टाः पाषाणैः स्फाटिकैस्तथा॥
इष्टकाकाष्ठपाषाणैर्मर्त्यलोकेऽपि नन्दकाः।
सुखदाश्च भवन्त्येते कर्तुः कारयितुस्तथा॥
लक्षणेनान्वितानेतान् कथयामो यथाविधि।
पुराणां भूषणार्थाय भुक्तिमुक्तिप्रदा नृणाम्॥

(ii) ५६. १-२ विमानमथ वक्ष्यामः प्रासादं शम्भुवल्लभम्।
स्वर्गपातालमर्त्यानां त्रयाणामपि भूषणम्॥
सर्वेषां गृहवास्तूनां प्रसादानां च सर्वतः।
प्रासादो मूलभूतोऽयं तथाच परिकर्मणाम्॥
... ... ... ...

तेषु वैराज-भेदाः चतुरश्राः ब्राह्म-प्रासादाः

स० सू० रुचकश्चित्रकूटश्च तृतीयः सिंहपञ्जरः ।
४६. १०–१२॥ भद्रः श्रीकूट उष्णीषः शालाद्यो गजयूथपः ॥
नन्द्यावर्तोऽवतंसाह्वः स्वस्तिकः क्षितिभूषणः ।
भूजयो विजयो नन्दी श्रीतरुः प्रमदाप्रियः ॥
व्यामिश्रो हस्तिजातीयः कुबेरो वसुधाधरः ।
सर्वभद्रो विमानाख्यो मुक्तकोणश्च नामतः ॥
चतुर्विंशतिरुद्दिष्टा चतुरश्राः समासतः ।

कैलास-भेदाः १० वृत्ताः शैव-प्रासादाः

४६. १३–१४॥ वृत्तांस्तथाभिधास्यामः प्रासादानपरानपि ।
वलयो दुन्दुभिः प्रान्तः पद्मः कान्तश्चतुर्मुखः ॥
माण्डूकाख्योऽथ कूर्मश्च तालीगृह उलूपिकः ।
इति वृत्ताः समासेन प्रासादा दश कीर्तिताः ॥

पुष्पक-प्रभेदाः चतुरश्रायताः १० कौबेर-प्रासादाः

४६. १५–१६॥ चतुरश्रायता ये स्युः कथ्यन्ते तेऽपि नामतः ।
भवो विशालः साम्मुख्यः प्रभवः शिबिरागृहः ॥
मुखशालो द्विशालश्च गृहराजोऽमलो विभुः ।
एवमेते समुद्दिष्टाश्च तुराश्रयता दश ॥

मणिक-प्रभेदाः वृत्तायताः १० वारुण-प्रासादाः

४६, १७–१८॥ अथ वृत्तायतान् ब्रूमः प्रासादानभिधानतः ।
आमोदो रैतिकस्तुङ्गश्चारुभूतिर्निषेवकः ॥
सदा-निषेधः सिंहाख्यः सुप्रभो लोचनोत्सवः ।
एते वृत्तायताः प्रोक्ताः प्रासादा नामतो दश ॥

त्रिविष्टप-प्रभेदाः अष्टाश्राः १० वैष्णव-प्रासादाः

४६. १९–२१ अष्टाश्रीणां च नामानि कथयामि समासतः
वज्रको नन्दनः शङ्कुर्मेखलो वामनो लयः ॥
महापद्मश्च हंसश्च व्योमचन्द्रोदयाविति ।
अष्टाश्रय इमे प्रोक्ताः प्रासादा दशसंख्यया ।
भवन्त्येवं चतुष्टष्टिर्लक्ष्मैषामधुनोच्यते ।

तेषु एकस्य स्वस्तिकस्य लक्षणं यथा—

स० सू० ४६. ६२–६७ स्वस्तिकः प्रोच्यतेऽधुना ।
चतुरश्रीकृते क्षेत्रे षड्भागप्रविभाजिते ॥
प्रासादं कल्पयेन्मध्ये द्विभागायामविस्तृतम् ।
द्वारपार्शोऽस्य भागार्धविस्तृतो भागिकोदयः ॥

गर्भवेश्म चतुःस्तम्भमलिन्दो भागिको वहिः।
तस्य स्युर्द्वादश स्तम्भा भागिकोऽलिन्दकोऽपरः॥
विंशतिस्तम्भसंयुक्तो विधातव्यः समन्ततः।
चयावृतश्च पुरतो भागो वाष्टधराग्न्वितः॥
भागमेकैकमुत्सृज्य कर्णाभ्यां भागविस्तृतौ।
भागिकोच्छ्रायनिष्कासौ कार्यौ प्राग्रीवकौ पुनः॥
वाह्यतो भित्तिसंश्लिष्टौ त्रिदिशं सगवाक्षकौ।
स्वस्तिकोऽयं समाख्यातः प्रासादश्चित्रलक्षणः॥

व शिखरोत्तमाः

स० सू० ५२.२१–२२

प्रथमो रुचकस्तेषु द्वितीयो वर्धमानकः।
अवतंसस्तृतीयस्तु चतुर्थो भद्र उच्यते॥
पञ्चमः सर्वतोभद्रः षष्ठः स्यान्मुक्तकोणकः।
मेरुमन्दर इत्यष्टौ विज्ञेयाः शिखरोत्तमाः॥

स भूमिकायुक्ताः

टि० तत्र द्राविडप्रासादेषु विलोकनीयाः

प्रासादरचनायांशिखरादिविरचना:

भिद्रः
प्रा० म०
३. १–४

अतिस्थूला सुविस्तीर्णा प्रासादाधारिणी शिला।
अतीव सुदृढा कार्या इष्टकाचूर्णवारिभिः॥
शिलोपरि भवेद्भिट्टमेकहस्ते युगाङ्गुलम्।
अर्द्धाङ्गुला भवेद् वृद्धिर्यावद्धस्तशतार्द्धकम्॥
अङ्गुलेनांशहीनेन अर्धनार्धेन च क्रमात्।
पञ्च-दिक-विंशतिर्यावच्छतार्धं च विवर्धयेत्॥
एक-द्वि-त्रीणि भिट्टानि हीनहीनाति (नि?)कारयेत्।
स्व-स्वोदयप्रमाणस्य चतुर्थांशेन निर्गमः॥

पीठम्
३. ५–१४

[श्रीः] पीठमर्ध त्रिपादांशैरेकद्वित्रिकरे गृहे।
चतुर्हस्ते त्रिसार्धांशं पादांशं पञ्चहस्तके॥
दश-विंशति-षट्त्रिंशद्-शतार्धं हस्तकावधिः।
वृद्धिर्वेदत्रियुग्मैकसंख्या स्यादङ्गुलैः क्रमात्॥
पञ्चाशहीन (?) माधिक्यमेकैकं तु त्रिधा पुनः।
त्रिपञ्चाशत् समुत्सेधे द्वाविंशत्यंशनिर्गमे॥
नवांशो याड्यकुम्भश्च सप्तांशं कणकं भवेत्।
सान्तरं सकपोतालिः सप्तांशा ग्रासपट्टिकाः॥
सूर्य-दिग्-वसुभागैश्च गजवाजिनराः क्रमात्।
वाजिस्थानेऽथवा कार्यं स्वं स्वं देवस्य वाहनम्॥

पञ्चांशा कर्णिकाग्रे तु निर्गमो जाड्यकुम्भकम् ।
त्रिसार्द्धे कणकं सार्धं चतुर्भिर्ग्रासपट्टिका ॥
कुञ्जराश्च नरा वेदा रामयुग्मं च निर्गमः ।
अन्तरालमधस्तेषामूर्ध्वाधः कर्णयुग्मकम् ॥
गजपीठं विना स्वल्पद्रव्ये पुण्यं महत्तरम् ।
जाड्यकुम्भः कणाली च ग्रासपट्टी तदा भवेत् ॥
कामदं कणपीठं च जाड्यकुम्भः कणालिका ।
त्तिने निर्गमे हीने साधारे निर्गमाधिकम् ॥
सर्वेषां पीठमाधारः पीठहीनं निराश्रयम् ।
पीठहीनं विनाशाय प्रासादभुवनादिकम् ॥

मण्डोवरः
प्रा० म०
३. १५–२३

हस्तादिपञ्चपर्यन्तं विस्तरेणोदयः समः ।
स क्रमान्नव सत्येपुरामचन्द्रोऽङ्गुलाधिकः ॥
पञ्चादिदशपर्यन्तं त्रिंशद्यावच्छतार्धकम् ।
हस्ते हस्ते क्रमाद्वृद्धिः मनुसूर्यनवाङ्गुला ॥
एकहस्तादिपञ्चान्तं पृथुत्वेनोदयः समाः (मः?) ।
हस्ते सूर्याङ्गुला वृद्धिर्यावत् त्रिंशतकरावधि ॥
नवाङ्गुला करे वृद्धिर्यावद्धस्तशतार्धकम् ।
पीठोर्द्धे उदयश्चैवं च्छाद्य (?)न्ते नागरादिकम् ॥
एकविंशत् (?) पञ्चशते प्रासादस्य समुच्छ्रयः ।
पञ्चादिनवभागान्तं पीठस्य पञ्चधोदयः ॥
वेदवेदेन्दुभक्ते तु च्छाद्यन्ते (?) पीठमस्तकात् ।
खुरकः पञ्चभागं स्याद्विशती कुम्भकस्तथा ॥
कलशोऽष्टौ द्विसार्धं तु कर्त्तव्यं मन्तरालकम् ।
कपोतिकाष्टौ मञ्ची स्यात् कर्त्तव्या नवभागिका ॥
पञ्चत्रिंशतपदा जङ्घा तिथ्यंशैरूद्‌गमो भवेत् ।
वसुभिर्भरणी कार्या शिरापट्टी दशांशिका ॥
अष्टांशार्धा कपोतालि (:?) द्विसार्धं मन्तरालकम् ।
च्छाद्यं त्रयोदशांशोच्चं दशभागैर्विनिर्गमः ॥

शिखरम्—
प्रा० म०
४. १२–२३

सपादं शिखरं कार्यं सकर्णं शिखरोदयम् ।
सपादकर्णयोर्मध्ये रेखाःस्युः पञ्चविंशतिः ॥
प्रोक्ता रेखा (:?) कलाभेदैर्वलनैः पञ्चविंशतिः ।
पञ्चादिनवयुग्मान्तं खण्डानि तेष्वनुक्रमात् ॥
अंशवृद्ध्या कलाः कार्या दैर्घ्ये स्कन्धेऽपि तत्समा (:?) ।
अष्टादावसुपष्ठ्यन्तं चतुर्वृद्ध्या तु षोडशम् ।
दैर्घ्यतुल्याः कलाः स्कन्धे एकहीनास्तु षोडश ॥

ऊर्ध्वा अष्टादशांशा (:?) स्युस्तिर्यक् षोडश एव च।
चक्रेऽस्मिन् सम्भवत्येव रेखाणां षट् शतद्वयम्॥
त्रिखण्डात् खण्डवृद्धिश्च यावदष्टादशैव हि।
एकैकांशे कलाष्टौ च समाचार्यस्य षोडश॥
द्वितीयप्रथमे खण्डे कलाष्टौ द्वितये नव।
तृतीये दशखण्डेषु शेषेषूर्ध्वेष्वयं क्रमात्॥
अष्टदिक् सूर्यभागैश्च त्रिखण्डात्रि (तृ?)तीया भवेत्।
अनेन क्रमयोगेन कोष्ठानङ्कैः प्रपूरयेत्॥
रेखाणां जायते संख्या षट्पञ्चाशच्छतद्वयम्॥
दैर्घ्ये भवति यावत्यः कला (:?) स्कन्धेऽपि तत्समा।
सव्यासं शिखरं कार्यं सकर्णं शिखि(ख?)रोदयम्॥
व्यासस्य कर्णयोर्मध्ये रेखाः स्युः पञ्चविंशतिः।
विंशद्भिर्विभजेद् भागैः शिलान्तः फलाशान्तकम्॥
मण्डोवरोऽष्टसार्धाष्टनवांशै (:?) शिखरोदयम्।
रेखामूलस्य विस्तारे पद्मकोशं समालिखेत॥
चतुर्गुणेन सूत्रेण सपादः शिखरोदयः॥
स्कन्धकोशान्तरे सप्त भक्ते ग्रीवा तु भागतः।
सार्धमामलसारञ्च पद्मपत्रन्तु सार्धकम्॥

कलशः
प्रा० म०
४. २४-२८

त्रिभाग उच्चकलशो द्विभागं तस्य विस्तरम (?)।
प्रासादस्याष्टमांशेन पृथुत्वं कलशान्तकम्॥
च्छाद्यंतः स्कन्धपर्यन्तं एकविंशतिभाजिते।
अङ्क-दिक्-रुद्र-सूर्यांशै र्विश्वांशैस्तस्य चोच्छ्रयः॥
शुकनासस्य संस्थानं च्छाद्योर्ध्वे पञ्चधा मतम्।
एक-त्रि-पञ्च-सप्ताङ्कसिंहस्थानानि कल्पयेत्॥
द्वारस्य दक्षिणे वामे कपिलि(:?) षड्विधा मता।
तदूर्ध्वे शुकनासा स्यात् सैव प्रासादनासिका॥
प्रासादो दशभागश्च द्वित्रिवेदांशसम्मिताः।
प्रासादेनार्धपादेन त्रिभागेनाथ निर्मिता॥
शृङ्गोरूशृङ्गप्रत्यङ्गैः खण्डकात् गणयेत् सुधीः।
तवङ्गं तिलकं कर्णं कुर्यात् प्रासादभूषणम्॥
दशांशे शिखरे मूले अग्र ( ? ) तल नवांशकैः।
सार्धांशकौ रथौ कोणौ द्वौ शेषं भद्रमिष्यते॥
रथयोरुभयोर्मध्ये वृत्तमामलसारकम्।
उत्सेधो विस्तरार्धेन चतुर्भागैर्विभाजयेत्॥
ग्रीवा चामलसारश्च पादोनञ्च सपादकम्।

| | |
|---|---|
| स० सू० | अलिन्दे मण्डपे वापि चतुष्के वलभीषु वा। |
| ५४. २७-३१ | वितानानि विचित्राणि समुत्क्षिप्ततलानि च ॥ |
| | लक्षणेन च युक्तानि विदधीत यथोचितम्। |
| | लुमाः फलकवर्तीभिः कृताः समभिदध्महे ॥ |
| | उत्क्षिप्तानां च ये भेदा जायन्ते सर्ववास्तुषु। |
| | तुम्बिनी लम्बिनी हेला शान्ता कोला मनोरमा ॥ |
| | आध्माता चेति सप्तैता नामतः कथिता लुमाः ॥ |
| वितानानि | एताभिः कारयेत् कोलं वितानं नयनोत्सवम्। |
| स० सू० | कोलाविलं हस्तितालु चाष्टपत्रं शरावकम् ॥ |
| ५४. ४३-४१ | नागवीथीवितानं च पुष्पकं भ्रमरावली ॥ |
| | हंसपक्षं करालं च किङ्कटं शंखकुट्टिमम्। |
| | शंखनाभिः सपुष्पं च शुक्ति (वृ?वृं) त्तकमेव च ॥ |
| | मन्दारं कुमुदं पद्मं विकासं गरुडप्रभम्। |
| | पुराहूतं पुरारोहं विद्युन्मन्दारकं तथा ॥ |
| | एतान्येवं वितानानि सङ्ख्यया पञ्चविंशतिः ॥ |
| छाद्योदयाः | आतपत्रोऽथ कौवेरः शमनाख्यस्तथावली। |
| ५४. ७४-५ | हंसपृष्ठो महाभोगी नारदः शम्बुकस्तथा ॥ |
| | वामनः प्रथमस्तेषामावन्त्येन दशेत्यमी ॥ |
| वृत्ताश्च | कुबेरशेखरीचन्द्री नागश्चाथ गणाधिपः । |
| ५४. ७७ | मुख्यश्छाद्यः सुभद्रश्च वृत्ते सप्तोदयाः स्मृताः ॥ |
| सिंहकर्णम् | इदानीमभिधास्यामः सिंहकर्णस्य लक्षणम् ॥ |
| स० सू० | त्रिवलीवलितो नाम सिंहकर्णोऽयमीरितः ॥ |
| | चतुर्दशांशविस्तीर्णौ कर्णौ सार्धे वलिर्भवेत् ॥ |
| | चैत्र एकवलिर्नाम सिंहकर्णस्तथाऽपरः ॥ |
| पत्रजातयः | कूटाकारैर्विचित्रैश्च शोभनै रूपकर्मभिः ॥ |
| ५५. १५७-६० | पत्रजातैरनेकैश्च कण्ठं कुर्याद् यथेप्सितम्। |
| | पाचकः कटुतीक्ष्णाद्यैरनुसाररसैर्यथा ॥ |
| | अन्वीक्ष्यः विपचेत् तद्वत् स्थपतिः सर्वमाचरेत्। |
| | यदुक्तं यदनुक्तं च तत् समग्रमपि स्फुटम् ॥ |
| | (युक्त्या) युक्त समालोच्य यथाशोभं समाचरेत् ॥ |
| स्तम्भचित्राणि | स्तम्भैर्विविधविन्यासैर्बहुभङ्गविनिर्मितैः ॥ |
| ५७. ४२६-३६ | भूषितैः कर्मभिश्चित्रैः सर्वत्र शुभलक्षणैः। |
| | चन्द्रशालादिसंयुक्तैस्तोरणैश्चारुचामरैः ॥ |
| | तथा चतमुखग्रासैर्वनरूपतया स्थितैः। |
| | व्यालैर्व्यालोलजिह्वैश्च मकरग्राससंयुतैः ॥ |

मदान्धालिकुलाकीर्णगजवक्त्रविभूषितैः ।
विद्याधरवधूवृन्दैः क्रीडारम्भविभूषितैः ॥
सुराणां सुन्दरीभिश्च वीणाहस्तैश्च किन्नरैः ।
सिद्धगन्धर्वयक्षाणां वृन्दैश्च परितः स्थितैः ॥
अप्सरोभिश्च दिव्याभिर्विमानावलिभिस्तथा ।
चारुचामीकरान्दोलाक्रीडासक्तैश्च (निःसराम्?) ॥
नागकन्याकदम्बैश्च सर्वतः समलङ्कृतम् ।
एवंविधाभिः सर्वत्र भूमिकाभिर्निरन्तरम् ॥
अलङ्कृतो विधातव्यो मेरुः प्रासादनायकः ॥

प्रासाद-संस्तवनायाम्—

स० सू० ५८. १-१७

प्रासादानां चतुःषष्टिरिदानीमभिधीयते ।
या पूर्वं ब्रह्मणा दत्ता (प्र?प्रा) सादा विश्वकर्मणे ॥
मर्मवेधस्थिता वास्तुदेवाः पूज्या यथोचितम् ।
पूज्यता च स्मृतां तेषां प्रासादे मण्डपे ध्वजे ॥
आसने वाहने तद्वत् सर्वोपकरणेष्वपि ।
प्रासादे यादृश (श्छन्दस्तादृङ्मन्दपीठयोः?) ॥
तथा वास्तुविरुद्धं स्यात् प्रासादाङ्गे हिते (?) विदुः ।
अष्टावष्टौ स्मृतास्तेषु त्रिदशानां पृथक् पृथक् ॥
शम्भो (र्हरे) र्विरिञ्चस्य ब्रह्मणाम (धिपस्य च) ।
चण्डिकाया गणेशस्य श्रियाः सर्वदिवौकसाम् ॥
विमानः सर्वतोभद्रो गजपृष्ठोऽथ भ्रमकः ।
वृषभो मुक्तकोणश्च नलिनो द्राविडस्तथा ॥
इत्येतेऽष्टौ समुद्दिष्टाः प्रासादास्त्रिपुरद्रुहः ।
गरुडो वर्धमानश्च शंखावर्तोऽथ पुष्पकः ॥
गृह (र?राट्) स्वस्तिकश्चैव रुचकः पुण्ड्रवर्धनः
कार्या जनार्दनस्याष्टौ प्रासादाः पुरभूषणाः
मेरुमन्दरकैलासा हंसाख्यो भद्र एव च ।
उत्तुङ्गो मिश्रकश्चैव तथा मालाधरोऽष्टमः
इत्यष्टौ ब्रह्मणः प्रोक्ताः प्रासादाः पुरमध्यगाः
गवयश्चित्रकूटश्च किरणः सर्वसुन्दरः
श्रीवत्सः पद्मनाभश्च वैराजो वृत्त एव च ।
एते कार्या रवेरष्टौ प्रासादाः शुभलक्षणाः ॥
(नन्यावर्तश्चैव चलभश्चर्णादिख्यः?) सिंह एव च ।
विचित्रो योगपीठश्च घण्टानादपताकिनौ ॥

अष्टावेते विधातव्याश्चण्डिकायाः सुरालयाः ।
(गुहारसलोकश्च ?) वेणुभद्रोऽथ कुञ्जरः ॥
तथाच हर्षविजयावुदकुम्भऽथ मोदकः ।
एतान् विनायकस्याष्टौ प्रासादान् कारयेच्छुभान् ॥
महापद्म (हर्म्यननल) सुज्जयन्तस्तथा परः ।
गन्दमादनसं (ज्ञं?ज्ञश्च) शतश्रृंगा (नवष्ककौ?नवद्यकौ) ॥
सु (म?) विभ्रान्तो (मनो) हारीत्यष्टौ लक्ष्म्याः प्रकीर्तिताः ।
वृतौ वृत्तायतश्चैत्यः किंकिणी लयनाभिधः ॥
पट्टिशो विभवाख्यश्च तत (श्चा?स्ता) राग(णा?णो) च्छमः ।
कुर्वीत सर्वदेवानां प्रासादान् वास्तुशास्त्रवित् ॥

कर्तृकारक-व्यवस्थायाम्—

मेरोः यथा
स० सू०
४६. ३६-४३

मेरोः प्रासादराजस्य देवानामालयस्य च ।
कर्ता क्षत्रिय एवास्य वै(श्य?श्यो)स्य स्थपतिर्भवेत् ॥
एवं विधीयमानेऽस्मिन् मेरौ द्वावपि नन्दतः ।
वास्तुशास्त्रविधिज्ञोऽपि क्षत्रियः स्थपतिर्यदि ॥
तदास्य सत्यं शौचं च विक्रमश्च विनश्यति ।
ईश्वरोऽपि यदा विप्रो मेरुप्रासादकृद् भवेत् ॥
कर्तुः कारयितुः पीडा पूजा चास्य न तादृशी ।
ब्राह्मणः स्थपतिश्चास्य वास्तुशास्त्रे विशारदः ॥
वणिक्कर्मणि वर्तेत धनवानपि यद्यसौ ।
सर्वविप्रेषु निर्दिष्टः कर्ता स्थपतिरेव सः ॥
तत्रस्था देवताः सर्वास्तस्य वृद्धिः कथञ्चन ।
वास्तुशास्त्रविधिज्ञोऽपि तत्तत् कारयिता यदि ॥
राजापि क्षत्रियः कर्ता यदा मे(रु?रो)र्भवेत् तदा ।
राष्ट्रभङ्गो भवेत् तस्य प्रजा यान्ति दिशो दश ॥
क्षत्रियेण नरेन्द्रेण कर्त्ता स्थपतिना यदि (?) ।
मेरोः पूजा भवेत् तत्र क्षत्रियोप्यक्षयं पदम् ॥

प्रासाद-रचना-शैलीषु—

नागरादयः
मान०
१८. ४९-५१

मूलादिस्तूपिपर्यन्तं वेदाश्रं चायताश्रकम् ॥
द्व्यश्रं वृत्ताकृति वाथ ग्रीवादिशिखराकृतिः ।
स्तूपिकात्रयसंयुक्तं द्वयं वा चैकमेव वा ॥
चतुरश्राकृति यत्तु नागरं तत्प्रकीर्तितम् ।
मूलाग्रं वृत्तमाकारं तद्वृत्तायतमेव वा ॥

ग्रीवादिस्तूपिपर्यन्तं युक्त्याथ तद्युगाश्रकम् ।
वृत्तस्याग्रे द्व्यश्रकं तद्वेसरनामकं भवेत् ॥
मूलाग्रात्स्तूपिपर्यन्तं चाष्टाश्रकं वा षडश्रकम् ।
तदग्रं चायतं वापि ग्रीवस्याधो युगाश्रकम् ॥
पूर्ववच्चोर्ध्वदेशं स्याद् द्राविडं परिकीर्तितम् ।
समाश्रकशिखायुक्तं चायामे तच्छिखात्रयम् ॥
द्व्यश्रवृत्तोपरि स्तूपि वृत्तं वा चतुरश्रकम् ।
पद्मादिकुड्मलान्तं स्याद्युक्तवद्वाकृतिं न्यसेत् ॥

५३. ४३–४४
नागरं चतुरश्रम् अष्टाश्रं द्राविडन्तथा ।
वृत्तञ्च वेसरं प्रोक्तम् ... ... ... ... ॥

शि०
मूलादाशिखरं युगाश्ररचितं गेहं स्मृतं नागरम्

१६. ४१–४२
मूलादिशिखरक्रियं षडुरगाश्रोन्नेदितं द्राविडम् ।
मूलाद् वा गलतोऽथवा परिलसद्वृत्तात्मकं वेसरः
तेष्वेकं पृथगात्तलक्ष्म सुविदध्यादात्मनः सम्मतम् ॥
जन्मादिस्तूपिपर्यन्तं युगाश्रं नागरं भवेत् ।
वस्वश्रं शीर्षकं कर्णं द्राविडं भवनं विदुः ॥
वृत्तकर्णशिरोपेतं वेसरं हर्म्यमीरितम् ।
कूटकोष्ठादिहीनानां हर्म्याणां कथितं त्विदम् ॥

कामिका०
प्रत्येकं त्रिविधं प्रोक्तं सञ्चितं चाप्यसञ्चितम् ।

६५. ६–७; १२–१८
उपसञ्चितमित्येवं नागरं द्राविडं तथा ॥
वेसरं च तथा जातिश्छन्दो वैकल्पमेव च ।
स्वविस्तारवशाच्छन्नहस्तपूर्णायतान्वितम् ॥
युग्मायुग्मविभागेन नागरं स्यात् समीकृतम् ।
अन्तरप्रस्तरोपेतमूहप्रत्यूहसंयुतम् ॥
निम्नसन्धारसंस्तम्भग्राते परिद्देशशुभैः ।
द्राविडं वक्ष्यतेऽथातः विस्तारद्वयोरर्वकन् ?
रक्ताछन्नप्रतीचेपाव् युग्मायुग्मविशेषतः ।
हित्वा तत्र समीभूतं भद्रालङ्कारसंयुतम् ॥
अनेकद्वारसंयुक्तं षड्वर्गं द्राविडं स्मृतम् ।
लब्धव्यासायतं यत्तु नातिरिक्तं न हीनकम् ॥
बहुवर्गयुतं वापि दण्डिकावारशोभितम् ।
महावारं विमानोर्ध्वे निर्व्यूहाननसंयुतम् ॥
सनेत्रोपेतमध्याङ्घ्रियुक्तं तद् वेसरं मतम् ।
यतीनां गणिकानाञ्च जीविनां क्रूरकर्मणः ॥
प्रशस्तं वेसरं तेषामन्येषामिते शुभे ॥

सुप्रभेदा० ३१. ३७—३९

द्वारभेदमिदं प्रोक्तं जातिभेदं तथा शृणु ।
नागरं द्राविडं चैव वेसरं च त्रिधा मतम् ॥
कण्ठादारभ्य वृत्तं यद् वेसरमिति स्मृतम् ।
ग्रीवामारभ्य चाष्टांशं विमानं द्राविडाख्यकम् ॥
सर्वं वै चतुरश्रं यद् प्रासादं नागरं त्विदम् ।

## प्रासादस्य विभिन्नाः वर्गाः

## मेर्वादिविंशिकानागरप्रासाद-लक्षणम् (२० नागर-प्रासादाः)

स० सू० ६३. १–३॥

अधुना नागरान् ब्रूमः प्रासादान् नामलक्षणैः ।
मेरुमन्दरकैलासाः कुम्भोऽथ मृगराड् गजः ॥
विमानच्छन्दसंज्ञश्च चतुरश्रस्तथापरः ।
अष्टाश्रिः षोडशाश्रिश्च वर्तुलः सर्व(तोद?भद्र)कः ॥
सिंहास्यो नन्दनो नन्दिवर्ध (मा?) नो हंसको वृषः ।
(गुरुत्मा?गरुडः) पद्माख्यश्च समुद्र इति विंशतिः ॥
नागराणिमिति प्रोक्ता प्रासादानां समासतः ।

एषु भूमिकाण्डकादिकल्पनम् ६३. ४–२१

शत (मुद्र?) श्चतुर्द्वारः षोडशक्षितिरूर्ध्व (तः) ॥
विचित्रशिखराकीर्णो मेरुः प्रासाद उच्यते ।
मन्दरो द्वादशतलः कैलासो नवभूमिकः ॥
अनेकशिखरश्चित्रश्चतुर्द्वारो महोच्छ्रितिः ।
विमानच्छन्दकस्त्वष्टभूमिकः परिकीर्तितः ॥
विंशत्यण्डकसंयुक्तः सप्तभूर्नन्दिवर्धनः ।
षड्भूमिर्नन्दनः कार्यः प्रासादः षोडशाण्डकः ॥
पञ्चभूः सर्वतोभद्रो भद्रशालाविभूषितः ।
अनेकशिखराकीर्णः कर्तव्यः प्रचुराण्डकः ॥
वलभिच्छन्दकः कार्यो देवतानां (ए?) वृषः सदा ।
वृषस्तु स्वोच्छ्रितेस्ततुल्यः सर्वतः स्वस्ति वर्तितः ॥
मण्डलं(?) स तु विज्ञेय एकाण्डकविभूषितः ।
सिंहः सिंहाकृतिर्ज्ञेयो गजो गजसमाकृतिः ॥
कुम्भः कुम्भाकृतिस्तद्वद् भूमिकानवकोच्छ्रितः ।
अञ्जलीपुटसंस्थानः पञ्चाण्डकविभूषितः ॥
षोडशाश्रिः समन्ताच्च विज्ञेयः स समुद्रकः ।
पार्श्वयोश्चन्द्रशाला च उच्छ्रायात् स द्विभूमिकः ॥
तथाष्टाश्रिः पद्मनिभो भूमिकात्रयमुच्छ्रितः ।
षोडशाश्रिः स विज्ञेयो विचित्रशिखरः शुभः ॥
मृगराजस्तु विख्यातश्चन्द्रशालाविभूषितः ।

प्राग्ग्रीवेण विशालेन भूमिका(स यद्ध?सु य उ)च्छ्रितः ॥
अनेकचन्द्रशालस्तु गजः प्रासाद उच्यते ।
पर्यस्तो मृगरास्तु गरुडो नाम नामतः ॥
सप्तभूम्युच्छ्रितस्तद्वच्चन्द्रशालात्रयान्वितः ।
अश्रिभि(र्विहरं तस्य?) षड्भिर्युक्तः समन्ततः ॥
स्यादन्यो गरुडस्तद्वदुच्छ्राये दशभूमिकः ।
पद्मकः षोडशाश्रिः स्याद् भूमिकाद्वितयाधिकः ॥
पद्मतुल्यप्रमाणन(?)त्रावृक्षश्चतुरश्रकः ।
पन्चाण्ड(मे?ए)कभूमिस्तु ग(र्भ?र्भो)हस्तचतुष्टयम् ॥
वृषो भवति ना(त्रायं?)प्रासादः सर्वकामिकः ।
सप्तकापन्चकाभूमिप्रासादो(?) य इहोदिताः ॥
(हिंस्य?) ते समा ज्ञेया ये चान्ये तत्प्रमाणकाः ।
विचित्रशिखराः कार्याश्चन्द्रशालाविभूषिताः ॥
सर्वे प्राग्ग्रीवसंयुक्ताः कर्तव्यास्तोरणान्विताः ।
ऐष्टिका दारवा यद्वा शैलजा वाजनाकुलाः ॥

## शिखरोत्तमाः रुचकादि-चतुष्षष्टिप्रासादाः—

तेषु २५ ललित-प्रासादाः स० सू० ५६. ६-१५

रुचको भद्रकश्चैव हंसो हंसोद्भवस्तथा ।
प्रतिहंसस्तथा नन्दो नन्द्यावर्तो धराधरः ॥
वर्धमानोऽद्रिकूटश्च श्रीवत्सोऽथ त्रिकूटकः ।
मुक्तकोणो गजश्चैव गरुडः सिंह एव च ॥
भवश्च विभवश्चैव पद्मो मालाधरस्तथा ।
वज्रकः स्वस्तिकः शङ्कुर्मलयो मकरध्वजः ॥
इत्येते नामतः प्रोक्ताः प्रासादाः पन्चविंशतिः ।
एतेषां रूपनिर्माणं कथयामो यथाविधि ॥
रुचका (द्य) द्वादशैषां चतुरश्राः प्रकीर्तिताः ।
भवश्च विभवश्चैव चतुरश्रायतौऽथवा ॥
पद्मो मालाधरश्चैव वृत्तावेतावुदाहृतौ ।
मलयो मकराख्योऽथ द्वौ तु वृत्तायताविमौ ॥
वज्रकः स्वस्तिकः शङ्कुरित्थमष्टाश्रयस्त्रयः ।
ललिताः कथिता ह्येते ब्रूमोऽन्यान् मिश्रकानथ ॥

९ मिश्रकाः ५६. १६-१७

सुभद्रो चोकिटश्च(?) सर्वतोभद्र एव च ।
सिंहकेसरिसंज्ञोऽन्यश्चित्रकूटो धराधरः ॥
तिलकाख्यः स्वतिलकस्तथा सर्वाङ्गसुन्दरः ।
नवामी मिश्रकाः प्रोक्ताः कथ्यन्ते (साधकारिकाः?) ॥

| | |
|---|---|
| २५ सान्धार-प्रासादाः ५६. १८-२०॥ | केसरी सर्वतोभद्रो नन्दनो नन्दिशालकः । नन्दीशो मन्दिराख्यश्च श्रीवृक्षश्चामृतोद्भवः ॥ हिमवान् हेमकूटश्च कैलासः पृथिवीजयः । इन्द्रनीलो महानीलो भूधरो रत्नकूटकः ॥ वैडूर्यः पद्मरागश्च वज्रको मुकुटोत्कटः । ऐरावतो राजहंसो गरुडो वृषभस्तथा ॥ मेरुः प्रासादराजश्च देवानामालयो हि सः । |
| तेषु अण्डकवर्तना ५६. २३-३४ | आद्यः पञ्चाण्डकः कार्यः प्रासादः केसरीति यः ॥ सर्वतोभद्रको यस्तु विधेयः स नवाण्डकः । त्रयोदशाण्डकस्तु स्याघन्दनो नाम यो भवेत् । नन्दिशलस्तु यः प्रोक्तः स स्याद् सप्तदशाण्डकः ॥ अण्डकैरेकविंशत्या नन्दीशः परिवारितः । पञ्चविंशाण्डकोपेतं मन्दरं कारयेद् बुधः ॥ श्रीवृक्षः शस्यते चैतेष्वेकोनत्रिंशताण्डकैः । स्याद् त्रयस्त्रिंशताण्डैस्तु प्रासादो ह्यमृतोद्भवः ॥ अण्डकैः क्रियते सप्तत्रिंशता हिमवानपि । सैकया हेमकूटस्तु स्याच्चत्वारिंशताण्डकैः । पञ्चचत्वारिंशताण्डैः कैलासो नाम नामतः । भवत्येकोनपञ्चाशदण्डकः पृथिवीजयः ॥ इन्द्रनीलश्च यःप्रो (कारः ?क्तः स त्रि ) पञ्चाशताण्डकैः । सप्तपञ्चाशता युक्तो महानीलस्तथाण्डकैः ॥ एकषष्ट्यण्डकोपेतः प्रासादो भूधरो भवेत् । पञ्चषष्ट्यण्डकैर्युक्तो रत्नकूटः प्रशस्यते ॥ नवषष्ट्यण्डकः कार्यो वैडूर्यः शुभलक्षणः । त्रिसप्तत्यण्डकयुतः पद्मरागो विधीयते ॥ अण्डकैः सप्तसप्तत्या प्रासादो विजयाभिधः । नवाशीत्यण्डकोपेतो विधेयो मुकुटोत्कटः ॥ ऐरावतस्तु पञ्चाशीत्यण्डकः परिकीर्तितः । नवाशीत्यण्डकैर्युक्तो राजहंसः प्रशस्यते ॥ नवत्या सप्तयुतया प्रासादो वृषभोऽण्डकैः । शतेनैकोत्तरेणाण्डैर्मेरुः प्रासादराट् स्मृतः ॥ |
| ५ निगूढ-प्रासादाः ५६. २२ | लतात्रिपुष्कराख्यौ च पञ्चवक्त्रश्चतुर्मुखः । नवात्मकश्च निगूढः प्रासादा पञ्च संज्ञिताः ॥ |

## द्राविड-प्रासाद-लक्षणम्

| | |
|---|---|
| १२ द्राविड-प्रासादाः ६१. १ | इदानीं द्राविडान् ब्रूमः प्रासादा शुभलक्षणान् । एकभूम्यादयस्ते स्युर्यावद्द्वादशभूमिकाः ॥ |

तेषां पीठपञ्चकलक्षणम् पीठमाद्यं भवेद् तेषु पादबन्धनमुत्तमम्।
६१. ३-४३॥ (श्री ? श्रो ) बन्धरुयं द्वितीयं च तृतीयं वेदिबन्धनम् ॥
प्रतिक्रमसिति प्रोक्तं चतुर्थं पीठमुत्तमम्।
पञ्चमं पीठमुद्दिष्टं नाम्ना क्षुरकबन्धनम् ॥
एतानि पञ्च पीठानि प्रोक्तानीह समासतः।

पञ्चतलच्छन्दाश्च प्रासादानथ वक्ष्यामस्तलच्छन्दादनन्तरम्।
६१. ३२-३३॥ तत्र पद्मो महापद्मो वर्धमानस्तथापरः ॥
स्वस्तिकः सर्वतोभद्रः प्रासादाः प कीर्तिताः।

टि० द्राविड–प्रासाद–सन्निवेशे एकादिद्वादशभूमिकान्यास एव मुख्यं वास्तु। तदधिकृत्य सम-राङ्गणे एकभूमिक-द्विभूमिक-त्रिभूमिकादि-द्वादशभूमिकान्तानां द्राविड-प्रासादानां लक्षण तत्र द्विषष्टितमे ऽध्याये प्रदत्तमस्ति तन्नात्र विस्तार्यते।

## वावाट–प्रासाद–लक्षणम्

स० सू०
६४. १–१२

प्रासादमथ ( वावाटं? ) वक्ष्यामो नामलक्षणैः।
लक्षणै (?) स्तेषु दिग्भद्र श्रीवत्सो वर्धमानकः ॥
नन्द्यावर्तश्चतुर्थः स्यात् पञ्चमो नन्दिवर्धनः।
विमानश्च तथा पद्मो महाभद्राख्य एव च ॥
श्रीवर्धमानकाख्यश्च महा ( प द्म तोपि वा? )।
एकादशः पञ्चशालो द्वादशः पृथिवीजयः ॥
तत्र प्रागेव ( दिग्भद्रः प्रावर्णं? ) प्रतिपाद्यते।
चतुरश्रीकृते क्षेत्रे नवभागविभाजिते ॥
कोणौ द्विभागविस्तारौः प्रत्यङ्गौ भागिकौ स्मृतौ।
शाला भागत्रया कार्या नासिकात्रयशोभिता ॥
परस्परं विनिष्कासमर्धभागेन कारयेत्।
कोणप्रत्यंगयोरन्तः शालाप्रत्यंगयोस्तथा ॥
षोडशांशेन कुर्वीत + + + सलिलान्तरम्।
सीमा ( स्याद्?स्य ) दशभिर्भागैः प्रविभज्य विधीयते ॥
+ + का गर्भपादैः षड् भित्तयः स्युर्द्विभागिकाः।
( वर्धमानेनमथ,ब्रूमो? ) विस्ताराद् द्विगुणं हि तद् ॥
द्वौ भागौ वेदिकाबन्धो जङ्घा ज्ञेया चतुष्पदा।
( शान्तापत्रा? ) कपोताली सार्धभागं समुच्छ्रिता ॥
सार्धभागसमुच्छ्राया कार्या प्रथमभूमिका।
द्वितीया भूमिका ज्ञेया सार्धभागत्रयोदया ॥
तृतीया च विधेया स्यात् सार्धं भागद्वयोच्छ्रिता।

उच्छ्रालकं च जङ्घां च भूमिकार्धं विधीयते ॥
कूटं ( तै? ) चार्धतो देयं कर्मशोभासमन्वितम् ।
घण्टा भागत्रयोत्सेधा बहुभिश्चाग्निभिर्युता ॥

## भूमिज–प्रासाद–लक्षणम्

प्रास्ताविकम्
स० सू०
६५. १–२

भूमिजानां विमानानां ब्रूमो लक्ष्म क्रमागतम् ।
चतुरश्रीकृतानां च वृत्तानां ( वृत पूर्वशः? ) ॥
केषाञ्चिन्निर्गमस्तत्र जायते भागसंख्यया ।
केषाञ्चिद् पुनरेष स्याद् वृत्तमध्यमधिष्ठितः ॥
चतुरश्रीकृते क्षेत्रे दशभागविभाजिते ।
चतुर्भूमियुतस्याथ लक्ष्म (त्संशस्य?च्छन्दस्य)कथ्यते ॥

तेषु निषधादयः
४ चतुरश्राः
६५. ४

चत्वारश्चतुरश्राः स्युर्निषधो मलयाचलः ।
माल्यवान् नवमाली च निषधस्तेषु कथ्यते ॥

कुमुदादयः ७
वृत्तजातयः
६५. ५६–६३

इदानीमभिधीयन्ते प्रासादा वृत्तजातयः ॥
वल्लभाः सर्वदेवानां भूमिजाः पुरभूषणम् ।
आश्रयः श्रेयसामोको यशसामपि राशयः ॥
भुक्तिमुक्तिप्रदातारः (समागते कृता?) नृणाम ।
तत्राद्यः कुमुदो नाम कमलः कमलोद्भवः ॥
(कि)रणः शतशृङ्गश्च निरवद्यस्तथापरः ।
सर्वाङ्गसुन्दरश्चेति प्रासादा वृ(त्त?त्त) जातयः ॥
नविस्तरान्नसंक्षेपाल्लक्ष्मैषामथ कीर्त्यते ।
तत्राद्यः कुमुदो नाम सर्वानन्दकृदुच्यते ॥

५ स्वस्तिकादयाः
५ अष्टशालाः
६५. १४०–१४१॥

अथाष्टशालान् वक्ष्यामो + + + भूमिजातिषु ॥
तेष्वाद्यः स्वस्तिकोऽन्यश्च वज्रस्वस्तिकसंज्ञितः ।
तृतीयो हर्म्यतलकश्चतुर्थं उदयाचलः ॥
गन्धमादनसंज्ञश्च पञ्चमः परिकीर्तितः ।

## प्रासाद-मण्डप-लक्षणम्

प्रासादे मण्डपा-
वश्यकता
७४. १–४

निर्माणं मण्डपानान्तु बहुरूपं स्थलार्हकम् ।
कारयेन्मानविच्छिल्पी देवागारे विशेषतः ॥
अभिषेकाय देवानामलङ्काराय च क्वचित् ।
जननार्थं क्वचिद्देव्या विवाहाय क्वचिन्मतम् ॥
भट्टारकनृपानुज्ञाचोदितो मानभेदवित् ।
देवानामपि देवीनां नित्यनैमित्तिकोत्सवाः ॥

यथा सुलभसाध्यास्स्युस्तथा मण्डपकल्पनम् ।
कारयेन्मतिमान्युक्त्या सर्वं तत्स्थलयोग्यकम् ॥

तेषां स्तम्भाः
७४, ९–८

चतुःपादयुतं वापि क्वचिदष्टपदान्वितम् ।
दशपादयुतं वापि द्वादशांघ्रिसमन्वितम् ॥
षोडशस्तम्भयुक्तं वा स्तम्भविंशतिसंयुतम् ।
चतुर्विन्शतिपादाढ्यमष्टाविंशतिपादकम् ॥
द्वात्रिंशत्स्तम्भयुक्तं वा चत्वारिंशत्पदं तथा ।
पञ्चाशत्स्तम्भसंयुक्तं द्विपञ्चाशत्पदं क्वचित् ॥
चतुष्षष्टिपदोपेतमशीतिस्तम्भभासुरम् ।
शतस्तम्भयुतं वापि मण्डपं बहुरूपकम् ॥

तेषां प्रयोजनम्
७४, ६–१८

स्तम्भस्थापनकार्यार्हपूर्वाङ्गणसमन्वितम् ।
शिलाभिरेव देवानां यतीनाञ्च सत्क्रिया ॥
लौहैर्द्रव्यान्तरैर्भूपमण्डपं स्थापयेत्क्रमात् ।
जपमण्डपकं वाऽपि वेदाध्ययनमण्डपम् ॥
अधिष्ठानयुतं प्रायश्चिरकालाय कल्पते ।
सोपपीठस्तम्भपालि चित्रालङ्करणान्वितम् ॥
मुखाङ्गणसमोपेतं पार्श्वाङ्गणसमन्वितम् ।
चतुरङ्गणयुक्तं वा सवारं वा विवारकम् ॥
समरेखादृष्टिहीनं समोत्तुङ्गविशालकम् ।
वाजिवक्त्रेण संयुक्तं गजवक्त्रान्वितं क्वचित् ॥
यालीमुखसमोपेतं पार्श्वचक्रसमन्वितम् ।
सोपानसंयुतं वापि कल्पयेत्सुमनोहरम् ॥
मुखप्रस्तरयुक्तं वा ऊर्ध्वप्रस्तरणान्वितम् ।
वलभीकल्पनं चोर्ध्वे त्वरणञ्च यथाक्रमम् ।
एकद्रव्यसमायुक्तं विमानशिखरोज्ज्वलम् ।
भित्तिकोष्ठसमायुक्तं कर्णनासादिमण्डितम् ॥
युक्त्या कल्पान्तरयुतं स्थापयेन्मण्डपं दृढम् ।
शङ्करस्य हरेश्चापि धातुर्देवीगणस्य च ।
क्वचिन्मण्डपकल्पस्तु शतस्तम्भसमन्वितः ॥
स्थाप्यः पञ्चविधो युक्त्या पूर्वाङ्गणयुतोऽपि वा ॥

पञ्चविधाः
शतस्तम्भ-मण्डपाः
१. सूर्यकान्तः
७४, १६–२१॥

आद्यस्तु सूर्यकान्तस्यात्सूर्यसंख्यापदावलिः ।
रेखाद्वयं पूर्वभागे तथा पश्चिमभागिके ॥
तन्मध्ये षोडशपदं सव्ये सव्येतरेऽपि च ।
तन्मध्यस्थानभागे च षोडशस्तम्भकल्पनम् ॥
वदन्वस्तु चतुष्पादस्थानं तद्दैवतं सतम् ।

सर्वत्र देवभागस्तु तुङ्गो वाऽधिष्ठितोऽपि वा ॥
अयुग्मपङ्क्तिसंयुक्तो नानाचित्रमनोहरः ।

२. चन्द्रकान्तः
७४, २२–२३

द्वितीयश्चचन्द्रकान्तस्स्यात्सव्यसव्येतरात्मकम् ॥
भागं विभज्य वेदेन षण्णवत्यंघ्रिकल्पनम् ।
मध्ये वेदपदस्थानं तद्दैवतमुदीरितम् ॥

३. इन्द्रकान्तः
७४, २४–२५॥

तृतीयश्चेन्द्रकान्तस्स्यात्पार्श्वयोष्षट्प्रमाणकम् ।
स्तम्भकल्पनमत्रोक्तं वसुपङ्क्तीः प्रकल्पयेत् ॥
मध्ये वेदपदस्थानं तद्दैवतमुदीरतम् ।

४. गन्धर्वकान्तः
७४, २५–२७

चतुर्थो गन्धर्वकान्तश्चतुष्कोणो चतुःक्रमम् ॥
स्तम्भषोडशकं स्थाप्यं तदन्तश्च यथामतम् ।
पूर्वपृष्टपदोपेतनागपादप्रकल्पनम् ॥
तत्संख्याकं तदन्तश्च चतुःपङ्क्तिक्रमात्पदम् ।
तदन्तर्वेदपादन्तु दैवस्थानमुदाहृतम् ॥

५. ब्रह्मकान्तः
७४, २८–३०

पञ्चमो ब्रह्मकान्तस्स्यान्मुखपादेऽष्टपादकम् ।
पृष्ठे च तत्क्रमात्स्तम्भस्थापनं चात्र गण्यते ॥
तदङ्गणस्थानमाहुश्शिल्पशास्त्रविशारदाः ।
ततष्षट्स्तम्भविन्यासद्वयं स्थाप्यन्तु पार्श्वयोः ॥
पृष्ठे चैवं स्थापनीयं मध्ये द्वात्रिंशदङ्घ्रिकम् ।
तन्मध्ये वेदपान्तु तद्दैवतमुदाहृतम् ॥

तत्राऽपि विशेषः
७४, ३१–३३

अन्त्यकल्पनमेतत्तु विषमस्थानकं मतम् ।
आद्यं समं कल्पमाहुश्शास्त्रज्ञा वेदपारगाः ॥
समरेखां दृष्टिहीनं मनोहारिप्रकल्पनम् ।
स्तम्भानां मुखभागेषु पूर्वोत्तरपदस्थली ॥
यथाविभवतः स्थाप्या नानालङ्कारमण्डिताः ।
स्थापनीया विशेषेण देवानां प्रीतिदायिनी ॥

## प्रासाद-मण्डपानां द्वौ वर्गौ

स० सू० ६६. २

संवृतो वा भवेदेष व्यतिरिक्तोऽथवा क्वचित् ॥

तेषां भूषण-क्रिया
६७, १०६, ८

शोभां भद्रेषु कर्णेषु यथायोगं प्रकल्पयेत् ।
वीथीभिश्चन्द्रशालाभिः सिंहकर्णैश्च शोभनैः ॥
रथिकाभिर्वरालैश्च तिलकैश्चारुदर्शनैः ।
घ्टकनासैर्गजैः सिंहैरन्यैरित्येवमादिभिः ।
कर्मप्रकारैः कर्तव्या मण्डपे भूषणक्रिया ॥

गानसाराद्

देवालयेषु सर्वेषु संमुखे बहुमण्डपम् ।
पुण्यक्षेत्रे तथारामे ग्रामादौ वास्तु-मध्यमे ॥

चतुर्दिक्षु विदिक्षु वापि बाह्याभ्यन्तरतोऽथवा ।
नाराणां गृहमध्ये च संमुखे मण्डपं तु वा ॥
सर्वेषां वास-योग्यार्थं (ग्यं च) मण्डपं यागमण्डपम् ।
नृपाणामभिषेकार्थं मण्डपं नृत्तमण्डपम् ॥
पाणिपीडन-सिद्ध्यर्थं तथा तत्रं च मण्डपम् ।
उपनयनमण्डपं चैव तथा च स्नपनमण्डपम् ॥
अर्भकानां सुखालोकं (क) मण्डपं सतीमण्डपम् ।
चौरार्थं मण्डपं चैव चाग्निकार्यार्थमण्डपम् ॥
सुखान्वितार्थं कल्पेत मण्डपं विधिवत्क्रमात् ।
मण्डपानां च सर्वेषां स्थानमुक्तं पुरातनैः ॥
प्रासादाभिमुखे सप्तमण्डपं कल्पयेत्क्रमात् ।
आदौ [च] स्नपनार्थं च द्वितीया (यम) ध्ययनमण्डपम् ॥
विशेषं स्नपनार्थं च मण्डपं च तृतीयकम् ।
चतुर्थं प्रतिमागारं पञ्चमं स्थापन-मण्डपम् ॥
षष्ठं चापि ततः कुर्यात्तीर्थमण्डपम् ।
सप्तमं नृत्तगीतार्थमागारं तत्साधकार्थकम् ॥
अथवा तन्मुखे कुर्यादेकद्वित्रि च मण्डपम् ।
स्नपनं प्रतिमाङ्गानां गीतनृत्तार्थमण्डपम् ॥
मण्डपं द्वितीयं चैतत अ(द) प्रमण्डप (पं) तन्मुखे (च) ।
आदौ चाध्ययनार्थं स्यात्प्रतिमा-मण्डपं तथा ।
तत्रैव मण्डपं कुर्यात्प्रतिमामण्डपं बुधः ।

## प्रासाद-जगती लक्षणम्

जगती-माहात्म्यम् त्रिदशागारभूत्यर्थं भूषाहेतोः पुरस्य तु ।
स० सू० ६८. १–४ भुक्तये मुक्तये पुंसां सर्वकालं च शान्तये ॥
निवासहेतोर्देवानां चतुर्वर्गस्य (हे ?) सिद्धये ।
मनस्विनां च कीर्त्यायुर्यशस्सम्प्राप्तये नृणाम् ॥
जगतीनामथ ब्रूमो लक्षणं विस्तरादिह ।
प्रासादं लिङ्गमित्याहु (लिङ्ग ?)ल्लयनाद् यतः ॥
ततस्तदाधारतया जगती पीठिका मता ।
आकाराः चतुरश्रा समा शस्ता मनोज्ञा सर्वतःप्लवा
६८. १०–१२ अंशप्रगूढदिग्भागा प्रासादानुगता शुभा ॥
निरूप्य त्रिदशागारं संस्थानोन्मानलक्षणैः ।
तदाकारतीं पार्श्वे जगतीं तस्य योजयेत् ॥
प्रासाद-शोभा जग० कुर्यात् पीठेषु शोभार्थं प्रासादानां विचक्षणः ।
६८. ४८ यथा सिंहासनं राज्ञां शोभते मणिदीप्तिभिः ॥

तथा प्रासादराजस्य पीठं कर्मभिरुत्तमैः।
२६ जगत्यः वसुधा वसुधारा (च) वहन्ती च तथाप (रे?रा)।
६८-१-८ श्रीधरा भद्रिका चैव एकभद्रा द्विभद्रिका॥
त्रिभद्रिका भद्रमाला वैमानी अमरावली।
स्वस्तिका हरमाला च कुलशीला महीधरी॥
मन्दारमालिकानङ्गलेखाथोत्सवमालिका।
नागारामा मारभव्या तथाच मकरध्वजा॥
नन्द्यावर्ता (र्त?) च भूपाला पारिजातकमञ्जरी।
चूडामणिप्रभा चैव तथा श्रवणमञ्जरी॥
विश्वरूपादिकमला तथा त्रैलोक्यसुन्दरी।
गन्धर्वालिका चान्या विद्याधरकुमारिका॥
सुभद्रा च समाख्याता तथान्या सिंहपञ्जरी।
(वज्रपकुरवाद्याः?) गन्धर्वनगरी तथा॥
तथामरावती ज्ञेया रत्नधूमा च नामतः।
त्रिदशेन्द्रसभा चैव तथान्या देवयन्त्रिका॥
चत्वारिंश (द्वि?दि) तीयं स्यादेकोना नाम सङ्ख्यया।
(यमलाम्बुरधरा नेत्रा दोदण्डाः खण्डला सिता?)॥

## प्रासाद-निवेशः-तथाहि-विश्वकर्म-वास्तु-शास्त्रे देव-प्रासाद-लक्षणम्

वि० वा० तैतलायतनं प्रायश्शुभदं सर्वदिङ्मुखम्।
७२. १-२ वैष्णवं सर्वतोवक्त्रं शैवं गेहं तु दक्षिणम्॥
वैधात्रमन्यदेवानां गेहं सर्वमुखं शुभम्।
महीधरादिस्थानेषु न पृष्ठस्थापनं शुभम्॥
तत्र गोपुर-प्राकारादि- वास्तुमानवशात्सर्वं स्थापयेद्दीक्षितो नृपः।
सन्निवेशः गोपुरद्वारसंयुक्तं प्राकारावृतवास्तुकम्॥
७२. ३-४ वहिरन्वस्तु वा स्थाप्यस्तटाकस्सांगणो मतः।
जलमण्टपयुक्तो विमानशिखरोज्वलः॥
तत्र मण्डपादिसन्निवेशः बलिपीठसमायुक्तमष्टदेवपदान्वितम्।
अन्योचितभवन- ध्वजपीठपुरोभागे पार्श्वयोर्मण्टपा मताः॥
शालादिसन्निवेशश्च देवीनां भवनैर्युक्तं भक्तानां च गृहैर्युतम्।
७२. ५-१५ पूर्वमण्टपसंयुक्तगर्भगेहेन भासुरम्॥
सर्वत्र समसूत्राणां द्वाराणां स्थापनं मतम्।
कवाटयुग्मकलनं शुभदं चात्र कीर्तितम्॥
आग्नेयां पाकशाला स्यात्कूपचत्वरसंयुता।

नैऋत्यां वाहनस्थानं वायव्यां वस्त्रगेहकम् ॥
ऐशान्यां धान्यभवनं मध्यस्थाने महागृहम् ।
कल्पनं मण्डपानां वा तन्मध्ये सालकक्रमात् ॥
हस्तिशालावाजिशालागोशालाभिस्समन्वितम् ।
स्नानालङ्करणस्थानं विहारस्थानकानि च ॥
आस्थानमण्टपो वापि चतुःस्तम्भादिभूषितः ।
डोलाशयनशाला च गर्भगेहान्तरे मता ॥
प्रदक्षिणतलस्थानं सेवाप्राप्तिस्थलानि च ।
सव्ये वा पुरतो भागे वाहनारोहमण्डपः ॥
दक्षिणे मित्रभागे वा भूधरे वा पुरःस्थले ।
मुखवीथ्यां माठवीथ्यां वाहनारोहणस्थलम् ॥
नानाशालासमायुक्तं नानाकल्पनभूषितम् ।
नानागोपानसीयुक्तं नानागोपुरकल्पनम् ॥
सचित्रशिखरैं रम्यं दण्डकल्पं प्रकल्पयेत् ।
न मण्डलस्थानयुतं न न्यूनं नापि चाधिकम् ॥
दोषहीनं गुणोपेतं कल्पयेच्छिल्पवित्तमः ॥

## प्रासादे गर्भगृहनिवेश–लक्षणम्

गर्भगृह–लक्षणम् ७३, १–२

हरेर्हरस्य धातुर्वा तद्देवीनामनेकधा ।
आधारासनसंयुक्तं स्थानं गर्भगृहं मतम् ॥
ससनेत्रं समद्वारं द्वारपञ्चकमायुतम् ।
द्वारत्रयसमायुक्तं आन्यमाहुर्मनीषिणः ॥

तस्य मानम् ७३, ३–६

द्वारपालान्वितं तस्य पार्श्वस्थानं प्रकल्पयेत् ।
दण्डद्वयव्यासमानमथवा हीनमानकम् ॥
तन्मानद्विगुणं वापि तन्मानत्रिगुणं तु वा ।
गर्भगेहस्य दैर्घ्यन्तु कल्पयेच्छिल्पवित्तमः ॥
अन्तःप्रदक्षिणोपेतमथवा तेन हीनकम् ।
पार्श्वयोर्वा पृष्ठभागे गोमुखस्थानकं मतम् ॥
द्विदण्डं वा त्रिदण्डं वा कुड्योत्सेधमथाधिकम् ।
द्वारान्तरे वेदिका वा क्षुद्रदेहल्ययापि वा ॥

तत्रान्यनिवेशाः तत्रदेवकार्यञ्च ७३, ७–१२

नानापौगसमायुक्ता मुखतोरणमण्डिता ।
देवस्थानं वेदिकाख्यं तदधिष्ठानकं मतम् ॥
तस्मान्निम्नक्रमेणात्र पूर्वभागःप्रकीर्तितः ।
प्रतिद्वारवर्तं द्वारपालस्थानमथापि वा ॥
अन्तर्निम्नं बहिःपृष्ठे कूर्माकारमथापि वा ।

नानाधिष्ठानोपपीठसंयुतं मूलभूमिकम् ॥
गर्भन्यासेन संयुक्तं यन्त्रपट्टेन चान्वितम् ।
सर्वेषामपि देवानां देवीनामेवमाचरेत् ॥
नानाङ्गणविभक्ताङ्गबहिरङ्गणकल्पितम् ।
तत्र स्थाप्यं शुभे काले देवानां बेरजालकम् ॥
नयनोन्मीलनं प्रायश्चात्र कार्यमुदाहृतम् ।
कर्पूरचन्दनरसैः सेचयेद्वासयेदपि ॥

तद्द्विविधं तत्र पार्श्वमण्डपादीनि च ७३. १३-१६

दैवब्राह्मविभेदेन तत्स्थानं द्विविधं मतम् ।
तत्र पूर्वस्थले भद्रमण्डपं कारयेन्नृपः ।
तत्पूर्वमण्टपं वापि प्रभाष्टमुखकेलिकम् ।
चतुःस्तम्भसमेतं वा स्तम्भाष्टकसमुज्ज्वलम् ॥
षोडशस्तम्भयुक्तं वा महती शालका मता ।
चित्रस्तम्भसमोपेता बलभीतोरणोज्ज्वला ॥
गर्भगेहमुखद्वारयुक्तकल्पनमुत्तमम् ।
जङ्गमास्थानवाहादिमण्टपादीन्प्रकल्पयेत् ॥
संयुक्ता वा वियुक्ता वा द्वारान्ते स्तम्भपार्श्वका ।
दीपदेव्यस्स्थापनीया नानालङ्कारभूषिताः ॥
अथवा दीपकीलादींस्तोरणे विन्यसेत्क्रमात् ।
स्तम्भपञ्जरयुक्तं वा क्षुद्रद्वारयुतं क्वचित् ॥
दण्डं यवनिकाक्रान्तं डोलास्थानं च कल्पयेत् ।
मुखवेदीसमायुक्तं नैवेद्यासनसंयुतम् ॥
युक्त्या प्रकल्पयेद् गर्भगेहमेवं प्रमाणवित् ।

## द्वितीयः पटलः

### विमान-वास्तु

#### विमान-लक्षणम्

वि० वा०
७५. १-२०

सर्वेषामपि देवानां देवीनामपि सेविनाम्
गर्भगेहस्य मौलौ यत्कल्पनं रक्षणार्थकम् ॥
तद्विमानमिति प्राहुश्शिल्पशास्त्रविशारदाः ।
प्रतिलोमक्रियां तत्र स्थापयेच्छिल्पकोविदः ॥
तत्कल्पनकलं(समं) कृत्स्नं विमानाधिष्ठतं मतम् ।
मण्डलञ्चतुरश्रं वा व्यासाधिक्यं क्वचिन्मतम् ॥
गजपृष्ठाकारवद्वा चापाकारं क्वचिन्मतम् ।
आधारमानद्विगुणं त्रिगुणं वा चतुर्गुणम् ॥
औन्नत्यं कल्पयेत्तस्य मुखवर्धनसंयुतम् ।
अधिष्ठानस्तम्भकर्णप्रस्तराख्यविभागभाक् ॥
चतुर्भागौन्नत्यकल्प्यं पूरयेत्खण्डनक्रमात् ।
शैलं सौधं लौहमयं विमानं दृढसन्धिकम् ॥
तक्षयेद्वर्धयेन्मानक्रमतष्टङ्कभेदनैः ।
चतुर्भागं नयेद् भूमौ पादुका तत्प्रमाणका ॥
एकेन कम्पनिर्माणमेकहस्तद्विहस्तकम् ।
ऊर्ध्वस्तम्भप्रमाणन्तु कल्पनान्तरभेदतः ॥
उपपीठं कल्पयेद्वा प्रान्तपट्टिकया युतम् ।
द्वाभ्यामेकेन वा तत्र उपानत्स्थानमीरितम् ॥
चतुर्भागेन पद्मन्तु मुखपत्रसमन्वितम् ।
कम्पमेकेन कर्तव्यं पार्श्वनेत्रं द्विभागिकम् ॥
पञ्चभागेन कुमुदमेकेनोर्ध्वतलं मतम् ॥
द्विभागेन महापट्टमग्रपट्टं त्रिभागतः ॥
वेदिका नागबन्धश्च पादश्च कमलं घटः ।
पञ्चभागश्च षड्भास्सप्तभागोऽथवा भवेत् ॥
फलकाबोधिकाभागो द्विभागश्च कपोतकः ।
प्रस्तरश्चाष्टभागेन कथितो बहुवक्त्रकः ॥
ग्रीवा तु दशभागेन चतुरश्राकृतिर्भवेत् ।
मण्डलाकृतिरग्रा तु पट्टिका च द्विभागिका ॥

नानामुखसमोपेतं मौलिभागयुतन्तु वा ।
स्थूपिप्रकल्पनं तत्र लोहजं दृढसन्धिकम् ॥
प्रस्तरान्ते मध्यभागे त्रिमूर्तिस्थानकैर्युतम् ।
पृथग्वेरस्थलं वापि पौषस्थानमथापि वा ॥
देवानामापि देवीनां दासनां गर्भगेहके ।
कलिङ्गं द्राविडं शौरसेनिकं कौसलन्तथा ॥
विमानकल्पनं कार्यं कुम्भपञ्जरसंयुतम् ।
बोधिकाजालकैर्युक्तं द्वारपालाश्रितन्तु वा ॥
रन्ध्रहीनं मध्यकल्पमवाग्वक्त्रादिवर्जितम् ।
देवरूपसमोपेतं कल्पयेच्चित्रभूषितम् ॥
कर्णकूटक्रियोपेतं कीलकुम्भयुतं क्वचित् ।
सौवर्णं राजतं ताम्रं कवचञ्च क्वचिन्मतम् ॥

## विमान-प्रासाद-निवेशः

विमान-प्रासादानां देवताः ४९. १०४-१०७॥

कीर्तितानि विमानानि यान्येव सुरवर्त्मनि ।
तान्येव स्थावरत्वेत प्रासादा इति विश्रुताः ।
महेश्वरस्य कैलासो विष्णोस्तु गरुडाभिधः ॥
कार्यः प्रजापतेः पद्मो गणनाथस्य च द्विपः ।
न खल्वेते चान्यदेवानां विधातुमुचिताः स्मृताः ॥
यस्तु त्रिविष्टपः स स्यात् सर्वदेवनिकेतनः ।
अस्मात् तु येऽन्ये प्रासादाः स्मृतास्तेऽनेकरूपिणः ॥
सर्वेषामेव देवानामभेदेन भवन्ति ते ।

तेषु जगत्यादि-निवेशः ४९. १०८-११७॥

जगत्यां विस्तरः कार्यः प्रासादोच्छ्रयसंमितः ॥
गर्भार्धेनोच्छ्रयस्तस्याः शुभदः परिकीर्तितः ।
मण्डपस्य षडंशार्धो(?) पञ्चमांशादथ स्मृतः ॥
कर्णप्रासादकाः कार्याः प्रासादस्य त्रिभागतः ।
पूर्वापरमुखाः कार्या एते याम्योत्तराननाः ॥
ऐन्द्रे याम्ये वारुणे च कौबेरे च यथाक्रमम् ।
दिग्भागेषु चतुर्ष्वेषु वलभीं विनिवेशयेत् ॥
गर्भविस्तारविस्तीर्णां द्वौ त्रिभागौ मुखायताम् ।
इति वाह्यपरीवारे जङ्घा प्रासादमानतः ॥
तिर्यगायतमारोप्य सूत्रं गर्भेण मण्डपे ।
(गुरुकक्षोऽथ?) कर्तव्या गवाक्षस्तम्भसंयुता ॥
प्रासादविस्तरात् कार्यो द्विगुणो मण्डपः सदा ।
मण्डपस्यं(स?स्य) विस्तारा(द्)जगती द्विगुणा वहिः ॥

कर्णप्रासादकाः कार्याः प्रासादस्यार्धतोऽपिवा ।
तेषामध्यर्धतः कुर्याद् वलभीनां निवेशनम् ॥
अनेन क्रमयोगेन वाह्याद् बाह्यं सुसंवृतम् ।
य(दा?था)हि शोभते राजा केयूराङ्गदकुण्डलैः ॥
तथा प्रासादराजोऽयं शोभते भूषणैर्निजैः ।
ध्वास्याहास्यातिसौम्य(?)श्रीकीर्तिविजयावहः ॥
अनेन विधिना न्यस्तः प्रासादः स्यात् सदा नृणाम् ।

देवपरीवारस्थापनञ्च
४९. ११८–१२४॥

आदित्यं पूर्वतो न्यस्येत् कुमारं पूर्वदक्षिणे ॥
दक्षिणे मातृदेव(नै?वां)स्तु गजास्यं दक्षिणोपरि ।
विन्यसेद् वारुणे गौरीं वायव्येऽपि च चण्डिकाम् ॥
विष्णुं कुबेरदिग्भागे तथैशान्यां महेश्वरम् ।
अन्येषामपि देवानां कथ्यते तु क्रमोऽधुना ॥
तत्रैशान्यां दिशि न्यस्येदीशानं लोकनायकम् ।
दानवानां निहन्तारं पूर्वस्यामपि वासवम् ॥
वैश्वानरं तथाग्नेय्यां धर्मराजं च दक्षिणे ।
नैरृत्यां निरृतिं न्यस्येत् प्रतीच्यां तु प्रचेतसम् ॥
वायुं वायव्यदिग्भागे कुबेरमपि चोत्तरे ।
अष्टौ ह्येते महात्मानो लोकपालाः प्रकीर्तिताः ॥
पालयन्ति जगत् सर्वं स्वस्वस्थाने प्रतिष्ठिताः ।
पुर(कर्कट?कर्वट)दुर्गेषु ग्रामेषु नगरेषु च ॥
क्रमेणानेन विन्यस्ताः स्युः प्रजानां सुखावहाः ।

विमान-लक्षणम्
मा०
१८, १–४४

विमानलक्षणं चैव संक्षेपाद्वक्ष्यतेऽधुना ।
तैतिलानां द्विजातीनां वर्णानां वासयोग्यकमम् ॥
एकभूमिविमानादिरविभूम्यवसानकम् ।
भक्तिसंख्या (ख्यां) तदाकारं स्थू(स्तू) पिकाद्यैश् (दि) च लक्षणम् ॥
लुपमानक्रियं सर्वं स्तूपिकास्थानकं क्रमात् ।
खानयेद्धतलं श्रेष्ठं पुरुषाञ्जलिमात्रकम् ॥
जलान्तं वा शिलान्तं वा पूरयेद्वालुकैर्जलैः ।
हस्तिपादाकृतिं (ति) दारुस्तम्भेन (च) प्रहारयेत् ॥
एवं दृढकरं(कृतं) चोर्ध्वे यथाशास्त्रं(हर्म्यं) तु कारयेत् ।
एकभूमिविमाने तु चोक्तवस्करसंग्रहम् ॥
एकभक्त्या विभक्त्या वा त्रिचतुष्पञ्च-भागिकम् ।
षड्भागं षड्विधं प्रोक्तं क्षुद्रमेकतलं भवेत् ॥
पञ्चषट्सप्तभागं स्यान्मध्यममेकतलं भवेत् ।
षट्सप्ताष्टविभागं स्यात् श्रेष्ठमेकतलं भवेत् ॥

पञ्चषट्सप्तभक्त्या च क्षुद्रं च द्वितलं भवेत्।
षट्सप्ताष्टभक्त्या च मध्यमं द्वितलेन (लमेव) च ॥
सप्ताष्टनवभागं स्यादुत्तमं द्वितलं न्यसेत्।
सप्ताष्टभक्तिकं कुर्यात्क्षुद्रं च त्रितलं भवेत्॥
नन्दपङ्क्त्यंश (शं) तेनैव मध्यमं त्रितलं भवेत्।
एकपङ्क्त्यर्कभागेन चोत्तमं त्रितलं भवेत्॥
अष्टनन्ददशांशं स्यात्क्षुद्रमाने चतुस्तले ॥
नन्दपङ्क्तिरुद्रभागं स्यान्मध्यमे च चतुस्तले ॥
पंङ्क्तिरे (क्त्ये) कादशार्कं भागं श्रेष्ठे चतुस्तले।
नन्दपङ्क्त्येकादशार्कं भागं सप्तविशालकम् ॥
कुर्यात्तु शिल्पविद्भिः क्षुद्रपञ्चतले न्यसेत्।
पङ्क्त्येकपङ्क्तिर(ङ्क्त्यै)कांशः(श)द्वा(त्रयोदशांशे विशालके ॥
एतत्तु मध्यमं पञ्चतलं हर्म्ये (ए) व कारयेत्॥
ईशद्वादशकैकार्कं मनुभागं तथैव च।
एतद्भागविशाले तु श्रेष्ठं पञ्चतलं भवेत्।
अर्कसैकार्क-भागं तु मनुपञ्चा (ञ्च) दशांशकम् ॥
एतद्वै पूषके कुर्यात्क्षुद्रषट्तलहर्म्यकम्।
सैकार्कांशं मुनिं चांशं तिथिषोडशभागिकम् ॥
षट्तलं मध्यमं प्रोक्तं कुर्याद्धर्म्यविशालकम्।
त्रिचतुः(तुष्) पञ्चषट्सप्तैकाधिकं दशभागिकम् ॥
श्रेष्ठं षट्तलमित्युक्तं यथा कुर्याद्विचक्षणः।
चतुर्दशांशंकपञ्चदशांशं षोडशांशकम् ॥
सप्तदशाष्टपङ्क्त्यंशं क्षुद्रसप्ततलं तु वा।
पञ्चा (ञ्च) दशांशकं चैव षोडशांशकमेव वा ॥
सप्ता (प्त) दशांशकं भागं चाष्ट पङ्क्त्यंश भागिकम्।
एतन्मध्यममाने तु कुर्यात् सप्तभूमिके ॥
विस्ताराष्टद्विभागं च तत्सप्तदशभागिकम्।
तदष्टादशभागं स्यान्नन्दपङ्क्त्यंशमेव वा ॥
श्रेष्ठं सप्ततलं प्रोक्तं कुर्यात्तत्र विचक्षणः।
सप्ता(प्त)दशांशकं चैव विस्तारा(रम)ष्टादशांशकम् ॥
नवपङ्क्त्यशकं चैव विशाले द्विदशांशकम्।
क्षुद्रमष्टतलं ह्येवं रम्यं कुर्यात्तु भागतः ॥
नवमेव द्विभागं स्यान्नन्दपङ्क्त्यंशकं तथा।
विंशत्यां(त्यं)शक(शमेक)माधिक्यं भागं हर्म्यविशालके ॥
मध्यमाष्टतलं कुर्याद्भागमानविमानके।

नवाधिकदशांशं स्याद्विंशतिश्चैकविंशतिः ॥
द्वाविंशतिश्च भागं च श्रेष्ठमष्टतलं तथा।
विंशत्यंशं विशाले तु चैक (सैकं) हस्तं तथैव च ॥
द्वाविंशतिं च भागं च त्रयोविंशतिभागिकम्।
क्षुद्रं नवतलं ह्येवं कुर्याद्भागं विमानके॥
एकविंशतिभागं च तद् द्वाविंशतिभागिकम्।
त्रयोविंशतिभागं स्याच्चतुर्विन्शतिभागिकम्॥
मध्यमं (ध्यं) नवतलं कुर्यान्मध्यमे तद्विशालके।
द्वाविंशतिं(तिश)च भागं स्यात्त्रयोविंशतिभागिकम्॥
चतुर्विन्शतिकं चे (चापि) पञ्चविंशतिकांशकम्।
श्रेष्ठं नवतलं प्रोक्तं कुर्यात्तु शिल्पवित्तमः॥
त्रयोविंशतिभागं स्याच्चतुर्विन्शतिभागिकम्।
पञ्चविंशतिभागं च षड्विंशतिभागिकम्॥
क्षुद्रं दशतलं कुर्याद्भागं समय (मध्य) विशालके।
चतुर्विंशतिकं चैव पञ्चविंशतिकं तथा॥
षड्विंशतिञ्च भागं च सप्तविंशतिभागिकम्।
मध्यमं(ध्यं) दशतलं कुर्याद्विमानस्य विशालकम् (के)॥
पञ्चविंशतिभागं स्यात्षड्विंशतिभागिकम्।
सप्तविंशतिभागं स्यादष्टाविंशतिभागिकम्॥
श्रेष्ठं पङ्क्तितलं कुर्याद्भागं हर्म्यविशालके।
षड्विंशतिश्च भागं स्यात्सप्तविंशतिभागिकम्॥
अष्टाविंशतिभागं स्यान्नवविंशतिभागिकम्।
क्षुद्रमेकादशतलं भागमानविशालके॥
सप्तविंशतिभागं च अ(तु चा) ष्टाविंशतिभागिकम्।
नवविंशतिकं चैव त्रिंशद्भागविशालकम्॥
एकादशतलं प्रोक्तं मध्यमं तद्विमानके।
अष्टाविंशतिभागं स्यान्नवविंशतिभागिकम्॥
तत्त्रिंशतिकं चैव चैकत्रिंशांशकं तथा।
एकादशतलं श्रेष्ठं हर्म्यं मूलविशालके॥
नवविंशतिभागं स्यात् त्रिंशदंशविशालके (कम)।
एकत्रिंशद्विभागं स्याद् द्वात्रिंशां (शदं) शकं भवेत्॥
क्षुद्रद्वादशभूमिः स्याद्भागमेवं प्रकल्पयेत्।
विशाले त्रिंशदंशं स्यादेकत्रिंशं च भागिकम्॥
द्वात्रिंशद्विभागं चैव त्रयस्त्रिंशं द्विभागिकम्।
मध्यमं द्वादशभूमिं(स्या) [च] भागमानं विशालके॥

द्वात्रिंशतिभागं स्यात् त्रयस्त्रिंशच्च भागिकम् ।
चतुस्त्रिंशतिभागं च पञ्चत्रिंशद्विशालके ॥
श्रेष्ठद्वादशभूम्याश्च भागं कुर्याद्विचक्षणः ।
कर्णपादस्य बाह्ये तु मध्यपादस्य मध्यमे ॥

## विमानेषु भूमिलम्ब-विधानं यथा

मय०
११. १–२७

भूमिलम्बविधानं तु वक्ष्ये संक्षेपतः क्रमात् ।
चतुरश्रमायताश्रं वर्तुलं च तदायतम् ॥
अष्टाश्रं च षडश्रं च द्व्यश्रवृत्तं तथैव च ।
एतद् विन्यासभेदं स्यात् क्षयवृद्धिविधानतः ॥
भूमिलम्भमिति प्रोक्तं त्रिचतुर्हस्तमानतः ।
द्विद्विहस्तविवृद्ध्यैकं भूमेर्मानं चतुष्टयम् ॥
पञ्चषड्ढस्तमारभ्य द्विद्विहस्तविवर्धनात् ।
द्वितले तु चतुर्मान रुद्रभानुकरान्तकम् ॥
सप्ताष्टहस्तमारभ्य द्विद्विहस्तविवर्धनात् ।
पञ्चदशरविकरान्तं त्रितले पञ्चमानकम् ॥
नवपङ्क्तिकराद् यावत् पक्षशोडशहस्तकम् ।
चतुष्पञ्चतलं प्रोक्तं चतुर्मानं सनातनम् ॥
एकहस्तं द्विहस्तं वा क्षुद्रमेकतलं स्मृतम् ।
युग्मायुग्मकरैर्मानैर्हस्ताधोनसमन्वितैः ॥
केचिद् वदन्ति देवानां मानुषाणां विमानके ।
विस्तारे सप्त षट पञ्च चतुस्त्र्यंशेऽधिकं त्रिभिः ॥
शान्तिकं पौष्टिकं जयदमद्भुतं सार्वकामिकम् ।
उच्छ्रायं द्विगुणं पादार्धाधिकं चापि सम्मतम् ॥
पञ्चदशकरव्यासाद्धीनं क्षुद्रविमानकम् ।
सप्ताष्टाधिकपङ्क्त्यादि द्विद्विहस्तविवर्धनात् ॥
आसप्ततेश्चतुर्भूम्यादीनि त्रीणि मतानि च ।
सप्तविंशतिभेदानि द्वादशान्तान्यनुक्रमात् ॥
त्रिचतुर्विंशतिरत्नेर्यावच्छतकरान्तकम् ।
त्रित्रिहस्तविवृद्ध्या तु त्रिनवोत्सेधमिष्यते ॥
एवमुत्कृष्टमानेषु श्रेष्ठमध्याधमं भवेत् ।
त्रिचतुष्पङ्क्तिहस्तादि द्विद्विहस्तविवर्धनात् ॥
पञ्चषष्टिहस्तान्तं सङ्ख्यया पूर्वसंस्कृतिः ।
चतुस्तलविमानादि द्वादशान्तं विधीयते ॥
सप्ताष्टपङ्क्तेरारभ्य त्रित्रिहस्तविवर्धनात् ।

पञ्चषण्णवतिर्यावदुच्चं प्रागिव सङ्ख्यया ॥
श्रेष्ठमध्यकनिष्ठं स्यादेवं मध्यकसेषु च ।
नवपङ्क्तिकरात् पञ्चषट्पञ्चाशत्करान्तकम् ॥
द्विद्विहस्तविवृद्ध्या तु चतुर्विंशतिसंख्यया ।
पञ्चादिद्वादशान्तानां हर्म्याणां विपुलं क्रमात् ॥
सप्ताष्टनवभूमानां धाम्नामुक्तप्रमाणतः ।
युञ्ज्याद् द्वादशभूम्यन्तं विमानं मानविद्वरः ॥
द्विः षट् त्रयोदश चमन्तषोडशचमं यथाक्रमम् ।
षट् षट् षट् सप्तपञ्चाशद्धस्तव्यासैः शिवोदितम् ॥
विस्तारं स्तम्भतो बाह्ये जन्मात् स्थूप्यन्तमुन्नतम् ।
केचिदाशिखरान्तं तु प्रवदन्ति तदुन्नतम् ॥
महतामुच्छ्रयो हस्तैरूद्देशः समुदाहृतः ।
तत्तद्व्यासे तु सप्तांशे निर्दैशोच्चं त्रियंशकैः ॥
विस्तारद्विगुणोत्सेधं युक्त्याल्पेषु प्रयोजयेत् ।
देवानां सार्वभौमानामाद्वादश तलं मतम् ॥
रक्षोगन्धर्वयक्षाणामेकादशशतलं मतम्
विप्राणां नवभौमं स्याद् दशभौममथापि वा ।
युवराजस्य राज्ञश्च पञ्चमस्यैव सप्तभूः ॥
तदाद्येकादशतलं षण्णां वै चक्रवर्तिनाम् ।
त्रिभूमं चतुर्भूमं वणिजां शूद्रजन्मनाम् ॥
राज्ञां पञ्चतलं वापि मतं पट्टभृतां तु तत् ।
शतहस्तसमुत्सेधात् सप्तत्या रत्निविस्तरात् ॥
नेष्यतेऽधिकं मानं तु सर्वथा तद्विचक्षणैः ॥
क्षुद्राल्पमध्यमवरादिविमानकानां
व्यामिश्रहस्तकयुजां विपुलोच्चभेदम् ।
युक्त्यायथोदितमजाद्यमरेश्वराणां
नृणां तथैव कथितं हि मया पुराणैः ॥

## गोपुर-लक्षणम्

### एकादिनवभौम-गोपुर-विधानम्—

वि० वा० २८. १-२६

देवालयानां भूनेतुर्भवनानां पुरामपि ।
ग्रामाणामपि दुर्गाणां शालानामपि सद्मनाम् ॥
मुखद्वारेषु कर्तव्यं गोपुरं शिल्पिभिः क्रमात् ।
शैलीमानं तु संयोज्यमिह स्थपतिभिर्मतम् ॥
अनुलोमादिमानं वा मार्गविस्तारमानकम् ।
कल्पनावर्गमानं वा गोपुरारम्भकर्मणि ॥

निश्चित्य मतिमाञ्छिल्पी भूमिलम्बनमाचरेत् ।
त्रिभागसादिमध्यान्तं विभज्यायाममानितम् ॥
भूतलं भूमिलम्बञ्च भूनिर्माणं समाचरेत् ।
मुखे मध्ये पृष्ठतले तद्वग वाऽधितक्षणम् ॥
रेखादिभिः समायुक्तमथवा बहुचित्रकम् ।
मध्यालिन्दसमोपेतमथवाऽङ्गलहीनकम् ।
एकभौमयुतं कार्यं क्वचिद् ग्रामादिषु स्थिरम् ॥
साधिष्ठानस्तम्भयुतं तदेवोन्नतकायकम् ।
वेदिकोपरिजालाढ्यं शिखरत्रयभासुरम् ।
त्रितलेन समायुक्तं कर्णनासादिमण्डितम् ॥
त्रितलं गोपुरं प्रोक्तं शिल्पविद्भिः पुरातनैः ।
ग्रामे देवालये स्थाप्यं ग्रामद्वारे विशेषतः ॥
मठमण्टपमुख्यस्य कल्पनस्य पुरःस्थले ।
ससोपानं चतुर्थादिभौमकल्पनशोभितम् ॥
बृहत्तलमुखोपेतं पञ्चाभि शिखरैर्युतम् ।
मध्याधिष्ठानसंयुक्तमग्रपट्टादिभूषितम् ॥
अलिन्दद्वयभागयान्तं सपादं वा विपादकम् ।
देवीनां भवनद्वारे देवानां च पुरामपि ॥
भूपालभवनद्वारे दुर्गाणां च मुखस्थले ।
ग्रामाणां च मुखद्वारे कल्पनीयं विशेषतः ॥
बहुतोरणसंयुक्तं तलदेवादिभूषितम् ।
तलस्तम्भयुतं वापि कल्पयेत्पञ्चभूमिकम् ॥
गोपुरं शिल्पविप्राज्ञो यथाशोभं यथाबलम् ।
तदेवात्युन्नततलं वैशाल्यादिसमन्वितम् ॥
अलिन्दस्तम्भसंयुक्तं तलस्तम्भैश्च धारितम् ।
द्वारद्वयं द्वारपट्टद्वयेन परिशोभितम् ॥
मध्याङ्गणद्वययुतं देहलीवेदिकायुतम् ।
तत्र सोपानपङ्क्तिर्वा चित्रं वा बहुरूपकम् ॥
अधोभागे द्वारयुग्मं किन्नरीयुग्मभासुरम् ।
मध्यभागे लतारूपं सगुच्छं सममेदुरम् ॥
मौलिभागे कुम्भगुच्छसरोजमुकुलान्वितम् ।
तिर्यक्पट्टिकयुग्मेषु मध्ये वा पार्श्वयोस्तथा ॥
शतपत्रं पङ्कजं वा हंसाकृतिरथापि वा ।
युक्तया मनोरहं स्थाप्यं सौवर्णं राजतं तु वा ॥
द्वारपट्टिकभागेषु किङ्किणीरेखिका मता ।

द्विद्विभागविभक्तेषु तलेषु बहुचित्रकम् ॥
देवरूपं स्थापनीयं नानाङ्गणमहाप्रपे ।
कूटे वा क्षुद्रवलभीभागे वा पुण्यदर्शकम् ॥
तत्रोपरि विमानादिशिखराणि च कल्पयेत् ।
कल्पनं चित्रकं वापि स्थानकं शालकं तु वा ॥
समञ्च विषमैर्हीनं युक्त्या मानेन तद्बुधः ।
योजयेदिष्टिकाभिश्च सुधाभिरपि सिद्धये ॥
पीतादिवर्णकलनं योजयेद्वा विचक्षणः ।
द्वादशाङ्गुलकं वापि चतुर्विंशतिकं तु वा ॥
पक्षयोरुभयोः पङ्क्तिं कल्पयेत्सुधयापि वा ।
मध्यद्वारतलं युक्त्या कारयेत्तलमानकम् ॥
प्रतिभौममिदं कार्यं कल्पनद्वयपङ्क्तिकम् ।
अश्वपादसमायुक्तं गजपादयुतं तु वा ॥
सकवाटं जलस्रावयोग्यं सर्वतलं मतम् ।
प्रकल्पयेद् दृढं शिल्पी यथाशोभं यथाबलम् ॥
सप्तभौमं गोपुरं वा नवभौमयुतं तु वा ।
देवालये पुरद्वारे क्वचिदन्यत्र वा बुधः ।
विशालमार्गमिलितं स्थापयेत्क्षेमसिद्धये ॥

प्राकार–लक्षणम्

वि० वा० ७६. १–१३

प्राकारकल्पनं कल्परचकं प्रथमं मतम् ।
सैन्यवेशो द्वितीयन्तु तृतीयन्त्वर्गलादिकम् ॥
पृथक्कल्पक्रियोपेतं कार्याय परिकल्पते ।
दुर्गेषु राजधान्याञ्च नगरेषु विशेषतः ॥
दैवं भौपमिति प्रोक्तं द्विविधं तत्प्रकल्पयेत् ।
स्थलकल्पनयोग्यं तत्कल्पयेद् दृढसन्धिकम् ॥
प्रतिलोमानुलोमाभ्यां मानं तस्य द्विधा भवेत् ।
पादपादप्रमाणेन वर्धयेन्नृपमन्दिरे ॥
दैवेऽधिकं प्रमाणं वा तत्समं वा क्वचिन्मतम् ।
दुर्गेषु कूपसंयुक्तं त्रुटनस्थानकान्वितम् ॥
क्षुद्रमण्डलयुक्तं वा स्थलमानवशान्नयेत् ।
मध्याङ्गुलिसमायुक्तं पिञ्छवर्धनसंयुतम् ॥
मस्तकेष्वपि वेष्टाकं पौषं नलिकसंयुतम् ॥
एवं भूपालभवनमन्दिरावरणस्थलम् ॥
आदौ वृद्धियुतं प्रायः क्रमाद्धीनं प्रकल्पयेत् ।

प्राकारकल्पनेष्वेवं दैविकेषु तथा मतम् ॥
चतुरश्रं व्यासहीनं दैविकं संप्रकल्पयेत् ।
मण्डलं वरणस्थानं शुभदं नृपमन्दिरे ॥
पर्वते वा भूमिभागे कल्पने विविधे मतम् ॥
समद्वारयुतं वापि विषमस्थानवेशकम् ॥
समसूत्रप्रमाणेन पादहीनादिभेदतः ।
हरेर्हरस्य धातुर्वा तत्तच्चिह्नं प्रयोजयेत् ॥
कोणेषु मध्यतालेषु पार्श्वे प्राकारकल्पने ।
सुधालेपितकैर्न्नयोजनैस्तक्षणैरपि ॥
मिथोबन्धनसंयुक्तं शैलसैष्टिककल्पनम् ।
भूमिलम्बनसंयुक्तपार्श्वोपान्ततलक्रियम् ।
स्थापयेन्मतिमान्युक्त्या रक्षाप्राकारकल्पनम् ॥
मान० बल्यर्थं परिवारार्थं शोभार्थं रक्षणार्थकं ॥
पञ्चप्राकारहर्म्याणामधुना वक्ष्यते क्रमात् ।
जात्यादिभेदहर्म्याणां तन्मानेन तु विन्यसेत् ॥
जातिप्राकारसर्वेषां हस्तमानेन योजयेत् ।
छन्दा सर्वशालानां प्रासादांशेन मानयेत् ॥
जालीनां जातिसालानां हर्म्यतारं विभाजिते ।
तदूर्ध्वे वेदिकादीनां ग्रीवमूर्ध्नि शिखान्तकम् ॥
समकन्धरवृद्धिः स्यात्पञ्चसालावसानकम् ।
छन्दादिपञ्चसालां च छन्दाद्यंशेन मानयेत् ॥
जीर्णप्रसादविस्तारे विन्यसेत्सकलं पदम् ।
आदिशालां ततः कुर्यादन्तर्मण्डलमीरितम् ॥
द्वितीयमन्तहारा च मध्यहारा तृतीयकम् ।
प्राकारं तच्चतुर्थं च कथितं तन्मयादिकम् ॥
ततः पञ्चमशालां च महामर्यादामीरितम् ।
पञ्चशालमिति प्रोक्तं तन्त्रविद्भिः पुरातनैः ॥
तत्पीठपदविन्यासश्चादिशालविशालके ।
तथा द्वितीयशाले तु स्थण्डिलपदं विन्यसेत् ॥
तन्तन्कुर्यात्तु शालायां तृतीये चोभयचण्डितम् ।
सुसंहितपदं मध्ये मर्यादाया विशालके ॥
महामर्यादाविस्तारे पदमीश्वरकान्तकम् ।
एवं तु जातिशालां च कुर्याद्धर्म्यवलात्सुधीः ॥
पेचकं मूलहर्म्ये तु छन्दादीनां प्रवक्ष्यते ।
प्रथमं तु महापीठं द्वितीयं चण्डितं पदम् ॥

तृतीयं भद्रसंयुक्तं ततः शालाबहिस्तथा ।
चतुर्थं सुप्रतीकान्तं पञ्चमं चन्द्रकान्तकम् ॥
एतच्छन्दं प्रकर्तव्यं विकल्पं तदिहोच्यते ।
छन्दप्राकारविस्तारे सार्धार्धेन कराधिकम् ॥
प्रथमात्पञ्चमान्तं स्यात्सार्धं युग्मकरान्तकम् ।
एवं विकल्पमानं स्यात्पञ्चशाला प्रकीर्तिताः ॥

विमान-वैशिष्ट्ये—

स्तूपिका
शि० र०
३६. १–६

स्तूपिकाश्चापि देवानामयुग्माश्चैव शोभनाः ।
युग्मा एव मनुष्याणां प्रशस्ताःसर्वधामसु ॥
शिखरे स्तूपिकास्थाने कार्या मूर्ध्नेष्टका तथा ।
तत आच्छाद्य शिखरं द्रव्यैः कार्तस्वरादिभिः ॥
स्तूपीदण्डं समाच्छाद्य कलशं चैव विन्यसेत् ।
पञ्चताराद् सपादं स्याद् स्तूपीकुम्भविशालकम् ॥
विस्तारेण सपादं वा सार्धं वा स्तूपिकोच्छ्रयम् ।
पङ्कजं तोरणस्रक् च चेपणं पत्रचेपणम् ॥
धृक् च कर्म्पं च पद्मं च वेत्रत्रितयकुड्मलौ ।
एवं तस्यैवावयवं यथाशोभं समाचरेत् ॥
चतुरष्टद्विरष्टाश्रं सधारं वर्तुलं तु वा ।
स्यादाकृतिः सुरोर्वीशविप्राणां च विशां मतम् ॥

स्तूपिकीलम्
(मूर्ध्नेष्टका)
मा० १८. ७१–८२

स्तूपिकीलायतं तारं लक्षणं वक्ष्यतेऽधुना ।
ऊर्ध्वभूम्या यथा पादं तस्या याम (मं) समं तु वा ॥
गलश्चाध्यकं तुङ्गं वा स्तूपिकीलायतं तथा ।
तद्विष्कम्भ सम(मं) व्यासं स्तूपिकीलस्य मूलके ॥
अथवाङ्गुलभागेन कीलमूलं विशालकम् ।
त्रिचतुर्विंशाङ्गुलं लोहे दारुकीलं तु (व) पूर्ववत् ॥
कीलायामं त्रिभागैकं मूले वेदाश्रमीरितम् ।
मध्ये चाष्टाश्रसंयुक्तं चाग्र(ग्रे) वृत्तावृत्तिस्तथा ॥
पञ्चाङ्गुलाग्रविस्तारं मूलाग्रान्तं क्षयं(य) क्रमात् ।
अथवा शिखराकारं कीलं मध्याकृतिस्तथा ॥
स्तूपिकीलविधृता(स्तृतिः) त्रिगुणा स्याद् बहिश्चरणाद्दैर्घ्यमुक्तम् ।
कीलाधार विस्तृतार्ध(र्धं) तद्घनं तत्कीलमूलमथ तत्र योज्यम् ॥
ताम्रजं चायसं दारु(जं) लमेव् कीलं प्रकल्पयेत् ।
खदिरं खदिरं चैव तिन्त्रिणी चारमेव च ॥
उक्तवद्दारु संगृह्य स्थापतिः स्थापकैः सह ।

तत्काले स्थापयेद्विद्वन् स्तूपिकीलस्य वक्रकम् ॥
ऋजुवक्रं च न भिन्नानि (न्नं च) तक्षणात्तत्त्केण तु ।
स्तूपिकीलमिदं प्रोक्तं तदूर्ध्वोष्टकलक्षणम् ॥
मानं प्रागुक्तवत्कुर्यात् पुंस्त्री चेष्टाकां विदुः ।
मूलाग्रं च समतारं तु चेष्टाका (कं) पुरुष (षं) स्मृतम् ॥
आनुपूर्व्यं कृशं तारं वनिता चेष्टका तथा ।
शिलाहर्म्ये शिलायुक्तं चेष्टकं चेष्टका तथा ॥
पुंविमानञ्च (नेच) पुरुषं वनिता (यां) वनितां क्षिपेत् ।
शिलासंग्रहकाले तु ज्ञापयेत्पुंस्त्रियं तथा ॥

लुपा
१८. ८३–८६

स्तूपि तुङ्गद्वयं वाथ विमानं च (नस्य) वशो (शाद) दयम् ।
एतत्तु शिखरोत्तुङ्गं तदर्धं गलतुङ्गकम् ॥
लुपारूपं शिखरं स्याद्ग्रीवान्तं तलपवासनम् ।
तत्तारादिमृणालान्तं प्रस्तयोक्तवङ्कले (लम्) ? ॥
तदूर्ध्वे दण्डकं कुर्याल्लुपमानं यथाक्रमम् ।
अम्बरं च व्ययं (वियज्) ज्योतिर्गगनं च विहायसि (यश्च) ॥
अनन्तं चान्तरिक्षं च पुष्कलं चाष्टधा लुपाः ।
देवानां हर्म्यके कुर्याद्युक्तमेवं पुरातनैः ॥
मही ज्या कश्यपी क्षौणी चोर्वी गोमावसुन्धरा ।
वसुधा चाष्टधा प्रोक्ता कारयेत् मानुषालये ॥
सर्वेषां देवतायोग्यं नराणां चोक्तयोग्यकम् ।
सुराणां मुक्तमानं यन्मर्त्यैं तन्नेष्य (ष्यं) यत्नतः ॥

## प्रासाद-निर्माणे इष्टापूर्तसिद्धिः

एवमेव चतुःश्रृङ्गश्चतुर्द्वारोपशोभितः ।
मेरुर्मेरूपमः कार्यो वाञ्छता शुभमात्मनः ॥
सर्वस्वर्णमयं मेरू यद् दत्वा पुण्यमाप्नुयात् ।
तमिष्टकाशैलमयं कृत्वा तदधिकं भजेत् ॥
जयं लक्ष्मीं यशःकीर्ति सर्वाणीष्टफलानि च ।
करोति सर्वतोभद्रं सर्वतोभद्रकः कृतः ॥
विधाय सर्वतोभद्रं देवानामालयं शुभम् ।
लभते परमं लोकं दिवि स्वच्छन्द-भाषितम् ॥
पुराणां भुपणार्थाय भुक्तिमुक्तिप्रदाः नृणाम् ।
श्रीधरं कारयेद् यस्तु कीर्त्यर्थमपि मानवः ।
इहैव लभते सौख्यमसुरेन्द्रत्वमाप्नुयात् ॥
भोगान भुक्त्वा पुमान् स्वर्गं नीयते चपरे पदे ।

सर्वपापविनिर्मुक्तः शान्तश्च स्यान्न संशयः ॥
प्रासादं ये सुभद्राख्यं कारयन्ति सुलक्षणम् ।
कल्पकोटिसहस्राणि भद्रं तेषां शिवाग्रतः ॥
कुर्याद् य एनं प्रासादमीदृशं सुरसुन्दरम् ।
स गौरिश्चं युगशतं सूर्यलोके महीयते ॥
भक्त्या ये कारयन्त्येनं नन्द्यावर्तमनुत्तमम् ।
विमानं शुभमारूह्य शक्रलोकं व्रजन्ति ते ॥
यः कुर्यात् कारयेद् यस्तु सिद्धार्थं सर्वकामदम् ।
स भवेत् सर्वकामाप्तिः शिवलोके च शाश्वतः ॥
यः शङ्खवर्धनं कुर्यात् स भुनक्ति चिरं महीम् ।
वशगा चास्य सततं भवेल्लक्ष्मी कृताञ्जलिः ॥
त्रैलोक्यभूषणं ब्रूमो वन्दितः त्रिदशैरपि ।
आश्रयं सर्वदेवानां पापस्य च विनाशकम् ॥
त्रैलोक्य-भूषणं कृत्वा त्रिदशानन्दकारकम् ।
कल्पान्तं यावदध्यास्ते पुरुषस्त्रिदशालयम् ॥
पद्माख्यः कारितो येन प्रासादो रतिवल्लभः ।
आत्मा समुद्धृतस्तेन पापपङ्कमहोदधेः ॥
पद्मबाहुः कृतो येन त्रिगर्भः कर्मभूषितः ।
स त्रिनेत्रप्रतापः स्यात् तुरङ्गव्रातनायकः ॥
अथ लक्ष्मीधरं ब्रूमो यं कृत्वा विजयं नरः ।
राज्यमायुष्यपूजाश्च गुणानाप्नोति चैश्वरान् ॥
लक्ष्मीधराख्यं प्रासादं यः कुर्याद् वसुधातले ।
अक्षये स पदे तत्त्वे लीयते नात्र संशयः ॥
रतिदेहमथ ब्रूमः प्रासादं सुमनोरमम् ।
अप्सरोगण-संकीर्णं कामदेवस्य मन्दिरम् ॥
एवं विधं यः कुरुते प्रासादं रतिवल्लभम् ।
सन्तोषयति कन्दर्पं स्याज्जनेषु स पुण्यभाक् ॥
सिद्धिकाममथ ब्रूमो प्रमथैरूपशोभितम् ।
धन-पुत्र-कलत्राणि कृते यत्राप्नुयान्नरः ॥
नन्दिघोषमथ ब्रूमो विपक्षभयनाशनम् ।
य एनं भक्तितः कुर्याद् स भवेदजरामरः ॥
यः करोति सुरानन्दं वरदास्तस्य मातरः ।
सुरास्तस्य ह्यनिस्तार्यमपमृत्युं हरन्ति च ॥
हर्षणः क्रियते यत्र स देशः सुखमेधते ।
क्षेमं गोब्राह्मणानां स्यात् पूर्णकामश्च पार्थिवः ॥

दुर्जयः क्रियते यत्र पुरे नगरेऽथवा ।
न भवेत् तत्र दुर्भिक्षं न च व्याधिकृतं भयम् ॥
ब्रूमस्त्रिकूटं ब्रह्माद्यैः सेवितं त्रिदशैस्त्रिभिः ।
फलं क्रतुसहस्रस्य येन मोक्षं च विन्दति ॥
प्रासादस्यास्य कर्ता च यावच्चन्द्रार्कतारकम् ।
तावदिन्द्र इव स्वर्गे क्रीडत्यप्सरसां गणैः ॥
भुक्त्वा भोगांश्च कैलासे कल्पान्ते यावदीप्सितम् ।
शार्वं पदमवाप्नोति शान्तं ध्रुवमनामयम् ॥
कृत्वा त्रिविष्टपं दिव्यं प्रासादं पुरभूषणम् ।
वसेत् त्रिविष्टपे तावद् यावदाभूतसंप्लवम् ।
तस्यान्ते तु परे तत्वे लयमाप्नोति मानवः
गुणवान् नृपतिर्यद्वद् भूषयत्यखिलां महीम् ।
क्षितिं विभूषयत्येवं प्रासादः क्षितिभूषणः
द्रव्येषु रेणुसंख्या या सुधायामपि यावती ।
तावद्युगसहस्राणि कर्ता शिवपदे वसेत् ।
तदेकेन विमानेन फलमाप्नोति मानवः
निर्मापयन् नरः कश्चिन्मुक्तकोणं महायशाः
संप्राप्नोति महासौख्यं विमुक्तः सर्वपातकैः ।
सर्वद्वन्द्वविनिर्मुक्तः सर्वकिल्विषवर्जितः ।
सर्वपापविनिर्मुक्तो भोगं मोक्षं च विन्दति ॥
इमं दिग्भद्रसंज्ञं यः प्रासादं कारयेत् पुमान् ।
शतक्रतुफलं सोऽपि लभते नात्र संशयः ॥
महाभद्रमिमं योऽत्र कारयेद् भक्तिमान् नरः ।
स स्वर्गे सुरनारीभिः सेव्यते मदनाज्ञया ॥
मलयाद्रिरयं प्रोक्तः प्रासादः शुभलक्षणः ।
य एनं कारयेत् तस्य तुष्यन्ति सकलाः सुराः ॥
वर्षकोटिसहस्राणि स्वर्गलोके महीयते ।
भुक्ति-मुक्ति-प्रदातारं··· ·········· ········ मण्डनम् ॥